न तत्पुरस्ताद्विनता भवेयुस्तच्छासनं नो शिरसा विधार्यम् ।
तस्यानुकम्पा नहि वाञ्छनीया लुभ्यन्तु नाक्रान्तजनाः कथंचित् ॥२५॥

आक्रामकके सामने कभी झुकना नहीं चाहिये। उनकी आज्ञाका स्वीकार नहीं करना चाहिये। उनकी दयाकी इच्छा न करे और कभी लोभमें न पड़े ॥ २६ ॥

द्विषन्तु नो वाक्रमितारमीषन्न तस्य काम्यं क्वचिदप्यनिष्टम् ।
त्याज्यं न तस्मै भयतोप्यसूनां जिघृक्षितं वस्तुबलेन तेन ॥२७॥

आक्रामकके प्रति जरा भी द्वेष नहीं करना चाहिये। कभी उनके अहितकी इच्छा न करे। बलात्कारसे उन्हें जो वस्तु लेनी हो उसे प्राणोंके भयसे भी कभी छोड़ना नहीं चाहिये ॥२७॥

रुग्णो भवेद्वापि पिपासयासावरिर्मुमूर्षुर्यदि भिक्षते वा ।
साहाय्यमद्धा सकलैः समस्तं देयं हि तस्मै गतशत्रुभावैः ॥२८॥

शत्रु यदि रोगी हो, प्याससे मरता हो और सहायताकी प्रार्थना करता हो तो शत्रुताको भुलाकर उसकी सब सहायता करनी चाहिये ॥ २८ ॥

एषोस्ति धर्म्यः सदनुग्रहीतृप्रजाजनस्यारिजनेनुकम्प्यः ।
पन्था अहिंसः परमद्य कालो नोपस्थितस्तत्सहयोगहान्यै ॥२९॥

शत्रुओंपर दया करना, यह सत्याग्रही प्रजाका धर्मयुक्त अहिंसक मार्ग है। परन्तु अभी तो असहयोग का समय आया नहीं है ॥ २९ ॥

इदं समीकं भवति ब्रिटेनजापानयोस्तेन भवेन्न योग्यः ।
केनापि सार्धं सहयोगभङ्गो धर्मोस्ति सत्याग्रहिणामयं हि ॥३०॥

यह युद्ध ब्रिटिश और जापानका है अतः किसीके भी साथ असहयोग करना अच्छा नहीं है। सत्याग्रही का यही धर्म है ॥ ३० ॥

सार्धं ब्रिटेनेन भवेदिदानीं संबन्धहानिः सकलास्तदानीम् ।
ब्रूयुः स्वदेशो भवति प्रदत्तो ज्ञानेन जापानकरेषु हन्त ॥३१॥

यदि इस समय ब्रिटिशके साथ असहयोग किया जाय तो लोग कहेंगे कि जानबूझ कर भारतको जापानके हाथमें दिया जा रहा है ॥३१॥

ब्रिटेनमार्गो नहि बाधनीय इत्येव जापानभुवा सह स्यात् ।
सम्बन्धहानिर्न हि कार्यमन्यत्सनातनः स्यादयमेव धर्मः ॥३२॥

अंग्रेजों के मार्गमें बाधा नहीं डालना यही जापानके साथ असहयोग हो जायगा । दूसरा कुछ नहीं करना, यही सनातन धर्म है ॥३२॥

साहाय्यमाहार्यमपीह नैव ब्रिटेनराज्यस्य कदापि कैश्चित् ।
प्रवृत्तयस्तस्य न रोधनीया इत्येतदाकाङ्क्षति सर्वदा तत् ॥३३॥

अंग्रेजकी भी कोई सहायता न करे, परन्तु उसकी प्रवृत्तिमें रुकावट नहीं डालनी चाहिये । वह चाहता भी इतना ही है ॥३३॥

सर्वान्समन्तादिह भारतीयान्विधाय दासान्यतते ग्रहीतुम् ।
साहाय्यमस्मन्न तदेषणीयं भवेत्कदाचिद्भरतप्रजानाम् ॥३४॥

ब्रिटिश हम भारतीयोंको सब प्रकारसे पराधीन बनाकर हमसे सहायता चाहता है । यह बात भारतीय प्रजाको इष्ट नहीं है ॥३५॥

जापानदेशो यदि भारतोर्वीं कृते विरोधेपि समाक्रमेत ।
नाश्यानि वस्तूनि कदापि नैव हठादपीहा फलतात्तदीया ॥३५॥

विरोध करनेपर भी यदि जापान भारतपर आक्रमण करे तो किसी वस्तुका नाश नहीं करना चाहिये । भले, उसकी इच्छा पूर्ण बने ॥३५॥

युद्धोपयोगीनि जनोपयोगीन्येवंविधानीह भवन्ति नूनम् ।
वस्तूनि तत्र प्रथमानि नाश्यान्यन्यानि कैश्चिन्न कदाचिदत्र ॥३६॥

दो प्रकारकी वस्तु हैं, एक तो युद्धकेलिये उपयोगी और दूसरी प्रजाके लिये उपयोगी । इनमेंसे युद्धोपयोगी वस्तुका तो नाश किया जा सकता है परन्तु जनोपयोगी वस्तुका नाश भारतमें कभी नहीं करना चाहिये ॥३६॥

जापानसेनाक्रमरोधनाय संबन्धभेदः सह तेन पूर्वम् ।
अल्पेषु लोकेषु हि सीमितः स्यात्साफल्ययोगात्पुनरर्धितः स्यात् ॥३७॥

जापानकी सेनाका आक्रमण रोकनेकेलिये जापानके साथ असहयोग प्रथम तो थोड़े ही लोगोंमें सीमित रहेगा। सफलता प्राप्त होने पर पुनः वह बढ़ाया जायगा ॥ ३७ ॥

**दास्याद्विमुक्तिर्भविता न तावद्यावन्न नारीनरकोटिभिः स्यात् ।**
**कर्तव्यमात्मीयमुपासितं वा नैष्कर्म्यनाशो न भवेच्च यावत् ॥३८॥**

जब तक करोड़ों स्त्री और पुरुष अपने कर्तव्यका पालन नहीं करेंगे अथवा जब तक अकर्मण्यताका नाश नहीं होगा तबतक देश दासतामेंसे नहीं ही छूटेगा ॥ ३८ ॥

**अयं धनी निर्धन एष एषा विचारणा वर्गविभाजनीया ।**
**महाप्रयत्नैरपसारणीया दुरर्थिका सा निखिलैरजस्रम् ॥३९॥**

यह धनिक है और यह निर्धन है, इस प्रकारका जो वर्गविभाजक विचार है उसका परिणाम भयङ्कर है। अतः सबको चाहिये कि इस विचारको प्रयत्नोंके द्वारा दूर करें ॥३९॥

**अयं मुसल्मानथ हिन्दुरेष ख्रिस्तीय एषोयमथान्य एव ।**
**श्रेष्ठोयमेतेषु कनिष्ठ एष विचार एषोपि परासनीयः ॥४०॥**

यह मुसलमान है, यह हिन्दु है, यह ईसाई है और यह कोई अन्य धर्मवाला है। इनमेंसे यह श्रेष्ठ है और यह नीच है, इस विचारको भी दूर कर देना चाहिये ॥४०॥

**स्पृश्यो भवेदेष न चैष एषा दुर्भावना सर्वजनैरपोह्या ।**
**दूरोग एषोस्ति समाजहानिप्रदो नृवंशस्य महत्त्वघाती ॥४१॥**

यह स्पृश्य है और यह अस्पृश्य है इस प्रकार की दुर्भावना का भी सबको त्याग करना चाहिये। यह बड़ा दुष्ट रोग है। इससे समाजकी हानि हो रही है और मानववंशका महत्त्व नष्ट हो रहा है ॥ ४१ ॥

**छिन्धीति भिन्धीति समग्रदेशे पिण्ढीति तृण्ढीति च सर्वदिक्षु ।**
**अनारतं भारत एष शब्दः पुनः पुनः श्रूयत एतदार्तम् ॥ ४२ ॥**

सारे देशमें और समस्त दिशाओंमें भारतमें रात दिन तोड़ो-फोड़ो, चूर्ण करो, यही शब्द बार बार सुनायी पड़ रहा है, यह बहुत करुण विषय है ॥ ४२ ॥

लुण्टाकलोकेभ्य इमाः समस्ताः प्रजास्तु रक्ष्या इति नो विवादः ।
प्रतिष्ठतां तिष्ठतु वा सिताङ्गराज्यं परं कार्यमिदं तु कार्यम् ॥ ४३ ॥

लुटेरोंसे प्रजाको बचना चाहिये ही, इसमें तो कोई विवाद ही नहीं है। अंग्रेजी राज्य जाओ या रहो, परन्तु रक्षाका कार्य तो करना ही है ॥ ४३ ॥

यावन्नैनद्भवति विहितं न वा कुरुते जनः,
कल्याणानां पथि विचरितुं किमप्यथवा शुभम् ।
आलस्यादि श्रिय इतिकरं स्वकीर्तिविलासिनी-
शोभाहन्तृ प्रहरति न चेन्नतावदुदेति शम ॥४४॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्य
पण्डितराजप्रणीतेपारिजातापहारे
द्वितीयः सर्गः

जब तक यह सब नहीं किया जायगा अथवा जब तक कल्याणमार्गमें जानेकेलिये कोई शुभ कर्म नहीं किया जायगा अथवा कीर्तिकी शोभाको नष्ट करनेवाले, तथा वैभवको समाप्त कर देनेवाले आलस्यादि दोषोंका नाश नहीं किया जायगा तबतक सुख और शान्तिका उदय नहीं होगा ॥४४॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराज
प्रणीतेस्वोपज्ञभारतराष्ट्रभाषाटीकासहिते पारिजातापहारे
द्वितीयः सर्गः

# तृतीयः सर्गः

निपीडितो ब्रैटिशसेनया कृतैरुपद्रवैः श्रीयतिभूमिभूमिपः।
गतेषु मासेषु कियत्सु निर्भयो गभीरयासौ गिरया व्यजूघुषत् ॥१॥

कुछ महीनोंके बाद ब्रिटिशसेनाने उपद्रव करना शुरू किया इससे दुःखी होकर श्रीमहात्माजीने निर्भय होकर गंभीर वाणीसे घोषणा की ॥१॥

प्रवर्तमाने समरे विदेशिनः कृता अनेके रिपवो निबन्धिनः।
इहैव तिष्ठन्ति ततः प्रतीयते भृता भवेद्भूः परदेशिसैनिकैः ॥ २ ॥

श्रीमहात्माजीने जो घोषणा की वह यह है—इस वर्तमान युद्धमें जितने परदेशी शत्रु कैद किये गये हैं वह सब यहाँ ही—भारतमें ही रखे गये हैं। इससे ज्ञात होता है कि यह भूमि परदेशी सैनिकोंसे भर जायगी ॥२॥

कुतो न वा भारतवर्षतश्चमूनराश्रिताः स्युः सितकायशासकैः।
इदं विचार्याद्य मनोऽस्थिरं भवत्यनारतं चिन्तयतो मयाधुना ॥ ३ ॥

अंग्रेज शासक भारतसे ही सैनिक क्यों नहीं इकट्ठा करते हैं ? इसे विचारकर सतत चिन्ता करते हुए मेरा मन चंचल हो जाता है ॥ ३ ॥

कुतो न संस्फोटकलाधिशिक्षणं जनेष्वदो भारतवर्षवासिषु।
प्रचारणीयं मनुते महोचितं सिताङ्गकानां सितशासनं बत ॥ ४ ॥

अंग्रेज़ी सर्कार भारतीयों में इस युद्धकलाके शिक्षणके प्रचारको उचित क्यों नहीं मानती ? ॥ ४ ॥

अमेरिकातः सकलां सहायतां समीहमानं सितशासनं सदा।
चिकीर्षु किं तन्निखिलं यथायथं न वेद्मि नैतत्परमेश्वराशिषा ॥ ५ ॥

अमेरिकासे ही सभी सहायता चाहनेवाला यह ब्रिटिश राज्य क्या करना चाहता है इसे मैं नहीं जानता सो बात नहीं है। ईश्वरके आशीर्वादसे मुझे सब विदित है ॥ ५ ॥

अमेरिकास्यां भुवि सर्वसम्पदि स्वकीयपादार्पणमीहते सदा।
निजाधिकारं प्रभुतां च भारते विताय निद्रामधिरोढुमिच्छति ॥ ६ ॥

सर्वसम्पत्तिपूर्ण इस देशमें अमेरिका सदा अपना पैर रखना चाहता है। भारतमें अपना अधिकार, अपनी प्रभुता फैलाकर वह सुखकी नींद सोना चाहता है ॥ ६ ॥

इदं न शक्यं यदि भाग्यदोषतः प्रभावमात्मीयमिहांशिकं दधत्।
यथाकथंचित्प्रभुतापरायणः प्रभुत्वमाप्यात्र कृती भविष्यति ॥ ७ ॥

यदि भाग्यदोषसे वह इतना नहीं कर सकता तो थोड़ा सा भी अपना प्रभाव यहाँ जमाकर थोड़ी सी भी प्रभुताको पाकर वह कृतार्थ बनेगा ॥७॥

जयाय चासां मिलिताधिपश्रियां परा तपस्या समपेक्षिता भवेत्।
असत्यवादान्न कथंचनापि भीर्मनस्यमूषां स्फुरतीति दुःखदम् ॥ ८ ॥

इन मित्र राज्योंको जीतनेकेलिये बड़ी भारी तपस्याकी आवश्यकता है। इन सबोंके मनमें असत्यभाषणसे ज़रा भी भय नहीं उत्पन्न होता यह दुःखकी बात है ॥ ८ ॥

महोद्यमो भारतदेशरक्षणे कृतोयमस्माभिरितिप्रलापकृत्।
निजार्थिनामुज्ज्वलचर्मधारिणां वचः सदा श्रूयत एव कर्णभित्॥ ९ ॥

"हमने भारतकी रक्षाकेलिये यह बहुत बड़ा प्रयत्न किया है" इस प्रकारका कान फोड़नेवाला इन स्वार्थी अंग्रजोंका वचन नित्य हम सुन रहे हैं।

प्रभुत्वमेषामिह भारतक्षितौ बलेन वाञ्छन्तितरामिमे सिताः।
ततो न चैषां वचनं मृषैव कैरपीह विश्वस्यमिति प्रचोदना ॥१०॥

यह अंग्रेज़ भारतपर अपना प्रभुत्व बलपूर्वक चाह रहे हैं। अतः इनके नितान्त उपर्युक्त मिथ्या वचनका कोई विश्वास न करें, यह मेरा उपदेश है ॥ १० ॥

यदि ब्रिटेनः परिहाय भारतं सभीति सिंगापुरवत्पलायताम्।
स्पृशेदशस्त्रां रहितां च हिंसया भुवं न जापानचमूर्विवेकिनी ॥११॥

यदि ब्रिटिश राज्य भयसे सिंगापुरके समान भारतको छोड़कर भाग जावे तो जापानकी विवेकी सेना अशस्त्र और अहिंसक देश ( भारत ) को कभी स्पर्श नहीं करेगी ॥ ११ ॥

भवन्ति यान्यत्र बलानि मुख्यतां गतानि तान्यद्य विहाय योधनम् ।
मिथः समेत्यैव समाहरन्ति चेत्क्रियाकलापानुदयो भवेद्ध्रुवः ॥१२॥

यदि विश्वकी मुख्य शक्तियाँ युद्धका त्यागकरके, इकट्ठी होकर कोई रचनात्मक कार्य करें तो उससे जगत्का कल्याण हो सकता है ॥ १२ ॥

यदीयमस्माकमुरुक्रमा भवेद्धरा स्वतन्त्रा भगवत्कृपाबलात् ।
यतेत विश्वस्य सुखाय शान्तये निजार्थतस्तुष्यति नो महाजनः ॥१३॥

यदि यह समर्थ हमारा देश भगवत्कृपासे स्वतन्त्र बने तो विश्वकी सुख—शान्तिकेलिये प्रयत्न करेगा । क्योंकि महापुरुष या महादेश केवल स्वार्थसे ही सन्तुष्ट नहीं होता ॥ १३ ॥

यदि ब्रिटेनो विवशो हि भारतं त्यजेत्पराभूतपराक्रमस्मयः ।
मनोरथाः प्रस्तरखण्डताडिता भवेयुरस्माकमसंशयं तदा ॥१४॥

यदि बहादुरीके गर्वके नष्ट हो जानेपर ब्रिटिश लाचार होकर भारतको छोड़ेगा तब तो हमारे सभी मनोरथ अवश्य ही चूर-चूर हो जावेंगे ॥१४॥

भवन्तु युद्धे निरता यथासुखं प्रतीचि दिश्येव निजेच्छया पुनः ।
त्यजन्तु चेद्भारतवर्षमुद्धुरं यशस्तदैषां जगतैव गास्यते ॥१५॥

यदि यह लोग स्वेच्छासे पश्चिम देशोंमें ही लड़ाई लड़ें और प्रतिष्ठित भारतको छोड़ दें तो समस्त जगत् इनका गुणगान करेगा ॥ १५ ॥

स्थिता ब्रिटेनाधिकृतौ हि मण्डलाः सुरक्षणीयाः सकलाः सुखेन ते ।
न विद्यते चेतसि मे मनागपि प्रतीतिरेषा शुभकामनाभृतः ॥१६॥

ब्रिटिशके अधिकारमें जितने भी देश हैं, उनकी वह लोग सुखसे रक्षा कर लेंगे, ऐसा तनिक भी विश्वास मेरे मनमें नहीं है ॥ १६ ॥

इमे प्रदेशा ब्रिटिशस्य दुर्वहा भवन्ति भारा इति नात्र संशयः ।
अयं च देशो यदि मुक्त आंग्लकैर्न शत्रुभिर्ग्राह्य इतो भविष्यति ॥१७॥

यह सब प्रदेश अंग्रजोंकेलिये बहुत बड़े भार हैं, इसमें सन्देह नहीं है। यदि अंग्रेज इस देशको छोड़ दें तो फिर इसे कोई भी शत्रु लेनेकी इच्छा नहीं करेंगे ॥ १७ ॥

न भारतं कश्चन रक्षितुं क्षमो बलाद्विधायात्मवशे कथंचन ।
अखर्वगर्वो मरणाय निश्चितं भवेत्समेषां परमं हि साधनम् ॥१७॥

भारतको बलसे किसी प्रकार अपने वशमें रखकर कोई, उसे बचा नहीं सकता। यदि किसीको बहुत बड़ा अभिमान हो कि मैं ऐसा कर सकता हूँ तो वह अभिमान उसके नाशका ही कारण होगा ॥ १८ ॥

पुरा स्थितिस्थापकता हि याभवद्ब्रिटेनराज्ये न वितिष्ठतेद्य सा ।
क्षणे क्षणेदः परिवर्तते जगन्न जातु किंचित्सततं स्थिरं भवेत् ॥१९॥

ब्रिटिशराज्यमें पहले जो स्थितिस्थापकता थी—रक्षणका सामर्थ्य था, वह अब नहीं रहा। यह जगत् तो क्षण-क्षणमें परिवर्तनशील है। यहाँ कोई भी वस्तु सदा स्थिर नहीं रहती ॥ १९ ॥

मुहुर्मुहुर्वाचमवोचमर्थतः कृतानि पापानि हि यानि कानिचित् ।
सितेन भूपेन च तत्प्रसूतयो भवन्तु भोग्या अपि तेन केवलम् ॥२०॥

मैंने बार बार सत्य ही कहा है कि अंग्रेजराजाने जो जो पाप किये हैं, उनके फल भी केवल उसीको भोगने पड़ेंगे ॥ २० ॥

प्रणीय ता ऐशियिकीस्तथाफ्रिकीः प्रजा विधेया बलतो नृपा इमे ।
अघं महत्ते समचैषुरात्मनो वधाय जाड्यापहता दुरुद्धरम् ॥२१॥

इन राजाओंने एशिया और अफ्रिकाकी प्रजाको बलसे पराधीन बनाकर जो महान् अनिवार्य पाप किया है वह तो उनके नाशका ही कारण है ॥ २१ ॥

गतत्रपैर्दीनधनापहारिभिः पदातिहत्यात्र मनुष्यतावृतिम् ।
कृतं तु यत्तस्य फलप्रदातये प्रभुः स नाज़ीं प्रजिघाय सर्वदृक् ॥२२॥

गरीबोंकी सम्पत्तिको लूटनेवाले इन निर्लज्जोंने मनुष्यताकी मर्यादाको पैर तले कुचलकर जो कुछ किया है उसीका फल देनेकेलिये सर्वद्रष्टा भगवान्ने नाजियोंको भेजा है ॥ २२ ॥

वरं भवेद्भारतवर्षमापदां महासमुद्रे पतितं चिराय तु ।
इतोचिरेणैव सितैर्विलज्जितैः प्रयाणमाराधयितव्यमेव तैः ॥२३॥

भारतवर्ष भले ही चिरकाल तक विपत्तिमहासागरमें डूबता रहे, परन्तु इन निर्लज्ज गोरोंको तो यहाँसे अतिशीघ्र जाना ही चाहिये ॥ २३ ॥

न यावदेते कुधियः सितत्वचः प्रयान्ति देशात्परिमुच्य शासनम् ।
न तावदस्यास्ति सुरक्षणं कथंचनापि साध्यं मतिमद्भिरप्यथ ॥२४॥

जब तक यह दुर्बुद्धि अंग्रेज राज्य छोड़कर भारतसे चले नहीं जाते हैं तब तक कोई बुद्धिशाली भी इस देशका रक्षण नहीं कर सकता ॥ २४ ॥

श्वसन्ति ये भूपतयो निराश्रयाः समं समैस्तैः कृतसन्धयो वयम् ।
कुतो व्रजेमेति वचो विवृण्वतां मृषाप्रलापोस्ति सितत्वचामिह ॥२५॥

अंग्रेज जो यह कह रहे हैं कि भारतीय राजा सब निराश्रित हैं, उनके साथ सर्कारने सन्धि कर रखी है, उन्हें छोड़कर हम यहाँसे कैसे जायँ ? यह सब इनका मिथ्या प्रलाप है ॥ २५ ॥

भवन्ति येल्पे यवनादिका इह हिताय तेषामपि नः स्थितिर्भवेत् ।
वचस्तु तेषामिदमादि मन्यतां मुधैव तत्त्वं न किमप्यवेक्ष्यते ॥२६॥

अल्प संख्यक जो मुसलमान् आदि हैं उनके हितकेलिये भी हमें यहाँ रहना ही चाहिये। यह सब इनके असत्य वचन हैं। इनमें कुछ भी तत्त्व नहीं है ॥ २६ ॥

ब्रिटेनसाम्राज्यमिदं महद्दृढं विधातुकामैर्मधुरा इमा गिरः।
मुधा सदोच्यन्त ऋतं न किञ्चनेत्यवैतु सर्वा जनता प्रवञ्चिता ॥२७॥

अंग्रेजी राज्यको सुदृढ़ बनानेकेलिये यह सब मीठी-मीठी बातें राज्य किया करता है। ठगी गयी हुई समस्त प्रजाको जानना चाहिये कि इसमें कुछ भी सत्य नहीं है ॥ २७ ॥

भवन्ति शस्त्रास्त्रभृतो धराभृतः स्वरक्षणे भारतवर्षतः क्षमाः।
निरस्त्रशस्त्रात्तदवैतु भारती प्रजा सिताङ्गीयगिरं गरं परम् ॥२८॥

राजा लोग तो अस्त्रशस्त्रोंसे सज्ज हैं अतः अस्त्रशस्त्र हीन भारतसे अपनी रक्षा करनेकेलिये वह समर्थ हैं। इसलिये भारतीय प्रजाको इन गोरोंकी बातें केवल विष समझना चाहिये ॥ २८ ॥

भवेद्यदा शासनमत्र भारतं तिरोदधीतैव कपोलकल्पना।
चिरं न तिष्ठेदसतामसद्वचो रवावुदीते न कुहा श्रयेत्स्थितिम् ॥२९॥

जब यहाँ भारतका अपना शासन होगा तब यह सब कपोलकल्पना समाप्त हो जायगी। झूठोंके दुष्टोंके झूठे वचन बहुत काल तक नहीं टिकते। सूर्य के उदय होनेपर धूमस नहीं रह जाता ॥ २९ ॥

भवेयुरेते न सितत्वचो यदि प्रपञ्चिनो नात्र भयं कुतोपि नः।
गतेषु चैतेषु कुतोस्त्वनल्पता कुतोल्पता वा पदमादधात्विह ॥३०॥

यदि यह प्रपंची गोरे यहाँ न हों तो हमें किसीसे भी भय नहीं है। इनके चले जानेपर बहुसंख्यक और अल्पसंख्यककी बात यहाँ किसी तरहसे भी नहीं रह सकती ॥ ३० ॥

विभज्य सर्वाः प्रकृतीः स्थितिश्रितां सितत्वचां चेद्गमनं भवेदितः।
समे मनुष्याः समवेत्य भारताः सहैव वत्स्यन्ति यथा सहोदराः ॥३१॥

सब प्रजाओंको अलग-अलग करके ही राज्य करनेवाले गोरे यदि यहाँसे चले जायँ तो सभी भारतीय सगे भाईके समान यहाँ साथमें ही निवास करेंगे ॥ ३१ ॥

तदैव जातीयनिबन्धना भिदा भवेदनल्पाय मनस्तुदाय नः ।
तरीतुमापज्जलधीनुदृष्यति कला तदास्मान्मतिमत्त्वमेष्यति ॥३२॥

इनके चले जानेपर ही यह सब जातीय भेद हमको अत्यन्त दुःखद प्रतीत होंगे। तभी विपत्तियोंके सागरोंको तरनेकी कला हमें प्राप्त होगी और तभी हममें बुद्धिमत्ता भी आवेगी ॥ ३२ ॥

न जर्मनाद्यैर्धनलुब्धकैस्तदा विधास्यते स्प्रष्टुमिमां भुवं हृदि ।
कदापि कांक्षा तनुरप्यसम्भवा क्षते क्षतिः स्यादिति लोकगीतिका॥३३॥

इनके चले जानेपर धनके लोभी जर्मनी आदि देश भी इस पृथिवीको स्पर्श करनेकी मनमें तनिक भी इच्छा नहीं करेंगे। लोकमें भी तो यही प्रसिद्ध है कि घावमें ही घाव लगता है ॥ ३३ ॥

भवेदियं भूर्यदि कैरपि क्वचिद्विमानिता भारतवासिभिस्तदा ।
उदस्य तेषां मनसि प्रफुल्लितान्महाभिलाषाञ्जय आप्स्यते महान् ॥३४॥

उस समय यदि इस भारतभूमिका कोई अपमान करेगा तो भारतवासी उसकी फूलती फलती इच्छाओंका नाश करके महान् विजय प्राप्त करेंगे ॥ ३४ ॥

अथ तत इह सैनिकान्परदेशिना-
मणुपरिमिति अप्यहो कलये न हि ।
सुखभृत उत मन्यतेथ मयाद्य न-
स्तनुषु समभवत्क्षयो नु विनाशकः ॥३५॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्य
पण्डितराजप्रणीतेपारिजातापहारे
तृतीयः सर्गः

इसीलिये मैं इन परदेशी सैनिकोंको अणुमात्र भी सुखकारक नहीं मानता हूँ। प्रत्युत मैं मानता हूँ कि हमारे शरीरमें विनाशक क्षयरोग उत्पन्न हो गया है ॥ ३५ ॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराज
प्रणीतेस्वोपज्ञराष्ट्रभाषाटीकासहितेपारिजातापहारे
तृतीयः सर्गः

# चतुर्थः सर्गः

एवं सिनाङ्ग्ध्वजिनीविरोधने विस्पष्टहेतुं जनतां विबोध्य सः ।
आङ्ग्लान्पुना रम्यमुवाच सद्वचो निर्भीक एतत्परिणाम सौख्यदम् ॥१॥

अंग्रेजी सेनाके विरोध करनेका इस प्रकार स्पष्ट कारण जनताको समझाकर निर्भीक होकर पुनः अंग्रेजोंको परिणाममें सुखद यह वचन श्री महात्माजी बोले ॥ १ ॥

आरब्धमादौ मम दक्षिणाफ्रिकादेशे यदा कार्यमलेखिषं तदा ।
आङ्ग्लान्समस्तानधिकृत्य सत्फलं पत्रं तथैवाद्य लिखाम्यहं पुनः ॥२॥

दक्षिण अफ्रिकामें जब मेरे कार्यका आरम्भ हुआ तब मैंने अंग्रेजोंको एक पत्र लिखा था। वैसे ही आज भी मैं उनको फिर एक पत्र लिखता हूँ ॥ २ ॥

राज्ये सितानामिह भारतक्षितावालोक्यते नो निपुणं विलोकिते ।
कोपि प्रभावो जनतागिरां क्वचिन्मूल्यं न वा तोषकरं कदाचन ॥३॥

भारतमें अंग्रेजीराज्यमें सूक्ष्मदृष्टिसे देखनेपर भी किन्हीं प्रजाजनोंके वचनका प्रभाव अथवा संतोषकारकमूल्य-आदर देखनेमें नहीं आता है ॥३॥

हिंसेतरे रम्यतरे च शासने सर्वप्रजानां वचनं भवेच्छ्रुतम् ।
तच्चेद्भवेद्दूषणहीनमञ्जसा लोकोपकारक्षममर्हणान्वितम् ॥४॥

जिस राज्यमें हिंसा नहीं है और जो रमणीय राज्य होता है उसमें सभी प्रजाजनोंकी बात सुनी और विचारी जाती है यदि वह बात निर्दोष, लोकोपकारी अतएव आदरपात्र हो ॥ ४ ॥

हिंसादिना यद्यपि शक्यते ह्यसौ पीड्यः प्रभावः क्वचिदप्यनेहसि ।
पीडा परं सा क्षणमेव तिष्ठति च्छाद्यो हि वह्निर्वसनेन नो चिरम् ॥५॥

यद्यपि कभी वह प्रभाव हिंसा आदिके कारण दब जा सकता है—

तिरोहित हो सकता है परन्तु वह तिरोधान, वह दबाव थोड़ी ही देर रहता है। क्योंकि कपड़ेसे आग बहुत देर तक ढाँकी नहीं जा सकती ॥५॥

हिंसाप्रदेशात्परमस्मि सर्वथा दूरे स्थितस्तेन समादृतं भवेत्।
सर्वं वचः सर्वजनस्य वा मया हीरं न चार्हेत्कथमप्युपेक्षणम् ॥६॥

मैं तो हिंसासे सर्वथा बहुत दूर रहा हुआ हूँ अतः मैं सबकी सब बातका आदर करता हूँ। हीरेकी कभी भी उपेक्षा नहीं की जा सकती ॥६॥

ये चाफ्रिकायां बहवः प्रदेशका आङ्ग्लैः कृताः स्वस्य वशेखिलान्समान्।
सद्यो विहातुं ब्रिटिशा मयाखिलाः प्राथ्यन्त आशास इदं कृतं भवेत् ॥७॥

अफ्रिकामें जो बहुतसे प्रदेश अंग्रेजोंने अपने वशमें रख छोड़े हैं उन सबको शीघ्र छोड़ देनेकेलिये मैं अंग्रेजोंसे प्रार्थना करता हूँ। आशा है कि वह ऐसा करेंगे ॥ ७ ॥

अध्येशियं या स्ववशीकृता भुवस्ताश्चापि हित्वा सपदि प्रयान्तु ते।
श्रीभारतादात्महिताय सत्वरं गच्छन्तु नास्त्यत्र विलम्बकारणम् ॥८॥

एशियामें जो भूमि उनके अधिकारमें है उसे शीघ्र छोड़कर वह चले जायँ। भारतसे तो अपने हितकेलिये ही शीघ्र चले ही जाना चाहिये। विलम्ब करनेका कोई कारण नहीं है ॥ ८ ॥

अभ्यर्थनायां निखिलैः सिताङ्ककैः साहाय्यमस्यां मम संविधीयताम्।
नात्स्यादिवादानपनेतुमुद्धताँल्लोकानुवृद्ध्या अपि चापयान्तु ते ॥ ९ ॥

मेरी इस प्रार्थनामें सब अंग्रेज मेरी सहायता करें। उद्धत नाज़ीवाद, फासीवाद आदिको दूर करनेकेलिये तथा लोकसमृद्धिकेलिये भी अंग्रेज़ यहाँसे चले जायँ ॥ ९ ॥

एतेषु यातेषु सपत्नयोजिता स्यान्निष्फला क्रूरतराद्य योजना।
ग्रेटब्रिटेनेपि निरर्थिका भवेत्सा सर्वथैवेति विभाति मे हृदि ॥१०॥

यदि अंग्रेज यहाँसे चले जायँ तो शत्रुओंने जो अत्यन्त क्रूर योजना

बना रखी है वह निष्फल हो जायगी। ग्रेटब्रिटेनमें भी वह निरर्थक होगी, ऐसा मेरे हृदयमें भास रहा है ॥ १० ॥

**सेनानिमित्तेन महाधनव्ययं ते यं सहन्ते जडतावशादिह।**
**नूनं जघन्यस्तमपेक्ष्य भारतद्रव्यागमोस्तीति विभाति किं न वः ॥११॥**

मूर्खतावश सेनाके कारण जितना महान् धनव्यय इन्हें करना पड़ता है उसकी अपेक्षा अवश्य ही अत्यन्त अल्प द्रव्यागम भारतसे होता है। क्या आप लोगोंको ऐसा नहीं प्रतीत होता है? ॥ ११ ॥

**तेषामितः स्याद्गमनं हिताय नः शान्त्यै सुखायाथ सितत्वचामपि।**
**धर्म्येण चित्तेन विचार्यतां यदि सेत्स्यत्यदो मे वचनं यथार्थकम् ॥१२॥**

अंग्रेज़ोंका यहाँसे चले जाना हमारे हितकेलिये तो होगा ही परन्तु उन्हें भी सुख और शान्ति मिलेगी। यदि धर्मयुक्त मनसे विचार करें तो मेरा कथन यथार्थ ही सिद्ध होगा ॥ १२ ॥

**ये राजनीतौ कुशलाः सितत्वचो जापानयुद्धे भरतेन पोषिताम्।**
**एतामपि क्ष्मां समभिश्रयन्मुधा ते तामनापृच्छ्य परार्थघातिनः ॥१३॥**

राजनीतिमें निपुण जिन अंग्रेजोंने जापानयुद्धमें इस देशको भी बिना किसीसे पूछे सम्मिलित कर दिया है वह दूसरोंके हितके विघातक हैं ॥१३॥

**मन्यन्त एतां सितवर्ष्मका भुवं स्वं स्वीयमित्येव यदृच्छयामुखात्।**
**वाणीमसत्यामपि शक्नुवन्ति ते वक्तुं त्रपन्ते न मनाक्कथंचन ॥१४॥**

इस देशको अंग्रेज लोग अपनी निज सम्पत्ति मानते हैं। इसलिये मनमें जो आता है, सत्य-असत्य वचन वह बोल सकते हैं। उन्हें जरा भी शर्म नहीं आती है ॥ १४ ॥

**नास्त्यैव युद्धस्य परन्तु सर्वथा कस्यापि तस्याथ न पक्षपातिताम्।**
**यातः कदाप्यस्मि तथापि गृह्यते मत्तोपि धिक्सामरिकं करं हिते ॥१५॥**

मैं स्वयं इसी युद्धका नहीं प्रत्युत किसी भी युद्धका पक्षपाती नहीं हूँ तो भी मुझसे युद्धका कर लिया जाता है। धिक्कार है ॥ १५ ॥

प्रत्येकपत्रे पुटिते पणद्वयीमेकं च पत्रेपुटितेधिकं पणम् ।
प्रत्येकमेते क्षणदीयवृत्ततश्चाणद्वयं मद्धठतोपि गृह्णते ॥१६॥

प्रत्येक पुटितपत्र ( लिफ़ाफे ) पर दो पैसे अधिक, प्रत्येक अपुटितपत्र ( कार्ड ) पर एक पैसा अधिक और प्रत्येक क्षणदीयवृत्त ( तार ) पर दो आने पैसे अधिक हठात् मुझसे यह लेते हैं ॥ १६ ॥

चित्तार्तिकृच्चित्रनिदर्शनं मया संक्षेपतोदर्शि विखिन्नचेतसा ।
श्वेतप्रजासृष्टविपत्पयोनिधेर्न कोपि पारं व्रजितुं क्षमो भवेत् ॥१७॥

चित्तको दुःखित करनेवाले चित्रका संक्षेपसे मैंने यह उदाहरण दिखाया है । अंग्रेजी प्रजाने विपत्तिके जिस समुद्रको पैदा किया है उसके पार जानेको कोई भी समर्थ नहीं है ॥ १७ ॥

एतैर्निकृष्टैर्यतनैः सितत्वचः संगृह्य वित्तं बहुलं प्रजार्जनात् ।
एतत्प्रदत्तं भरतप्रजाजनैरित्येवमादि प्रथयन्ति नित्यशः ॥१८॥

ऐसे नीच उपायोंसे अंग्रेज प्रजाकी कमाईमेंसे बहुत सा धन इकट्ठा कर लेते हैं । पश्चात् कहते हैं कि भारतीयप्रजाने इतना धन दिया है ।१८।

अन्यानि वस्तून्यपि तेनया दिशा युद्धाय गृह्णन्ति च भारतावनेः ।
दानत्वतस्तानि न बुद्धिमज्जनैर्गण्यानि धौर्त्येन समर्जितानि हि ॥१९॥

इसी प्रकारसे वह दूसरी चीजें भी भारतसे युद्धकेलिये लेते हैं । धूर्ततासे प्राप्त किये हुए धनको समझदार लोग कभी श्रद्धासे दिया हुआ दान न समझें ॥ १९ ॥

श्वेताधिपत्यं सुदृढं समाततं श्रीभारतेस्तीति भिया पराहताः ।
तैरुक्तमाराद्भरतप्रजा इमाः कुर्वन्ति निष्प्रेम यथाकथंचन ॥२०॥

भारतमें अंग्रेजोंका आधिपत्य सुदृढ़रूपसे फैला हुआ है इस भयसे भारतीयप्रजा, विना प्रेमके भी जैसा अंग्रेज कहते हैं, कर देती है ॥२०॥

देशोयमस्माभिरजेयविक्रमैरास्ते जितस्तेन न एव सर्वथा ।
मत्वेति शस्त्रास्त्रबलेन भीतिकां संदर्श्य सर्वा विवशीकृताः प्रजाः ॥२१॥

इस देशको हमने अपने अजेय पराक्रमसे जीता है अतः सब प्रकारसे यह हमारा ही है, ऐसा मानकर, अस्त्र-शस्त्रके बलसे भय दिखाकर प्रजाको पराधीन इन्होंने बना रखा है ॥ २१ ॥

**तस्मान्निरस्त्रा अपि भारतप्रजाः शस्त्रास्त्रसज्जैः सितचर्मभिः सदा ।**
**युध्यन्त एवात्र परं गलद्धियः श्रेयो न पश्यन्ति निजं कथंचन ॥२२॥**

इसीलिये भारतीय प्रजा निरस्त्र है तो भी अस्त्र-शस्त्रसे सुसज्जित अंग्रेजोंसे सदा लड़ती ही रहती है। परन्तु अंग्रेज इसका विचार नहीं करते। निर्बुद्धि पुरुष कभी अपना कल्याण नहीं सोचता ॥ २२ ॥

**वीर्येण तेषां निगृहीतवर्ष्मणां युद्धे प्रदर्श्यापि पराक्रमं परम् ।**
**लाभो भवेद्भारतवासिनां नहीत्येवं विचारो हृदये न दुष्कृताम् ॥२३॥**

भारतवासियोंके शरीरको बलपूर्वक वशमें किया गया है। ऐसे लोगोंके पराक्रमको युद्धमें दिखाकर भी उनको क्या लाभ हुआ, यह विचार पापात्माओंके हृदयमें नहीं आता ॥ २३ ॥

**जापान आक्राम्यतु वा न वा क्ष्मामेतां परं श्वेतबलेन नाशिताः ।**
**प्रासादहर्म्यावसथादिका गृहा नोदेति दीनेषु दया कृतांहसाम् ॥२४॥**

जापान इस देशपर आक्रमण करे या न करे परन्तु अंगरेजोंकी सेनाने महल, हवेली, छोटे बड़े मकानोंका तो नाश कर ही दिया है। दीनोंपर पापियोंको दया नहीं आती ॥ २४ ॥

**आच्छिद्य गेहा बहवो विपत्स्पृशां नृणां निजायत्तकृता हठादिह ।**
**ये स्वामिनस्तद्भवनाधिवासिनः सेना बलात्तान्बहिराकृषन्ति ही ॥२५॥**

दुःखीजनोंके घरोंको छीनकर अंग्रेजीसेनाने बलात्कारसे अपने अधीन कर लिया है। उनमें घरोंके जो स्वामी हैं या जो उनमें रहनेवाले हैं, सेना उनको बलसे बाहर काढ़ती है। यह आश्चर्य है ॥ २५ ॥

**रिक्तानि कर्तुं भवनानि तत्कृते स्वल्पं धनं श्वेतजनैः प्रदीयते ।**
**तस्मान्न तैस्तेन धनेन किंचन कर्तुं तथा कारयितुं च शक्यते ॥२६॥**

घरोंको खाली करनेकेलिये, उसके बदलेमें अंग्रेज लोग बहुत ही अल्प धन दे रहे हैं। अतः वह लोग उस धनसे न तो कुछ कर सकते हैं, न करा सकते हैं ॥ २६ ॥

**गेहाद्यभावात्स्वकुटुम्बरक्षणे न स्युः समर्था भरतात्रनिस्थिताः।**
**निर्मातुमेते ह्युटजादि कुत्रचिद्भ्राम्यन्ति वासं परिमार्गयन्ति च ॥२७॥**

भारतीय प्रजा इस प्रकार घरके अभावसे अपने परिवारकी रक्षाकेलिये झूँपड़ी आदि बनानेमें असमर्थ है। कहीं भी वह भटकती है और रहनेकेलिये स्थान ढूँढ़ती है ॥ २७ ॥

**स्थानं गतं पैतृकमस्तमाप्नुवन्स्रोतांसि सर्वाणि कुटुम्बिनो जनान्।**
**त्रातुं च भर्तुं बत तेन दुःखिता याताः प्रजा हा सकला निराश्रयाः ॥२८॥**

पिता आदिका उपार्जित स्थान गया, कुटुम्बी लोगोंके रक्षण, भरण आदिके सब साधन गये। इससे प्रजा निराश्रय होकर दुःखित हो गयी है ॥ २८ ॥

**लोका विपन्ना गतगेहभूमिकाः किंकृत्यमूढा धृतनेत्रवारिकाः।**
**मां प्राप्य दुःखानि निवेदयन्ति ते पृच्छन्ति पन्थानमुपैतुमेव शम् ॥२९॥**

लोगोंके घर गये, जमीन गयी। लोग दुःखी हैं। क्या करें, उन्हें कुछ सूझता नहीं है। वह रोते हैं। मेरे पास भी आकर अपने दुःख सुनाते हैं और शान्तिका मार्ग पूछते हैं ॥ २९ ॥

**सोढुं पतन्तीर्विपदो धृतेर्बलात्तानादिशाम्यद्य परन्तु कोटयः।**
**नार्यो नरा हन्त विरुन्धतेनिशं मां किन्तु कुर्य्यां किमिहावशोधुना ॥३०॥**

मैं उन्हें धैर्यके साथ आती हुई विपत्तियोंको सहन करनेका उपदेश करता हूँ। परन्तु करोड़ों नर-नारी मेरा विरोध करती हैं। किन्तु मैं तो लाचार हूँ, कर ही क्या सकता हूँ ॥ ३० ॥

**येनुव्रता मां सततं मया च ते गता द्रुतं दुःखकशाभिताडितान्।**
**आश्वास्य तानुत्तमजीविकार्जने ज्ञप्ता नियोक्तुं निजधर्मपूर्वकम् ॥३१॥**

जो लोग सतत मेरे अनुयायी हैं उनको मैंने आज्ञा दी कि वह उन संकटग्रस्त लोगोंको आश्वासन देकर स्वधर्मपूर्वक उत्तमजीविका उत्पन्न करानेकेलिए जायँ, और वह गये ॥ ३१ ॥

या दुर्दशा आरचयन्सिता जना एषां न चार्हन्ति कदापि ता इमे ।
त्यक्त्वा गृहं गन्तुमिमे बहिर्यदादिष्टास्तदा तद्वसतिः कृता भवेत् ॥३२॥

अंग्रेजोंने जो दुर्दशा इनकी की है, वह उसके पात्र कभी भी नहीं थे। जब उनको घर छोड़कर जानेकी आज्ञा दी गयी तब उनकेलिये निवासस्थान भी बना देना चाहिये था ॥ ३२ ॥

पूर्वीयवङ्गेषु जलेषु भूमिषु लोका निवासं सुखतो वितन्वते ।
नौका जलेष्वावसतां तथोडुपास्तेषां परं साधनमस्ति केवलम् ॥३३॥

पूर्वीय बङ्गालमें लोग जल और स्थल दोनोंमें ही सुखसे निवास करते हैं। जलमें बसनेवालोंकेलिये नाव और त्रापा यही दो मुख्य साधन हैं ॥ ३३ ॥

आरुह्य तान्येव जना यतस्ततो गच्छन्ति ते प्राणसमप्रियाणि तत् ।
जापानभीत्या सितशासनं हि तानाज्ञापयद्दातुमिमानि तत्करे ॥३४॥

वह लोग इन्हीं दोनों पर चढ़कर जहाँ तहाँ जाते हैं। यह दोनों ही साधन उनके प्राणसमान प्रिय हैं। अंग्रेजी हुकूमतने जापानके भयसे उन्हें आज्ञा दी है कि वह अपने उन साधनोंको सर्कारको सौप दें ॥ ३४ ॥

नावश्च ताः श्वेतकरे समर्प्य ते जीवेयुरार्ता अवलम्ब्य किं पुनः ।
श्वेतास्तथापि प्रबला बलेन ता गृह्णन्ति तेभ्योद्य ततोस्त्यमित्रता ॥३५॥

किंच यदि वह गरीब नावको सर्कारके हाथमें सौप दें तो उनके जीनेका साधन क्या होगा? परन्तु अंग्रेज बलवान् हैं इसलिये वह उनसे उन साधनोंको ले रहे हैं। और इसीलिये परस्पर शत्रुता है ॥ ३५ ॥

ग्रेटब्रिटेनो विजिगीषते रणे शत्रूञ्जयेत्सोथ न वाजयेदिमान् ।
औचित्यमाभाति न भारतप्रजाप्राणार्दनं दुष्प्रसहं विवेकिनाम् ॥३६॥

अंग्रेज युद्धमें शत्रुओंको जीतना चाहते हैं परन्तु वह उन्हें जीतें अथवा न जीतें, किन्तु भारतीयप्रजाका प्राणपीड़न करना तो विचारशीलोंकेलिये असह्य है ॥ ३६ ॥

केषांचिदप्यस्ति न मानसे नृणां श्वेतेष्विह प्रेम मनागपि क्वचित् ।
भीत्यैव ते तन्मनसि स्थितां घृणां प्राकट्यमीषन्न नयन्ति सर्वथा । ३७॥

अंग्रेजोंकेलिये किसीके भी मनमें तनिक भी प्रेम नहीं है । केवल भयसे ही वह लोग मनमें रही हुई घृणाको तनिक भी प्रकट नहीं करते हैं ॥ ३७ ॥

ये किंकराः श्वेतशरीरिणामिह द्रुह्यन्ति तेपि प्रति तान्निरन्तरम् ।
जानन्ति विस्पष्टमिदं सितत्वचः श्रेष्ठाधिकारे दधतः पदं निजम् ॥३८॥

अंग्रेजोंके जो नौकर हैं वह उनसे सदा द्रोह ही करते हैं । और इस बातको बड़े-बड़े अधिकारी अंग्रेज अच्छी तरहसे जानते हैं ॥ ३८ ॥

लोकप्रसिद्धाभिरिमे परं निजं कार्यं कलाभिर्ननु कारयन्ति तान् ।
द्रव्यं पुरस्कृत्य भयं प्रदर्श्य वा को नाम विन्देत न सिद्धिमात्मवान् ॥३९॥

परन्तु वह लोकप्रसिद्ध अपनी कलासे उन भारतीयोंसे अपना कार्य करा लेते हैं । ऐसा कौन पुरुष है कि जो द्रव्य देकर या भय दिखाकर सिद्धि प्राप्त न करे ? ॥ ३९ ॥

सर्वप्रसप्तं परमापदां पदं विप्रत्ययं तन्निहितं निरन्तरम् ।
हन्यामसत्यं यदि न प्रजा इमा नाशं प्रपत्स्यन्त इयं न वाङ्मृषा ॥४०॥

अविश्वास सर्व दुःखोंका स्थान है । वह सबमें घुसा हुआ है । उस अविश्वासमें असत्य समाया हुआ है । यदि मैं इसका नाश नहीं करूँ तो यह सत्य ही समझिये कि इस प्रजाका नाश हो जायगा ॥ ४० ॥

श्वेताः सखायो यदि मामिकामिमां यूयं गिरं सत्यभृतां प्रियङ्करीम् ।
मन्यध्वमाहोस्विदुपेक्ष्य सत्वरं वर्त्मन्यवज्ञाप्रवणे स्त मेधुना ॥४१॥

अंग्रेज मित्रो ! आप चाहे मेरे इस सत्य और प्रियकारक वचनको मानें अथवा मेरी अवज्ञाके मार्गमें जायँ ।। ४१ ।।

**भूयो बलेनैव वदामि वः प्रति युष्माकमग्रेतिशयोक्तिसज्जितम् ।**
**नेदं मनुध्वं वचनं यदुक्तवान्सत्यं परं सत्यमिहत्यवृत्तकम् ।।४२।।**

मैं पुनः बलपूर्वक आपसे कह रहा हूँ कि जो कुछ मैंने कहा है उसमें आप तनिक भी अतिशयोक्ति न समझें । यहाँका यही परमसत्य वृत्तान्त है ।। ४२ ।।

**भवत्पुरस्तान्मनसः स्थितिर्मया विन्यासि मे बन्धुजनेभ्य एषिका ।**
**रोचेत नो वेति न वेद्मि साम्प्रतं सत्यं न कालातिगमं सहेत वै ।।४३।।**

मैंने आपके सामने अपने मनकी स्थिति रख दी है । यह मेरे भाइयोंको रुचेगा या नहीं, यह मैं नहीं जानता । सत्य कह दिया है । सत्य कालातिक्रमको सहन नहीं करता ।। ४३ ।।

**अद्यास्ति सोमस्तत एव मौनितां यातोस्मि पृच्छावसरो न विद्यते ।**
**तस्मादनापृच्छ्य बुधान्स्वबान्धवान्व्यनज्मि भावं हृदये स्थितं मम।।४४।।**

आज सोमवार होनेसे मैंने मौन लिया है । पूछनेका अवसर नहीं है । अतः अपने विद्वान् देश-बन्धुओंको पूछे बिना ही मेरे हृदयमें रहे हुए भावको स्पष्ट करता हूँ ।। ४४ ।।

**को वा विरुन्धेनुरुणद्धि कः पुनर्मामित्यपेक्षाविरहेण केवलम् ।**
**उत्कः प्रतीक्षे किमिहाचरन्ति ते श्वेताः समाकर्ण्य गिरं सतीं मम ।।४५।।**

कौन मेरा विरोध करेगा और कौन अनुरोध करेगा इसकी चिन्ता किये बिना ही मैं उत्कण्ठित होकर इतना ही जानना चाहता हूँ कि मेरे सत्य वचनको सुनकर अंग्रेज क्या करते हैं ।। ४५ ।।

**दास्यापनोदावसरेम्रिकाक्षितौ दासा व्यरुन्धन्स्वयमेव तां कृतिम् ।**
**उच्चै रुदित्वापि विरोधमीहिरे दासत्वनाशस्तु तथाप्यजायत ।।४६।।**

अमेरिकामें जब दासप्रथाका अन्त होने लगा तब स्वयं दासोंने ही

उसका विरोध किया। जोरसे रोकर भी विरोध प्रकट करना चाहा। तो भी उस प्रथाका नाश तो हो ही गया ॥ ४६ ॥

कौबेरयाम्यास्थितमानवाङ्गने युद्धे समाप्ते नररक्तपातिनि।
दास्यप्रथान्तोजनि चाम्रिकाभुवि ग्रन्थिः कलङ्कस्य नृणां गताभवत् ॥४७॥

रक्तपात करनेवाले उत्तर-दक्षिण भागमें जब युद्ध समाप्त हो गया तब अमरिकामें दास्यप्रथाका अन्त हुआ और मानवसमाजका कलङ्क दूर हुआ ॥ ४७ ॥

तत्रैव कृष्णाङ्गभृतां शरीरिणां जागर्ति साद्यापि बहिष्कृतेः कृतिः।
श्रेष्ठत्वभाजां भवनेषु मानिनां श्रेष्ठत्वनाशाय कृतप्रयाणिका ॥४८॥

इसीलिये आज भी काले लोगों का बहिष्कार वहाँ बड़े कहे जानेवाले लोगोंके घरोंमें प्रचलित है। वह बहिष्कार उनके श्रेष्ठत्व-बडप्पनका नाश करेगा ॥ ४८ ॥

परमशिवदवस्तु युष्माकमग्रे परं कामये,
वहति नयनवारिणि प्रोद्गते वापि यूथे द्विषाम्।
अनुचितमिदमद्य नैसर्गिकं नो कदापीह य-
त्तदिह सपदि शासनं यातु कामं भुवोस्या इति ॥४९॥

इतिसर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे चतुर्थः सर्गः

आपके आगे मैं इससे भी एक उत्तम वस्तुकी इच्छा करता हूँ। वह यह कि जब कि यहाँ आँसुओंकी धारा बहती हो तथा शत्रुओंका दल तैयार हुआ हो तो अनुचित और अस्वाभाविक इस राज्यको इस पृथिवीसे अर्थात् भारतसे शीघ्र ही चला जना चाहिये ॥ ४९ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
स्वोपज्ञराष्ट्रभाषाटीकासहिते पारिजातापहारे
चतुर्थः सर्गः

# पञ्चमः सर्गः

सोमेरिकावासिजनानपेक्ष्य श्रीमोहनः सत्यवचा अवादीत् ।
क्षान्तेन तान्तेन च चेतसा सत्तत्त्वार्थबोधाय महर्षिवर्यः ॥ १ ॥

महर्षिवर्य श्रीमहात्माजी सत्य तत्त्वका ज्ञान करानेकेलिये अमेरिका-वासियोंको संबोधन करके बोले ॥ १ ॥

श्रीराष्ट्रसंसत्कृतिसाधनी सा स्वातन्त्र्यहेतोः समितिः सुभद्रा ।
प्रस्तावमेकं निरधारयत्तन्मत्प्रेरणैवेति जनापवादः ॥ २ ॥

श्रीराष्ट्रियमहासभाकी कार्यकारिणी समितिने एक प्रस्ताव पास किया है । लोग कहते हैं कि वह मेरी ही प्रेरणा थी ॥ २ ॥

पाश्चात्य देशेषु बहुत्र सन्ति मित्राण्यनेकानि गुणान्वितानि ।
देशे च युष्माकमसंख्यलोकाः सन्त्येव तानीति सदा स्मरेत ॥ ३ ॥

पश्चिम देशों में मेरे बहुत से गुणशाली मित्र हैं । और आप यह याद रखें कि आपके देश में तो मेरे असंख्य मित्र हैं ॥ ३ ॥

यौष्माकदेशे महती प्रतिष्ठा नाम्नो मदीयस्य विराजतेद्य ।
युष्माभिरेवाभिहितेन वीरपूजेतिनाम्ना प्रथितास्ति तत्र ॥ ४ ॥

आपके देश में मेरे नाम की बहुत बड़ी प्रतिष्ठा है । आपके ही दिये हुए वीरपूजा नाम से वह प्रतिष्ठा प्रसिद्ध है ॥ ४ ॥

श्रीमन्महापण्डितहोमसेन दत्ता प्रसिद्धिर्मम तत्र लोके ।
नास्त्येव वैयक्तिक ऊर्जितो मे यद्यप्यलं कोपि हि तेन संगः ॥ ५ ॥

श्री० डॉक्टर होमसेने वहाँ लोकोंमें मुझे प्रसिद्ध किया है, यद्यपि उनके साथ मेरा वैयक्तिक कोई गाढ़ संबन्ध नहीं है ॥ ५ ॥

गांधिर्दधात्यद्भुतदिव्यशक्तिः सिद्धोस्त्यसावित्यमुना व्यघोषि ।
अन्याश्च वार्ता विविधाः स विद्वान्प्राचारयन्नावगतिर्म आसीत् ॥६॥

श्री० डॉक्टर होमसेने प्रचार किया है कि गांधी सिद्ध पुरुष है और बहुत सी अद्भुत दिव्य शक्तियाँ उसमें हैं। इनके अतिरिक्त अन्य बातों का भी प्रचार किया जिन्हें मैं नहीं जानता ॥ ६ ॥

तेनात्र पत्राणि विपश्चितां मे पार्श्वे समायान्ति ततो बहूनि ।
ज्ञातुं चमत्कारचयं मदीयं श्रद्धाधनं सर्वधनप्रधानम् ॥ ७ ॥

इसलिये वहाँ मेरे चमत्कारोंको जाननेकेलिये विद्वानोंके बहुत से पत्र मेरे पास आते रहते हैं। श्रद्धा सब धनोंमें श्रेष्ठ धन है ॥ ७ ॥

गच्छत्सु कालेषु पुनर्मनीषी श्रीमान्बिशप् फीशर आग्रहेण ।
आयातुमामेरिकलोकमध्य आमन्त्रणं प्रेषितवान्स मह्यम् ॥ ८ ॥

कुछ दिनोंके बाद श्री० विद्वान् बिशप् फिशर लुईने आग्रहके साथ मुझे अमेरिका आनेकेलिये आमन्त्रित किया ॥ ८ ॥

सज्जोभवं तत्र समागमाय तस्याग्रहेणैव परन्तु विघ्नैः ।
भूयोभिरेवागमनं निरुद्धं नास्ति क्षमः कोपि विधिं निषेद्धुम् ॥ ९ ॥

वहाँ आनेकेलिये मैं तैयार भी हुआ परन्तु अनेक विघ्नोंके कारण मेरा आना बन्द रहा। विधिको कोई रोक नहीं सकता ॥ ९ ॥

आमेरिकः सोथ मयात्र थोरो श्रीमानवाप्तोध्वनिदर्शनाय ।
युष्माभिरेवास्ति स च प्रदत्तः किं किं न युष्मत्समवापमत्र ॥ १० ॥

श्रीमान् थोरो को मैंने अपना मार्गदर्शक पाया, वह भी तो आपके ही दिये हुए थे। आपसे मैंने क्या-क्या नहीं प्राप्त किया? ॥ १० ॥

याम्याफ्रिकायां सितशासनाज्ञाभङ्गाभिधायोधनमिद्धरूपम् ।
औदार्यमाधाय बुधेन तेन ग्रन्थेन चैकेन तदान्वमोदि ॥ ११ ॥

दक्षिण अफ्रिकामें राजाज्ञाभङ्गका जो भयङ्कर सत्याग्रह युद्ध चल

रहा था, उसका उन्हीं थोरो महाशयने एक ग्रन्थमें अनुमोदन किया था ॥ ११ ॥

प्राप्तो मया रस्किन उग्रतेजा ब्रिटेनतो मार्गनिदर्शकोसौ ।
ग्रन्थं पठित्वैव विना विलम्बमारण्यकोभूवममुष्य शुभ्रम् ॥ १२ ॥

ब्रिटेनसे मुझे मार्गदर्शक रस्किन मिले थे। जिनके उत्तम ग्रन्थको पढ़ते ही मैंने जंगलमें झोपड़ी बाँध ली ॥ १२ ॥

अन्यार्थवक्तृत्वमपास्य शीघ्रं त्यक्त्वा निवासं नगरे तदानीम् ।
क्रोशद्वये डर्बनतः प्रदेशे क्षेत्रोटजेतन्वि दरिद्रवासम् ॥ १३ ॥

उसी समय बैरिष्टरी छोड़कर शहरी निवासका त्याग करके डर्बन-से दो कोस दूर प्रदेशमें खेतमें झोपड़ी बाँध कर दीनके समान रहने लग गया ॥ १३ ॥

टाल्स्टायमापं रशियात एव जीवातवेहिंसपथस्य तस्य ।
भाग्यात्तदा दिव्यसुधाब्धितुल्यं दीने दधात्येव दयां महेशः ॥ १४ ॥

उस समयके अहिंसक मार्गको जीवनदान देनेकेलिये रशियासे मुझे टाल्स्टाय मेरे भाग्यसे दिव्य अमृतके सागर समान मिल गये थे। भगवान् दीनोंपर दया करता ही रहता है ॥ १४ ॥

याम्याफ्रिकायां परमे पवित्रेहिंसाख्यतत्त्वे नवजातसत्त्वे ।
संप्रेष्य पत्त्रं परमः कृपालुः स्वीयाशिषासौ समयोजयन्माम् ॥ १५ ॥

दक्षिण अफ्रिका में जब कि अहिंसातत्त्व नया ही था, एक पत्र भेज कर उन्होंने मुझे आशीर्वाद दिया था ॥ १५ ॥

एतेन मार्गेण निराश्रयाणां सेवा कृता स्याद्धतभाग्यभाजाम् ।
पत्त्रेण सन्दिश्य रहस्यमेतत्तेने च तेनोपकृतिर्मयीद्धा ॥ १६ ॥

इस अहिंसक मार्गसे निराश्रय और दीनोंकी सेवा की जा सकती है, पत्र द्वारा यह सन्देश देकर उन्होंने मुझपर बहुत बड़ा उपकार किया था ॥ १६ ॥

एतस्य सर्वस्य निरूपणस्य हेतुः परं साधयितुं यतेहम् ।
यद्यत्करोम्यत्र न तद्विरोधात्स्फूर्तिर्हि सास्ते मनसो ममेति ॥ १७ ॥

इन सब इतिहासोंके निरूपण करनेका केवल यही कारण है कि मैं यह सिद्ध करनेका यत्न कर रहा हूँ कि जो कुछ मैं यहाँ कर रहा हूँ वह किसी विरोधसे नहीं किंतु वह मेरे मनकी स्फुरणा है ॥ १७ ॥

पन्थानमादाय च रस्किनस्य मच्छ्रद्धया वा मम मेधया वा ।
नात्स्यादिवादाननुमन्तुमेतान्हेतोः कुतोप्यत्र न तूत्सहेहम् ॥ १८ ॥

मेरी श्रद्धासे अथवा मेरी बुद्धिसे श्रीरस्किनके मार्गका ग्रहण करके नाज़ीवाद या फ़ासीवादका स्वीकार किसी भी कारण से करने के लिये मैं तैयार नहीं हूँ ॥ १८ ॥

स्वातन्त्र्यनाशाय समुत्थितस्य लोकोत्कथायापि समुद्गतस्य ।
फास्यादिवादस्य कथं न्वहं स्यां लोकानुसेवानिरतोनुमन्ता ॥ १९ ॥

मैं तो लोकसेवा में लगा हुआ हूँ । उपर्युक्त नाज़ीवाद आदि लोक-नाश और लोगोंकी स्वतन्त्रताके नाशकेलिये खड़े हुए हैं, तब मैं उनका अनुमोदन कैसे कर सकता हूँ ॥ १९ ॥

आमेरिकेभ्योप्यथ राशियेभ्यो ब्रिटेनलोकेभ्य उतापि तां ताम् ।
शिक्षां गृहीतामनुसृत्य वाणी सर्वोपकाराय मम प्रवृत्ता ॥२०॥

अमेरिका, रशिया और ब्रिटेनके महापुरुषोंसे ग्रहण की गयी शिक्षाका अनुसरण करके सर्वोपकारकेलिये ही मैं बोलता हूँ ॥ २० ॥

यद्वच्मि गन्तुं भरतप्रदेशाच्छ्वेतान्न तद्द्वेषधिया कदाचित् ।
तन्मानहानावपि यत्न एष युष्माभिरार्यैर्न कदापि बोध्यः ॥२१॥

भारतमेंसे अंग्रेजोंको चले जानेकेलिये जो मैं कह रहा हूँ, वह कभी भी द्वेष बुद्धिसे नहीं कहता हूँ। आप यह भी न समझें कि मैं उनका अपमान करनेका प्रयत्न करता हूँ ॥ २१ ॥

बाल्यात्समारोपि मनोधरायां सत्यं मया तेन न विद्यतेत्र।
प्रेयः किमप्येव भुवस्तलेस्मिन्सर्वार्थसिद्ध्यै वसुधर्द्धिवृद्ध्यै ॥२२॥

बाल्यावस्थासे ही मैंने अपने मनमें सत्यको स्थान दिया है। अतः इस पृथिवीपर सर्वार्थसिद्धिकेलिये तथा जगत्कल्याणकेलिये उससे अधिक प्रियवस्तु मेरेलिये कोई नहीं है॥ १२॥

अस्तीश्वरः सत्य इति प्रतीतिरासीत्पुरा मे परमद्य मन्ये।
सत्यं परात्मेति ततो मतौ मे सत्यात्परं तत्त्वमिहास्ति नान्यत्॥२३॥

प्रथम मैं मानता था कि "ईश्वर सत्य है"। अब मैं मानता हूँ कि "सत्य ईश्वर है"। अतः मेरी बुद्धिमें सत्यसे बढ़कर कोई दूसरा तत्त्व नहीं है॥ २३॥

वृत्त्यैतयैवास्ति सदेश्वरो मे प्रत्यक्ष इत्येव मतिर्ममास्ति।
तस्यैव सत्यस्य विधाय साक्ष्यं श्वेतेषु न द्वेष इति ब्रवीमि॥२४॥

इसी वृत्तिके कारण मैं मानता हूँ कि मेरेलिये ईश्वर सदा प्रत्यक्ष ही है। उसी सत्य ईश्वरको साक्षी बनाकर मैं कहता हूँ कि मुझे अंग्रेजोंपर कोई द्वेष नहीं है॥ २४॥

श्रीभारतक्ष्माहितमाकलय्य देशोयमद्यैव सितेन हेयः।
श्रेयो भविष्यत्यथ मित्रभूतराज्येष्वपीति प्रशमः समेषाम्॥२५॥

अंग्रेजोंको आज ही, भारतके कल्याणकेलिये, इस देशको छोड़ देना चाहिये। इससे मित्र राज्योंका भी कल्याण होगा और अन्य सबोंका भी।

मत्यैतया विश्वसनेन चापि श्वेतप्रयाणं भरतक्ष्मातः।
अभ्यर्थ्यमत्रत्यजनैः समस्तैरित्यत्र सर्वां जनतामवोचम्॥२६॥

इसी विचारसे और इसी विश्वाससे मैंने यहाँकी सर्वजनताको कहा है कि वह अंग्रेजोंको यहाँसे चले जानेकेलिये प्रार्थना करें॥ २६॥

त्यागं भुवोस्या यदि मे विदध्युरौचित्यमेतन्निखिलैर्हि मान्यम्।
त्यक्त्वा परं नो भुवमेत एतामौचित्यमीषन्न समर्थयेरन्॥२७॥

यदि अंग्रेज इस देशको छोड़ जायँ तो अवश्य ही सब लोग इसे उचित मानेंगे। परन्तु इसे छोड़े बिना अपने औचित्यको अंग्रेज़ ज़रा भी साबित नहीं कर सकते हैं ॥ २७ ॥

भीत्या समस्तं जगदस्तु मूकं वाचां भवेन्न प्रसरोद्य नृणाम् ।
चेतोखिलानामदसीयदोषं पश्यत्यवश्यं नितरां महान्तम् ॥२८॥

भयसे भले सारा जगत् चुप रहे, कोई बोल न सके; परन्तु सबके मनमें यह बड़ा भारी अंग्रेज़ोंका पाप भास रहा है ॥ २८ ॥

ते ब्रह्मदेशेष्वथवा मलायादेशेषु सिंगापुर आचरन्यत् ।
अत्रापि तन्मा विदया विदध्युर्हृन्मर्मभित्तीव्रतरं च पापम् ॥२९॥

उन्होंने ब्रह्मदेशमें, मलायामें और सिंगापुरमें जो महापाप किया है, उसे ही वह यहाँ भी न करें, यह सबको शंका है ॥ २९ ॥

एतस्य देशस्य कृता विमुक्तिस्तेषां शिवायेति न चेद्विदन्ति ।
तेषां भवेद्धन्त तदातिदुःखं पापेषु नोदेति सती मतिर्हि ॥३०॥

इस देशको खाली कर देना उनके कल्याणकी बात है, यदि इसे वह नहीं समझ पाते हैं तो वह उनके भारी दुःखकी बात है। सत्य है, पापियोंको कभी अच्छी बुद्धि सूझती ही नहीं है ॥ ३० ॥

परन्तु कृत्वैव धरामिमां ते मुक्तां शिवं स्वस्य च भारतस्य ।
शक्ता विधातुं न तु भारतीयक्रोधोपशान्त्या अपरोभ्युपायः ॥३१॥

परन्तु इस देशको मुक्त बनाकर ही वह अपना और भारतका कल्याण कर सकते हैं। भारतीयोंके क्रोधको शान्त करनेकेलिये दूसरा उत्तम उपाय नहीं है ॥ ३१ ॥

कृत्वा महापुण्यमिदं सिताङ्गाः संवर्धमानं हृदि दौर्मनस्यम् ।
अस्मत्प्रजानां प्रतिहर्तुमाराच्छक्ता भवेयुः परमार्तिभाजाम् ॥३२॥

इस महापवित्र कार्यको करके ही अत्यन्त पीड़ित भारतीय प्रजाके मनमें बढ़ते हुए वैमनस्यको वह दूर कर सकते हैं ॥ ३२ ॥

साहाय्ययूथं समपादि यद्यद्युष्माभिरद्यावधि नूनमेषाम् ।
तेनातिशय्येत कदाचनापि न प्रार्थितं वस्तु मयाद्य धन्यम् ॥३३॥

आप लोगोंने अब तक इनकी जितनी सहायता की है वह इससे बढ़ नहीं सकती जिस सहायताकी मैं प्रार्थना करता हूँ ॥ ३३ ॥

मिथ्याप्रचाराय सितैरनेके मिथ्यागिरः सन्ति धनव्ययेन ।
क्रीताश्च ते राष्ट्रमहासभायाः कृत्यानि निन्दन्ति शुभावहानि ॥३४॥

अंग्रेज़ोंने झूठा प्रचार करनेकेलिये धनव्यय करके बहुतसे झूठे आदमियोंको खरीद रखा है। वह सब राष्ट्रियमहासभाके अच्छे कार्योंकी भी निन्दा किया करते हैं ॥ ३४ ॥

श्वेतप्रजानामहमस्मि शत्रुर्धूर्तोस्मि वक्रोस्मि च दाम्भिकोस्मि ।
इत्थं हि ते मामुपवर्णयन्ति यूयं च तस्मात्परिवञ्चिता स्थः ॥३५॥

वह झूठे आदमी मुझे अंग्रेजोंका शत्रु, धूर्त, कुटिल और पाषण्डी बताते रहते हैं। इसीलिये आप लोग ठगे जा रहे हैं ॥ ३५ ॥

अतिप्रतीपेपि सदानुकूल्यं सेवे जनेहं प्रसमीक्ष्य धर्मम् ।
ते क्रीतदासा मम वृत्तिमेतां सर्वत्र गत्वा समुपाहसंस्तु ॥३६॥

मैं अत्यन्त प्रतिकूल आदमीमें भी अनुकूलता का व्यवहार करता हूँ क्योंकि मैं इसे धर्म मानता हूँ। खरीदे हुए उन झूठे आदमियोंने तो सब जगह जाकर मेरी इस वृत्तिका उपहास किया है ॥ ३६ ॥

सिद्धान्तहीनोस्म्यदृढप्रतिज्ञो नो मे प्रतिष्ठास्ति च भारतोर्व्याम् ।
एवं धनक्रीतजनाः प्रलापं कुर्वन्ति सर्वत्र दुरन्तवृत्ताः ॥३७॥

वह धनसे खरीदे हुए लोग सर्वत्र प्रलाप करते हैं कि मेरा कोई सिद्धान्त नहीं है, मेरी प्रतिज्ञा दृढ़ नहीं है और भारतवर्षमें मेरी कोई प्रतिष्ठा नहीं है ॥ ३७ ॥

श्वेताङ्गका अत्र यदाचरन्ति युष्मासु भारो न हि तस्य कोपि ।
युष्माभिरेवं न हि चेतसापि मन्तव्यमित्येव सदा समीहे ॥३८॥

अंग्रेज लोग यहाँ जो कुछ करते हैं उसका आपपर कोई भार नहीं है, ऐसा आप न मानें, यह मेरी सदा इच्छा रहती है ॥ ३८ ॥

नो चेदसत्यं भगवत्स्वरूपात्सत्यात्पृथक्कर्तुमवैष्यथाद्य ।
हानिं परां श्वेतगणस्य नूनं सम्पादयेतात्र कलिर्न चास्ति ॥३९॥

ईश्वरस्वरूप सत्यसे असत्यको पृथक् करना यदि आप आज नहीं जानेंगे तो श्वेतप्रजाकी आप बड़ी भारी हानि करेंगे, इसमें विवाद नहीं है।

याचेत चेद्भारतराष्ट्रसंसत्स्वातन्त्र्यमेतस्य महीतलस्य ।
को नाम दोषोपरिहार्य एष युष्माभिरालोक्यत इत्यवित्तम् ॥४०॥

यदि राष्ट्रिय महासभा इस पृथिवीकी—भारतभूमिकी स्वतन्त्रता चाहती है तो इसमें आप कौन अपरिहार्य दोष समझ रहे हैं, यह मुझे मालूम नहीं है ॥ ४० ॥

अद्यैव सर्वैर्भरतक्षमायाः स्वातन्त्र्यमिष्टं सुधियां समाजैः ।
जापानमेतं प्रतिरोत्स्यतेयं देशः स्वतन्त्रोस्तु शमोखिलानाम् ॥४०॥

सभी समझदार आज ही भारतभूमिकी स्वतन्त्रता चाहते हैं। यह देश स्वतन्त्र होगा, इस बढ़ते हुए जापानको भी रोकेगा और सबकी शान्ति होगी ॥ ४२ ॥

संभाव्यं निखिलं समीक्ष्य सभया प्रत्यूहमूह्यं तथा,
स्वातन्त्र्याय समस्तभारतजना दुःखेन संपीडिताः ।
आदिश्यन्त न तत्र कापि विमतिः संभाव्यते कस्यचि-
च्छत्रूणां शमनाय साधनमिदं ग्राह्यं भवेन्निर्मलम् ॥४३॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते

पारिजातापहारे

पञ्चमः सर्गः

जितने विघ्नोंकी संभावना हो सकती है या कल्पना हो सकती है उन सबको विचारके राष्ट्रिय सभा दुःखसे पीड़ित समस्त भारतीय प्रजाको स्वतन्त्रता प्राप्त करनेकी आज्ञा दे रही है। इसमें किसीके किसी विरोधकी संभावना नहीं है। शत्रुओंको शान्त करनेकेलिये यही निर्दोष साधन ग्राह्य होना चाहिये ॥ ४२ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते स्वोपज्ञभारतराष्ट्रभाषाटीकासहिते पारिजातापहारे
पञ्चमः सर्गः।



# षष्ठः सर्गः

दृष्ट्वाथ लोभप्रवणा महाप्रभुर्जापानिकीस्ताः प्रकृतीर्निरन्तरम् ।
दयापरीतः परमार्थयायिनं पन्थानमिद्धं समुपादिशत्स ताः ॥ १ ॥

श्रीमहात्माजीने जापानकी प्रजाको अत्यन्त लोभाकृष्ट देखकर, दयासे उन्हें उत्तम परमार्थमार्गका उपदेश दिया ॥ १ ॥

भो बन्धवो द्वेषलवोपि मे हृदि युष्मास्वहिंसाव्रतिनो न विद्यते ।
ततो वचो मे निरपेक्षसत्यताप्रपूरितं स्याच्छृणुतानुकम्पया ॥ २ ॥

यहाँसे उस उपदेशका आरम्भ होता है । भाइयो ! मैं तो अहिंसाका पुजारी हूँ । अतः मेरे हृदयमें आपकेलिये जरा भी द्वेष नहीं है । अतः कृपाकर मेरे अत्यन्त सत्यवचनको आप सुनें ॥ २ ॥

चीनं समाक्रम्य सुशीलमानसं कृतिं कनिष्ठामतनिध्वमुत्तमाः ।
समुन्नतस्थानमवाप्य सर्वथा न्यपप्तताधोद्य परार्थमर्दकाः ॥ ३ ॥

चीन तो बहुत शान्त देश है । उसपर आक्रमण करके आप दूसरोंकी हानि करनेके कारण उन्नत स्थान पाकर नीचे गिर गये ॥ ३ ॥

न तोषमेष्यन्ति कदापि कामनाः कात्स्न्र्येन जाता हृदयाजिरेषु वः ।
कस्याभिलाषाः फलिताः समन्ततो युष्माभिरस्मिन्भुवने निभालिताः ॥

आपके हृदयकी इच्छा कभी भी सन्तुष्ट नहीं हो सकती । आपने इस जगत्में किसकी सभी इच्छाओंको पूरी होती देखा है ? ॥ ४ ॥

जगत्समग्रं समवायतन्त्रके व्रजद्विरोधानलतापतापितम् ।
उत्पीड्य तद्यूयमनिष्टसंततीः प्रसारयेतेति विभाति मेधुना ॥ ४ ॥

विरोधाग्निसे पीड़ित समस्त जगत् आज समवायतन्त्रकी ओर जा रहा है । मालूम होता है उसे हैरान करके आप लोग अनिष्टकी परम्परा फैलावेंगे ॥ ५ ॥

यदाहमष्टादशवार्षिकोवसं सर्वातिशायिन्यथ लन्दनेपठम् ।
आर्नोल्डलेखानपि ऐड्विनश्च तांस्तदैव वो दिव्यगुणानवेदिषम् ॥६॥

जब मैं १८ वर्षका लंडनमें रहता था उस समय श्री० आर्नोल्ड और श्री० ऐडविनके लेखोंको पढ़कर ही आपके उत्तमगुणोंसे परिचित हुआ था ॥ ६ ॥

शस्त्रास्त्रसज्जानपि राशियाञ्जनान्पराबभूवेति च रोमहर्षणम् ।
तदान्वभूवं परमां मुदं भजन्न मोदयेत्कं गुणिनां गुणावलिः ॥ ७ ॥

अस्त्र-शस्त्रोंसे सुसज्जित रशियाके वीरोंको भी आपने पराजित किया, यह जानकर मुझे रोमाञ्च हो आया था। परम प्रसन्नता हुई थी। गुणियोंके गुण किसे आनन्दित नहीं करते ? ॥ ७ ॥

बाणौषधीशग्रहचन्द्रसम्मिते संवत्सरे भारतवर्षमागमम् ।
जापानदेशीयसुशीलभिक्षुभिः समागमोभूद्धृदयप्रसादकः ॥ ८ ॥

१९१५ ई० में मैं भारत आया। उस समय जापानके सुन्दरशील-पालनेवाले भिक्षुओंके साथ आनन्दप्रद समागम प्राप्त हुआ ॥ ८ ॥

तदाश्रमे मे बहवो हि भिक्षुकाः प्रेम प्रतिष्ठाप्य परं परं समे ।
स्थिता गताः स्वां जनिभूमिमादरात्स्मरामि यातानि दिनानि तान्यहम् ॥९॥

उस समय मेरे आश्रममें बहुतसे जापानी भिक्षुक परम प्रेमके साथ रहते थे। पीछे सभी अपनी जन्मभूमिमें चले गये। वह बीते हुए दिन मुझे स्मरण आते हैं ॥ ९ ॥

तेष्वेक आसीद्धत केशवाभिधः प्रियोतिमूल्यः सहवासितां गतः ।
तदोपवर्धं स ममाश्रमे स्थितः परं प्रसादं व्यतनिष्ट सर्वदा ॥१०॥

उन भिक्षुओंमेंसे एक श्रीकेशवभिक्षु थे जो हमारे बहुमूल्य सहवासी थे। वर्धाके पास (सेवाग्राम) मेरे आश्रममें ही वह रहते और सबको आनन्दी बनाते थे ॥१०॥

सा तस्य भक्तिः परमेश्वरे च तत्स्मेराननं तन्नियमानुपालनम् ।
तद्वर्तनं प्रेम च तन्मनोहरं गुणैः स तैस्तैरखिलप्रियोभवत् ॥११॥

उनकी परमेश्वरमें वह अपूर्व भक्ति, उनका वह हँसता हुआ मुख ! नियमोंका वह पालन ! उनका वह व्यवहार ! वह मनोहर प्रेम ! वह अपने अनेक गुणोंसे सबके प्रेमपात्र थे ॥ ११ ॥

सितैरिदानीं समरेण हेतुना विनापराधं स ममाश्रमाद्धृतः ।
सतो वियोगेन च तस्य नो मनः क्लान्तं नितान्तं व्यथते निरन्तरम् ॥

युद्धके कारण अंग्रेजोंने उन्हें विना अपराधके ही मेरे आश्रमसे पकड़ लिया है । उस सन्त पुरुषके वियोगसे हमारा मन सदा अत्यन्त दुःखित रहता है ॥ १२ ॥

आनद्धमद्यापि तदीयमाश्रमे तेनात्र गेया परमेशगीतिका ।
उभे इमे न स्त उदात्तवस्तुनी सदावलम्बस्तदभावदुःखिनाम् ॥१३॥

उनका वह चमड़े से मढ़ा हुआ बाजा और उनकी वह ईश्वर प्रार्थनाकी गीतिका यही दो वस्तु आज भी हम लोगोंकेलिये अवलम्ब हैं ॥ १३ ॥

तस्यैव घोषैः पुलकोद्गमावहैः प्रातश्च सायं परमेश्वरार्थना ।
आरभ्यतेऽस्माभिरिहाधिपीडितैरहोतिरम्या विरहे प्रियस्मृतिः ॥१४॥

उसी बाजेके रोमाञ्च करनेवाले घोषके साथ आश्रममें मनोव्यथासे पीड़ित हम लोग सायं और प्रातः ईश्वरप्रार्थनाका आरम्भ करते हैं । अहह ! विरहमें—वियोगमें प्रियजनकी याद कितनी मीठी होती है ! ॥१४॥

जापानभिक्षुस्तृतरागसूत्रसंनिबद्धचेता विनयेन वः पुरः ।
उपक्रमे वक्तुमिदं सुखाय मे युष्माकमप्यावहतां मनोरतिम् ॥१५॥

जापानी भिक्षुओंने जो प्रेमसूत्र तैयार किया है उससे मेरा मन बँधा हुआ है । इसीलिये आपके सम्मुख मेरी शान्तिकेलिये मैं कुछ कहता हूँ। वह आपके मनको भी आनन्द देगा ॥१५॥

**आप्तैरनाप्तैरपि भारते ततैरुदन्तजातैरधिगत्य संयुगम् ।**
**चीनेन साकं व उदारचेतसां मनोभवन्मे विवशं व्यथाकुलम् ॥१६॥**

भारतमें आनेवाले झूठे या सच्चे समाचारोंसे यह जानकर कि चीनके साथ आप लोगोंका युद्ध हो रहा है, मेरा मन दुःखसे व्याकुल हो गया है ॥ १६ ॥

**योसौ प्रयासो बत चीनसंस्कृतिं संहर्तुमारभ्यत तेन मे मनः ।**
**अजायतातीव विषादि बन्धवो न शोभते वीरपराक्रमोबले ॥१७॥**

चीनकी संस्कृतिको नष्ट करनेकेलिये जो यह प्रयास हो रहा है उससे मेरा मन बहुत दुःखी हुआ है ! निर्बलके ऊपर वीरोंका पराक्रम शोभा नहीं देता है ॥ १७ ॥

**अन्यैर्नृपालैः सह शक्तिसंभृतैः समानतामाप्तुमयं भवेद्यदि ।**
**प्रयत्न ऊहेत ममापि मानसं तत्त्वं किमप्यद्भुतशर्मणोपि वः ॥१८॥**

यदि शक्तिशाली अन्य राजाओंके साथ समानता प्राप्त करनेकेलिये यह प्रयत्न होता तो मेरा मन भी आपके किसी अपूर्व सुखके तत्त्वकी कल्पना करता ॥ १८ ॥

**मैत्रीं विधायाद्य च जर्मनीभुवा पराक्रमश्चीन उदस्तविक्रमे ।**
**औचित्यलेशं न दधाति वो यतः समेन शत्रुत्वमतीव शोभते ॥१९॥**

आज जर्मनीके साथ मित्रता करके निर्बल चीनके ऊपर आपका यह आक्रमण तनिक भी उचित नहीं है । शत्रुता तो अपने समानके ही साथ शोभा पाती है ॥ १९ ॥

**प्राचीनकालाद्वितताऽस्ति सा प्रजा स्मृतेरतीतात्समयाच्च संस्कृतिम् ।**
**धत्ते च साहित्यमसौ मनोहरं तस्यां न युज्येत हि व पराक्रमः ॥२०॥**

प्राचीन कालसे वह प्रजा फैली हुई है । अतीतकालसे ही उसकी संस्कृति भी है और सुन्दर साहित्य भी है । उस प्रजापर आपका पराक्रम युक्त नहीं है ॥ २० ॥

चीनस्य साहित्यसुधाभिनिर्झरैः प्रावर्धयध्वं व इमां सरस्वतीम् ।
एवं गुरुर्वोऽस्ति स देश इत्यतो गुरौ कदाप्याक्रमणं न युज्यते ॥२१॥

चीनके साहित्यसे ही आपने अपना यह साहित्य बढ़ाया है । इस प्रकारसे वह देश आपका गुरु है । गुरुके ऊपर आक्रमण कभी भी युक्त नहीं है ॥२१॥

स्वातन्त्र्यमाप्स्यं यदि भारतक्षितेः समागमिष्यं व उदात्तभूमिकाम् ।
यद्यप्यहं रुग्ण इवास्मि साम्प्रतं तथापि न स्यां प्रतिवारितस्तदा ॥२२॥

यदि मैं अपने देशकी स्वतन्त्रता प्राप्त कर लूँगा तो आपके देशमें आऊँगा । यद्यपि मैं अभी तो बीमार हूँ परन्तु उस समय मुझे रोकनेवाला कोई नहीं होगा ॥ २२ ॥

चीनेषु युष्मासु जगत्यपि श्रियो द्रोहं विनाशाय विधाय यत्कृतम् ।
युष्माभिरद्याघमिदं महत्ततः पृथक्करिष्ये मदसून्समर्प्य वः ॥२३॥

सुख सम्पत्ति नष्ट करनेकेलिये चीनपर, अपने पर और जगत्के ऊपरभी द्रोह करके आपने जो महान् पाप किया है उससे आपको मैं अपने प्राण देकर भी अलग करूँगा ॥२३॥

काम्यां परं सर्वजनैः स्वतन्त्रतामवाप्तुकामा वयमत्र दुर्गतैः ।
युध्यामहेद्यापि सितैः समं परं न पारमस्या युध ईक्ष्यते मया ॥२४॥

जिसे सब चाहते हैं उसी स्वतन्त्रताको प्राप्त करनेके लिये हम यहाँ दुष्टोंके साथ लड़ रहे हैं । परन्तु मैं अभी इस युद्धका अन्त नहीं देखता हूँ ॥२४॥

आस्यन्दनेऽस्मिन्धवलत्वचां मनाङ् न हानिमाधातुमहं विचारये ।
सत्यं प्रतिष्ठां लभतां हि तेष्विति प्रयोजनं मुख्यतयास्ति संयुगे ॥२५॥

इसयुद्धमें गोरोंकी हानि करनेकी मेरी इच्छा नहीं है। इस युद्धका मुख्य प्रयोजन तो इतना ही है कि उनमें सत्यका प्रवेश और स्थिति हो ॥ २५ ॥

निःशस्त्रविद्रोह इह प्रवर्तितो मया च सोऽद्यावधि न प्रशाम्यति ।
अहिंसयैव प्रतिकूलचारिणो मया विजेया इति मेऽस्ति निश्चयः ॥२६॥

मैंने निःशस्त्र विद्रोहका यहाँ आरम्भ किया है परन्तु वह अभी तक

शान्त नहीं होता है। मेरा निश्चय है कि प्रतिकूल आचरण करनेवालोंको अहिंसासे ही जीतना चाहिये॥ २६ ॥

जापान आक्राम्यति भारतावनिं तदा मयारब्धमिदं महन्मृधम्।
सुहृन्महीपेषु भयं विधास्यते धियानया नो भवत प्रतारिताः॥२७॥

जब कि जापान भारतपर आक्रमण करनेको तैयार है तब आरम्भ किया हुआ यह मेरा युद्ध मित्रराज्योंको डरा देगा, इस विचारसे आप भ्रममें न पड़ जायँ॥२७॥

ब्रिटेनदुःखावसरं प्रतीक्ष्य चेद्भवेदभीष्टं समरप्रवर्तनम्।
भवेदुपक्रान्तमिदं तु विग्रहारम्भे परं नेति चिकीर्षितं मम॥२८॥

यदि अंग्रेजोंके दुःखकी प्रतीक्षा करके युद्ध आरम्भ करना इष्ट होता तो इस लड़ाईके आरम्भमें ही इसका भी आरम्भ हो गया होता। परन्तु ऐसा मुझे करना ही नहीं है॥२८॥

देशस्त्वसौ सन्तमसापिधानवान्स्वातन्त्र्यभास्वत्सुभगोदयस्ततः।
इहाद्य काम्यस्तदवाप्तये वयं प्रयत्नवन्तोनिशमिद्धमानसाः॥२९॥

यह देश अन्धकारसे ढँका हुआ है। स्वातन्त्र्यरूप सूर्यके उदयकी इच्छा हम रख रहे हैं। उसे प्राप्त करनेकेलिये हम उत्साही मनसे सदा प्रयत्नवान् हैं॥२९॥

यातेषु तेषु स्वभुवं सितेष्वितो गते च तच्छासन आततायिनि।
पश्यामि हेतुं न कमप्यपेक्ष्य यं यूयं परिद्रोक्ष्यथ भारतक्षमाम्॥३०॥

जब अंग्रेज अपने देशमें चले जायँगे और उनकी आततायी हुकूमत भी जब समाप्त हो जायगी तब मैं कोई कारण नहीं देखता हूँ कि जिससे आप भारतके साथ द्रोह करें॥३०॥

उद्दिश्य चेद्भारतदेशमाश्रयेत्कृपा च कस्मादपि मानसे स्थितिम्।
युष्मांकमाराग्न कथं नु सा पुनश्चीनेष्वभिष्यादुदिता यशस्विनी॥३१॥

यदि भारतवर्षकेलिये किसी कारणसे आपके हृदयमें दया उत्पन्न हो सकती है तो चीनके ऊपर आपको दया क्यों नहीं आती है ? ॥३१॥

अद्यास्ति देशोयमुपात्तदुर्दशस्ततो हि युष्मानधिमानयिष्यति ।
इति भ्रमो वः सपदि प्रयात्विति प्रकामये सर्वजगच्छ्रियेधुना ॥३२॥

आज यह देश दुर्दशाग्रस्त है इसीलिये आपका यह संमान करेगा, जगत्के कल्याणकेलिये आज आपका यह भ्रम दूर हो ऐसी मेरी इच्छा है ॥३२॥

साम्राज्यवादस्य विनाशहेतवे निस्सारयामः सितवर्ष्मणो वयम् ।
तदा तु युष्माकमिहागतेर्भवेत्कुतोवकाशो मनसा विचार्यताम् ॥३३॥

जब हम साम्राज्यवादके नाशकेलिये ही अंग्रेजोंको निकाल रहे हैं तब आपके आनेकेलिये यहाँ कहाँ अवकाश है, इसे तो आप विचारें ॥३३॥

गते प्रणाशं परतन्त्रतातमस्युदीयमाने निजतन्त्रभास्करे ।
साम्राज्यवादप्रतिरोधने क्षमा अहिंसया स्याम वयं विनिर्दराः ॥३४॥

परतन्त्रतारूप अन्धकारके नष्ट होनेपर स्वतन्त्रतारूप सूर्यके उदय होनेपर हम अत्यन्त निर्भय होकर साम्राज्यवादको अहिंसासे ही रोकनेमें समर्थ बनेंगे ॥३४॥

सेनाः समृद्धा महतीरपि क्षमाः परासितुं स्यामतमामहिंसया ।
तथापि ता एव समाश्रयेम तद्विनिन्दिताः स्याम वयं भवाङ्गने ॥३५॥

अहिंसासे हम चाहे जितनी समृद्ध सेनाको भी हरा सकते हैं तो फिर उसी सेनाका यदि हम आश्रय लें तो जगत्में हमारी बड़ी भारी निन्दा होगी ॥३५॥

शक्तौ च सत्यां यदि नापदां वयं प्रतिक्रियायै प्रयतामहे तदा ।
अवाच्यवादानतुलान्समीरिताञ्जनैः सहिष्यामह एव कातराः ॥३६॥

शक्ति रहते हुए भी यदि हम विपत्तिके दूर करनेकेलिये प्रयत्न न करें तो लोगोंके बड़े-बड़े कठोर निन्दाशब्दोंको हम लाचार होकर सहन करेंगे ।।३६।।

हिंसा परो धर्म इति श्रितं मतं यैस्ते विजेयाः कथमक्षशासकाः ।
सुहृन्महीपालचयेन नो भवेद्यावद्विनिर्बन्धमिदं धरातलम् ।।३७।।

जब तक यह देश बन्धनमुक्त नहीं होगा तब तक मित्रराज्य उनको कभी नहीं जीत सकते जिन जर्मनी, इटली, जापान आदिका परम धर्म हिंसा है ।।३७।।

युष्माकमेते यदि पद्धतिं हठाद्दयाविहीनां प्रतिगृह्णते तदा ।
ध्येयाच्च वाचश्च परिच्युता इमे सेत्स्यन्ति सर्वे निरयाधिकारिणः ।।३८।।

यदि यह लोग हठ करके आप लोगोंके निर्दयमार्गका ग्रहण करेंगे तो अपने ध्येय और प्रतिज्ञासे भ्रष्ट होकर नरकके अधिकारी बनेंगे ।।३८।।

स्वतन्त्रमेते तत एव भारतं विधाय लोके जयमात्मनः परम् ।
कीर्तिं परामाप्नुयुरात्मकाम्यया सहायतां भारतवासिभिः कृताम् ।।३९।।

यह लोग भारतको स्वतन्त्र बनाकर तब स्वेच्छासे भारतवासियोंकी सहायता प्राप्त करके महान् विजय और कीर्तिको प्राप्त कर सकते हैं ।।३९।।

स्वीयं ब्रिटेनो वचनं तथा सुहृत्क्ष्मापतीनामनुरक्ष्य संहतिः ।
जगत्यपूर्वं यश आभजन्तु ते मनः सदा कामयते ममेति तु ।।४०।।

ब्रिटेन और मित्रराज्योंका समूह अपने वचनका पालन करके जगत्में अपूर्व यशको प्राप्त करें, यही मेरा मन सदा चाहता है ।।४०।।

यन्निर्दयत्वं समरे प्रदर्श्यते युष्माभिरेतेन तदद्भुतं महत् ।
यूयं दयापात्रमभूत सर्वथा ततो हि युष्मानपि कोपि जेष्यति ।।४१।।

युद्धमें जिस अद्भुत निर्दयताको आप दिखा रहे हैं उससे आप सर्वथा दयाके पात्र बन गये हैं। क्योंकि दूसरा कोई भी उसी निर्दयतासे आपको भी जीत सकेगा ।।४१।।

अथो जयश्रीः परिभूषयेत वः सुचारु कण्ठं जयमालया यदि ।
तथापि हिंसाजनिता न सा भवेत्कदापि वो गौरवकारणं महत् ॥४२॥

और मान लीजिये कि विजयश्रीने आपके गलेमें जयमाला डाल भी दी तो भी वह आपके गौरवका कारण नहीं हो सकता क्योंकि वह विजयश्री हिंसासे प्राप्तकी गयी है ॥४२॥

युष्माकमस्मिन्समरे यशस्विनां न निर्घृणानां स्तवमातनिष्यति ।
जगत्समग्रं जगदर्तिदायिनीं शक्तिं परं वः प्रथयेन्निरन्तरम् ॥४३॥

इस युद्धमें आपको यश मिल जाय तो जगत् आप जैसे निर्दय लोगोंकी स्तुति नहीं करेगा । प्रत्युत आपकी शक्तिको जगत्केलिये दुःखदायीके रूपमें सदा प्रख्यात करेगा ॥४३॥

न मित्रराजैर्यदि तत्प्रतिश्रुता स्वतन्त्रता सर्वजनेषु धीयते ।
भवन्तु तेऽप्यत्र सदैव गर्हिताः पथश्च्युतानामनिवारिता विपत् ॥४४॥

मित्रराज्योंने सबलोगोंको स्वतन्त्रता देनेकी प्रतिज्ञा की है । यदि वह उसका पालन नहीं करेंगे तो उनकी भी यहाँ सदा निन्दा ही होती रहेगी । जो लोग मार्गभ्रष्ट हैं उनकेलिये विपत्तिका मार्ग खुला पड़ा है ॥४४॥

स्वतन्त्रतामर्चति भारते पुनर्निजेच्छया सैन्यमिहापि रक्षितुम् ।
सुहृन्महीपैः सकलैर्हि शक्यते प्रोक्तं सदास्माभिरिदं तदीप्सितम् ॥४५॥

जब भारत स्वतन्त्र होगा तब मित्रराज्य अपनी इच्छाके अनुसार इस देशमें भी अपनी सेना रख सकेंगे, यह तो मैंने सदा कहा ही है और यह इनको इष्ट भी है ॥४५॥

श्वेतार्थनाशो न कदापि कामितः सत्यप्रतिष्ठैर्मम देशबन्धुभिः ।
अतो विहायाशु वसुन्धरामिमां सितान्प्रयातुं वयमर्थयामहे ॥४६॥

सत्यनिष्ठ हमारे देशबन्धु अंगरेजोंकी स्वार्थहानि कभी नहीं चाहते हैं । इसीलिये इस देशको छोड़कर शीघ्र चले जानेकेलिये हमलोग उनसे प्रार्थना करते हैं ॥४६॥

तेषु प्रयातेष्वथ युष्मदागतिर्भवेन्निरर्थेति पुनः पुनर्मया।
निगद्यते किन्तु हठात्समागता यूयं निरोध्या भरतप्रजाजनैः ॥४७॥

इनके जानेपर आपका आना निरर्थक ही होगा, यह बात मैं फिर फिरसे आपसे कहता हूँ। यदि आप हठ करके आवेंगे ही तो भारतीय प्रजा आपका सामना करेगी ॥४७॥

यूयं समित्राः परिहाय दुष्पथं सता पथा गच्छत बुद्धिशालिनः।
बलादनेनैव च वर्त्मना यतां ध्रुवं विनाशो व इतो भविष्यति ॥४८॥

आपलोग बुद्धिशाली हैं। अपने मित्रोंके साथ कुमार्गको छोड़कर सन्मार्गमें चलें। यदि इसी मार्गसे आप जायँगे तो अवश्य ही आपका नाश होगा ॥४८॥

न श्रोष्यथाथापि ममेति वाचिकं न त्यक्ष्यथाद्यापि च वर्त्म दुर्गमम्।
मनुष्यजातिर्नियतं विपत्पदं समेत्य सद्यो निहता भविष्यति ॥४९॥

जो आप मेरे इस संदेशको नहीं सुनेंगे और अभी भी इस मार्गका त्याग नहीं करेंगे तो मानवजाति अवश्य ही दुःखी होकर नष्ट हो जायगी ॥४९॥

श्वेताः प्रदास्यन्ति कदाच मे गिरां सदुत्तरं किञ्चिदपीति संभवेत्।
परंतु युष्मासु कृतं निवेदनं फलं न यच्छेदिति भीतिरस्ति मे ॥५०॥

संभव है कि अंग्रेज मेरे कथन का कुछ उत्तर देंगे परन्तु मुझे भय है कि आपके सामने किया गया सब निवेदन व्यर्थ जायगा ॥५०॥

विनासिधारां किमपीह नास्ति वः प्रतीतिपात्रं परमं सुसाधनम्।
वचः सदैतच्छ्रुतिसंनिशाति मे तथ्यं किमस्तीति न वेद्मि साम्प्रतम् ॥५१॥

मैं सुनता हूँ कि तलवारके सिवाय आपको किसी साधनमें विश्वास ही नहीं है। परन्तु सत्य बात क्या है, उसे मैं अभी नहीं जानता ॥५१॥

एतादृशा बहुविधा वचसां प्रवाहा,
युष्मान्समान्समधिकृत्य सदा वहन्ति।

युष्मन्मनस्यथ मनागपि चेदुदीया—
श्चित्तार्द्रता सफल एव मम श्रमः स्यात् ।।५२।।

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
षष्ठः सर्गः

आपके सम्बन्धमें इस तरहकी बातें चल रहीं हैं। यदि आपके मनमें जरा भी कोमलता आवेगी तो मेरा श्रम सफल हो जायगा ।।५२।।

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
स्वोपज्ञभारतराष्ट्रभाषाटीकायां पारिजातापहारे
षष्ठः सर्गः



## सप्तमः सर्गः

श्रीभारतीयनरपालमहानुभावाः,
श्वेताश्रयेण नितरां निजदेशबन्धून्।
पश्यन्ति शात्रवदृशेति महाकृपालु-
रुद्दिश्य तान्गिरमुदाहरदीदृशीं सः ॥ १ ॥

भारतीय राजालोग अंग्रेजोंका सहारा लेकर अपने देशबन्धुओंको शत्रुकी दृष्टिसे देखते हैं, इसलिये वह दयालु श्रीमहात्माजी राजाओंको उद्देश्य करके इस प्रकार वचन बोले ॥ १ ॥

युष्मासु सन्ति बहवो मम संस्तुतास्तैः,
साकं प्रभूतनरपैर्मम गाढहार्दम्।
तेषां धराधुरभुजामपि वीतिनिन्द्यां,
दृष्ट्वा दशां हृदयमेति मम प्रकम्पम् ॥ २ ॥

हे राजाओ ! आपमेंसे कितने ही मेरे परिचित हैं। कितने ही नरेन्द्रोंके साथ मेरा गाढ़ सम्बन्ध है। आज उन सबकी तथा आपकी अति निन्दनीय दशा देखकर मेरा हृदय काँपता है ॥ २ ॥

श्वेताधिराज्यरथचालकशासकानां,
सन्त्यत्र भारतमहीपतयो विसृष्टिः।
एतद्विचार्य सहसोद्भवति प्रबुद्धा,
भीतिर्महापदनलैः परिवारिताद्य ॥ ३ ॥

अंग्रेजी राज्यके शासकोंने ही भारतके राजाओंकी सृष्टि की है। यह विचारकर दुःखदावानलसे युक्त भय सहसा मेरे हृदयमें प्रकट होता है ॥ ३ ॥

यद्यप्यनेकपृथिवीपतयोत्र पूर्व-
मासन्न चात्र मम कापि विवादभूमिः।
किन्त्वद्य गौरवपुषामनुकम्पयैव,
यूयं स्वदेशभुवि जीवथ तत्तु चित्रम् ॥ ४ ॥

भय प्रकट होनेका कारण बताते हैं। यद्यपि अनेक राजा इस अंग्रेजी राज्यसे पहले भी यहाँ थे, इसमें मुझे कोई विवाद नहीं है। परन्तु आश्चर्य तो यह है कि आज आपलोग अपने देशमें भी जीते हैं केवल गोरोंकी दयापर। यह न होंगे तब आपकी क्या दशा होगी यही भयका कारण है ॥ ४ ॥

श्वेताङ्गशासनसमागमनप्रभाते,
तेषां कृपाजलनिधेरभिदर्शनाय।
स्यादेव शुल्कमिह दत्तममूल्यमेव,
युष्माकमग्र्यपुरुषैरिति नो नकारः ॥ ५ ॥

अंग्रेजी राज्यके यहाँ आनेपर उनकी दयाका दर्शन करनेकेलिये आपके पूर्वजोंने भारी शुल्क दिया होगा, इसे मैं अस्वीकार नहीं करता ॥५॥

एतेखिला स्थ पृथिवीपतयोद्य यूयं,
तद्राज्यनीतितनुजा इति मे विचारः।
श्वेताङ्गकोपनविलोचननिस्सृतैक-
शुष्मस्फुलिङ्ग इह वोलमपासनाय ॥ ६ ॥

यह जितने आप राजा हैं, मेरे विचारमें सभी अंग्रेजी राज्यकी नीतिमेंसे पैदा हुए हैं। अंग्रेजोंकी आँखोंमेंसे क्रोधाग्निकी एक भी चिनगारी निकलकर आपलोगोंका नाश करनेकेलिये पर्याप्त है ॥ ६ ॥

श्वेताङ्गतामिह विहाय निजप्रजाना-
मङ्गत्वमेत्य हि भविष्यथ वीतचिन्ताः।
नो चेद्गतेषु सितवर्ष्मसु देशतोस्मा-
द्युष्माकमत्र न भविष्यति भूपतित्वम् ॥ ७ ॥

आप लोग अंग्रेजोंका अङ्ग बनना छोड़कर अपनी प्रजाके अङ्ग बनें तो ही आप निश्चिन्त होगें। अन्यथा जब गोरे इस देशसे चले जायँगे तब आपका यह राज्य नहीं रहेगा ॥ ७ ॥

श्वेताः प्रयान्तु मतिमत्त्वमुपास्य देशात्,
स्वेच्छापुरस्सरमथान्यमहाबलेन ।
निश्चप्रचं भवति भारतभूमितस्तै-
र्यातव्यमस्ति समया सितशासनेन ॥ ८ ॥

अंग्रेज स्वेच्छासे बुद्धिमत्तापूर्वक यहाँसे चले जायँ तो अच्छा है। अन्यथा किसी अन्यकी बड़ी शक्तिके कारण इस देशसे इस अंग्रेजी राज्यको अवश्य जाना ही पड़ेगा ॥ ८ ॥

नाशं गमिष्यति सिताङ्गधराधिपत्वे,
श्रीभारताङ्करतभूमिसुता नरेन्द्राः ।
स्वातन्त्र्यभास्कर उदेष्यति नूनमत्र,
तस्माच्छिवं व्यवहरध्वमवेक्ष्य कालम् ॥ ९ ॥

हे भारतभूमिके पुत्र राजाओ ! भारतसे गोरोंका राज्य तो जायगा ही। अवश्य ही यहाँ स्वातन्त्र्यरूप सूर्यका उदय होगा। अतः समयको देखकर श्रेयस्कर व्यवहार कीजिये ॥ ९ ॥

यूयं प्रजाहितमपेक्ष्य गतश्रियश्चेत्,
सद्यो भवेत महती कृतिरेषिका वः ।
नो चेद्विधाय निखिलाः प्रकृतीः स्वकीया,
राज्ये सुखं स्वपित हन्त समाधिकाराः ॥ १० ॥

यदि आपलोग प्रजाके हितका विचार करके राज्यका त्याग कर दें तो आपका यह बहुत बड़ा कार्य गिना जायगा। यदि यह न कर सकें तो अपनी समस्त प्रजाको राज्यका समान अधिकारवाली बनाकर सुखकी नींद सोइये ॥ १० ॥

साहाय्यमाप्य पृथिवीपतयः प्रजानां,
राज्यं प्रचालयितुमर्हथ चात्मनीनम्।
तां योग्यतां न दधते प्रतिवागियं वो,
युष्माकमप्ययशो वितनोति दिक्षु ॥ ११ ॥

हे राजाओ, प्रजाकी सहायता प्राप्त करके कल्याण कारक राज्य आप चलावें। आपका यह कहना कि प्रजामें योग्यता नहीं है, प्रजाकी अपकीर्तिके साथ-साथ आपकी अपकीर्ति भी चारों तरफ फैलती है ॥११॥

युष्माकमेव विमलः परमोस्ति धर्मो,
योग्या विधातुमिह ता अथ ता अयोग्याः।
वाच्या न ता भवति वोक्षमणीयदोषः,
सज्जा हि तिष्ठत सदात्मनिरीक्षणाय ॥ १२ ॥

उनको योग्य बनाना आपका परम-पवित्र धर्म है। यदि वह अयोग्य हैं तो उनको दोष नहीं दिया जा सकता। यह तो आपका ही अक्षन्तव्य दोष है। अतः आत्म-निरीक्षण करनेकेलिये आप सदा तैयार रहें ॥१२॥

एकैव तिष्ठति मनुष्यपरम्परेय—
मज्ञा भवन्तु सकला अथवा सुविज्ञाः।
श्वेताङ्गराज्य इह चेन्निखिला अभिज्ञाः,
को हेतुरेष यदि वो भुवि ते न विज्ञाः ॥ १३ ॥

यहाँ मनुष्योंकी एक ही तो परम्परा है। अदि अज्ञानी—अयोग्य हों तो सबके सब, अथवा योग्य बनें तो भी सबके सब। अंग्रेजी राज्यमें यदि वह योग्य बन सकते हैं, और यदि वही आपके यहाँ अयोग्य बन सकते हैं, तो इसमें कारण क्या है ? ॥ १३ ॥

भूपा भवेत सकला इह चेदुदारा,
यूयं क्षतिर्न हि भवेद्यश एव वोत्र।
यस्यां स्थितावहह जीवथ सर्वलोकान्,
सा नाशयिष्यति समूलमिति प्रतीतिः ॥ १४ ॥

राजाओ! यदि आप सब उदार बन जायँ तो कोई हानि नहीं हो सकती, आपकी कीर्ति ही यहाँ बढ़ेगी। दुःखकी बात है कि आप आज जिस स्थिति में जीवन धारण करते हैं, वह मालूम होता है कि सबका समूल नाश करेगी ॥ १४ ॥

हे भारतीयनरपाः पुरुषायुषं वः,
स्यादित्यहं प्रतिदिनं प्रभुतः समीहे।
निक्षेपमेव निजराज्यमवेत सर्व-
मित्येव मे मनसि तिष्ठति कोपि भावः ॥ १५ ॥

हे भारतीय नरपाल! मैं भगवान्से रोज चाहता हूँ कि आप सौ वर्ष जीवें। परन्तु मेरे मनमें एक अद्वितीय भाव यह है कि आप अपने सम्पूर्ण राज्यको केवल धरोहर समझें ॥ १५ ॥

त्यक्त्वा निरंकुशमतिं प्रवणा भवेत,
प्राजोपकारकरणे महिता भवेत।
माह्याकुलीन इह कोपि न कस्यचित्स्यात्,
स्वातन्त्र्यमीषदपि हर्तुमलं सुशक्तः ॥ १६ ॥

आप निरंकुश विचारको छोड़कर प्रजाके उपकारकी ओर झुकें, इससे आप पूजित ही बनेंगे। तब कोई सत्कुलप्रसूत चाहे वह जितना भी समर्थ हो, किसीकी स्वतन्त्रताको हरण करनेमें समर्थ नहीं होगा ॥ १६ ॥

भूपो न नैगम इह स्वयमर्जितं वा,
न क्षेत्रपोपि निजपूर्वजनार्जितं वा।
भोक्तुं स्वयं कमपि संदधतेधिकारं,
सर्वस्य भागमिह संनिहितं प्रवित्त ॥ १७ ॥

राजा हो या वणिक् हो या कृषक हो, उसके पास जो सम्पत्ति स्वोपार्जित है या पूर्वपुरुषोपार्जित है, उसके भोगकेलिये उसे ही कोई अधिकार प्राप्त नहीं है। उसमें सबका ही भाग है, ऐसा समझना चाहिये ॥१७॥

स्वप्रातिवेशिकनृणामभिलाषजातं,
कृत्वा सुरक्षितमथो महतीं स्वशक्तिम्।
सर्वे प्रयोक्तुमिह सन्ति सदा स्वतन्त्रा,
एतद्धि मानवकुलस्य विशुद्धवर्त्म ॥ १८ ॥

अपने पड़ोसियोंकी इच्छाओंको सुरक्षित रखकर ही अपनी महती शक्तिका प्रयोग करनेकेलिये सब सदा स्वतन्त्र हैं। मानव समाज का यही पवित्र मार्ग है ॥ १८ ॥

शक्त्या स्वयापि समुपार्जितवस्तुभोगे,
स्वातन्त्र्यमस्ति न निरङ्कुशमित्यवेत।
राष्ट्राङ्गतां च भजते मनुजो यथाङ्गम्,
लाभस्तथा स सकलस्य समीपगस्य॥ १९ ॥

अपनी शक्तिसे भी पैदा किये हुए धनके उपयोग करनेमें सर्वथा स्वतन्त्रता नहीं है। जिस प्रकारसे मनुष्य राष्ट्रका अङ्ग है उसी प्रकारसे धनलाभ भी पासमें रहनेवाले सभीका अङ्ग है ॥ १९ ॥

स्वस्यैव लाभमभिलष्य कृतो भवेन्नो,
शक्त्यादिकव्यय इहापि तु बुद्धिमद्भिः।
राष्ट्रं समाजमभिरक्षितुमप्यजस्रं,
कर्तव्य एव स इति प्रथितोधिपन्थाः ॥ २० ॥

केवल अपने ही लाभके लिये शक्ति आदिका व्यय नहीं करना चाहिये। किन्तु बुद्धिमानोंको चाहिये कि राष्ट्र और समाजकी निरन्तर रक्षाकेलिये भी उनका व्यय करें। यही उत्तम मार्ग है ॥ २० ॥

वैषम्यहेतुरिह केवल—मज्ञतास्ति,
व्याप्ता प्रजासु निखिलासु चिरेण हन्त।
तस्यां विनाशमभितोतितरां गतायां,
वैषम्यजीवनमवश्यमदृश्यमास्ताम् ॥ २१ ॥

केवल अज्ञान ही विषमताका कारण है। वह अज्ञान चिरकालसे सब प्रजाओंमें भरा हुआ है। यदि उसका सब प्रकारसे नाश हो जाय तो विषमता अवश्य नष्ट हो ॥ २१ ॥

वैषम्यनाशनविधौ यदि नाम हिंसा,
ग्राह्या भवेदतितमां विषमा दशा स्यात्।
राष्ट्रस्य सर्वसमजस्य च शुद्धिहेतु—
रेका वितिष्ठत इयं रुचिरा ह्यहिंसा ॥ २२ ॥

यदि उस विषमताको नष्ट करनेकेलिये हिंसाका आश्रय लिया जाय तो वह अत्यन्त विषम दशा होगी। अतः राष्ट्र और सर्व समाजकी शुद्धिका कारण एक अहिंसा ही है जो अत्यन्त सुन्दर है ॥ २२ ॥

अभ्यर्थनेयमथवा मम कार्यरीति—
राश्रित्य निर्मलमहिंसनमेव बोध्या।
अन्यं परं कमपि हेतुमुदारमार्यं,
जानामि शंवितनने न विना तदद्य ॥ २३ ॥

मेरी यह प्रार्थना अथवा मेरी कार्य करनेकी पद्धति केवल अहिंसाका आश्रय लेकर है, यह जानना चाहिये। शान्तिवृद्धिकेलिये अहिंसा के बिना किसी अन्य उत्तम और उदार हेतुको नहीं जानता हूँ ॥ २३ ॥

फ्रान्साधिवासिन उदाहृषतातिशस्यां,
शिक्षां मनोहरतमां किल बन्धुतायाः।
स्वातन्त्र्यसाम्यगुणयोरपि रक्षणं च,
श्लाघ्यास्ततः समभवन्भुवि भूरिभाग्याः ॥ २४ ॥

फ्रान्सनिवासियोंने बन्धुताकी अत्यन्त प्रशस्त और मनोहर शिक्षाका उदाहरण उपस्थित किया है। स्वतन्त्रता और समानता का भी रक्षण हुआ है। इसीलिये वह लोग जगत्में प्रशंसापात्र बने हैं ॥ २४ ॥

यत्तैर्न साधितमनुत्तमकार्यजातं,
तद्भारतीयजनता ननु साधयेत।

न श्वेतशासनमिदं भवितात्र देशे,
यूयं न चापि भवितास्थ विरुद्धभावाः ॥२५॥

जो सर्वोत्तम कार्य फ्रान्सके लोग नहीं कर पाये हैं उसे भारतकी जनता अवश्य सिद्ध करेगी। इस देशमें न तो अंग्रेजी राज्य रहेगा और न आप लोग ही इस विरुद्ध भावके साथ रहेंगे ॥ २५ ॥

आधारस्तम्भभूताः सिततनुनरपत्वस्य रक्षाकृदग्र्या,
यूयं सद्यः क्षितीशा भवथ नहि यदि श्रेयसे स्वप्रजानाम् ।
यौष्माके प्राज्यराज्ये सकलगुणभृताः सत्प्रजाः प्रार्थयिष्ये,
युष्मान्नेतुं विशुद्धं सरलजनसमागम्यमध्वानमारात् ॥२६॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
सप्तमः सर्गः

हे राजाओ, अंग्रेजी राज्यके आपलोग ही स्तम्भ हैं, उसके रक्षकोंमें श्रेष्ठ हैं। यदि आप लोग अपनी प्रजाके कल्याणमें नहीं लग जाते तो मैं आपके राज्यमें रहनेवाली सर्वगुणसम्पन्न प्रजाको कहूँगा कि वह आपको शीघ्र ही सीधे मार्गमें ले जाय ॥ २६ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीभगवदाचार्यपण्डितराजप्रणीते
स्वोपज्ञभारतराष्ट्रभाषाटीकायां पारिजातापहारे
सप्तमः सर्गः



# अष्टमः सर्गः

सेवाग्रामे समायातं पत्रप्रतिनिधित्रयम् ।
अम्रीकातो महात्मानं द्रष्टुं प्रष्टुं च किञ्चन ॥ १ ॥

सेवाग्राममें अमेरिकासे पत्रोंके तीन प्रतिनिधि श्री महात्माजीके दर्शनकेलिये और कुछ पूछनेकेलिये आये ॥ १ ॥

जापानाय न दातव्यं साहाय्यमिति चेन्मतम् ।
स्पष्टमेव कुतस्तस्य विरोधं कुरुषे नहि ॥ २ ॥

उनमें से एक ने पूछा कि यदि आपका यह मत हो कि जापान को सहायता नहीं देनी तो स्पष्ट विरोध आप उसका क्यों नहीं करते ? ॥ २ ॥

अहिंसासहयोगेन कोपि लाभो भवेन्नहि ।
निमन्त्रितो भवेज्जापः प्रतिकूलं फलं भवेत् ॥ ३ ॥

अहिंसक सहयोग से तो कोई लाभ नहीं है । उलटा जापान को निमन्त्रण देना है ॥ ३ ॥

तेष्वेकस्य निशम्यैव प्रश्नमेतं महामुनिः ।
शङ्काशङ्कुविनाशाय मौनमुद्रामभङ्क्त सः ॥ ४ ॥

इस प्रश्न को सुनकर श्री महात्माजी बोले ॥ ४ ॥

ब्रह्मदेशाद्यथाऽङ्ग्रेजा रणभूमेरपासरन् ।
तथात्राप्याचरेयुश्चेत्करिष्यामस्तदा नु किम् ॥ ५ ॥

जिस प्रकारसे ब्रह्मदेशसे अंग्रेज लोग रणभूमिमेंसे भाग गये, ऐसे ही यदि यहाँ भी वह करें तो मैं क्या करूँगा ? ॥ ५ ॥

ईषद्धास्यमुपास्यैष पत्रप्रतिनिधिर्मुहुः ।
विज्ञातुमेतद्देवाऽऽयमित्युवाच प्रसन्नधीः ॥ ६ ॥

पत्र प्रतिनिधी इसे सुनकर मुसकुराकर, प्रसन्न होकर बोला कि मैं यही जानने के लिये तो आया हूँ ॥ ६ ॥

तत्तोषाय महामान्यो महात्मा वचनामृतम् ।
पाययितुं प्रवृत्तस्तं कृपावारिमहानिधिः ॥ ७ ॥

तब महात्माजी उसको सन्तुष्ट करनेकेलिये वचनामृतका पान कराने लगे—बोलने लगे ॥ ७ ॥

अहिंसारूपशस्त्रस्य स्यादत्रैव प्रयोजनम् ।
नान्यदस्त्रं च शस्त्रं च बिभृमो वयमर्थकृत् ॥ ८ ॥

"अहिंसा रूप शस्त्रका ऐसे ही समय में तो प्रयोजन है। किसी दूसरे अस्त्र-शस्त्रको मैं धारण नहीं करता ॥ ८ ॥

सेनानीर्मित्रभूपानामन्यस्थानात्कुतश्चन ।
जापानं प्रतियोद्धुं चेन्निर्णयेत्का गतिर्हि नः ॥ ९ ॥

मित्र राज्योंका सेनापति यदि किसी अन्य स्थानसे जापानके साथ लड़ना चाहे तो उस समय हमारी क्या दशा होगी ? ॥ ९ ॥

अतोऽहिंसा परं शस्त्रमजेयं जिष्णु निश्चलम् ।
तामाश्रित्य रिपूञ्जेतुं शक्नुमो नात्र संशयः ॥ १० ॥

अहिंसा अजेय, विजयी और अचल शस्त्र है। अतः हम उसीका आश्रय लेकर निस्सन्देह शत्रु को जीत सकते हैं ॥ १० ॥

आगच्छेदत्र जापानः प्राप्नुयान्न सहायताम् ।
निवर्तेत स्वयं सोऽस्मान्निराशो निष्फलश्रमः ॥ ११ ॥

यदि जापान यहाँ आवेगा तो सहायता प्राप्त न होनेसे निराश होकर स्वयं ही इस देशसे चला जायगा ॥ ११ ॥

हेतुनैतेन नैवासौ भारताक्रमणाद्रणात् ।
निवर्तेतेति भूयोऽसौ जगाद मुनिसत्तमम् ॥ १२ ॥

पत्र-प्रतिनिधिने कहा कि केवल इसी कारणसे तो जापान भारत-पर आक्रमण करनेसे या युद्ध करनेसे रुक नहीं सकता ॥ १२ ॥

तदुक्तं तत्समाकर्ण्य दयावारिमहोदधिः।
विधातुं तं निराशङ्कमब्रवीन्मुदिताननः ॥ १३ ॥

उसके इस कथनको सुनकर दयालु महात्माजी उसे निःशङ्क बनाने-केलिये प्रसन्न मनसे बोले ॥ १३ ॥

अवश्यं न निरुन्धीत हिंसाहीनाऽसहायता।
आक्रमणं तथाप्येषाऽनर्थकं तत्करिष्यति ॥ १४ ॥

यद्यपि अहिंसक असहकार आक्रमणको रोक नहीं सकता परन्तु उसे वह निरर्थक बना देगा ॥ १४ ॥

निश्शस्त्रान्नैव हन्यान्नो जापानः शस्त्रसज्जितः।
हन्यादेवाथवा सर्वानस्मान्कारुण्यवर्जितः ॥ १५ ॥

अस्त्र-शस्त्रों से सुसज्जित जापान निःशस्त्र हमको मार नहीं सकता। अथवा यदि उसमें दया न होगी तो वह हम सबको मार सकेगा ॥१५॥

तथाभूतेऽपि सोऽस्माकं जय एव भविष्यति।
न केनापि प्रकारेण सिद्धार्थोऽसौ भवेद्यतः ॥ १६ ॥

यदि वह हम सबको मार डालेगा तो वह भी हमारा ही जय माना जायगा; क्योंकि हमको पराधीन बनाने की उसकी इच्छा सफल नहीं हुई ॥ १६ ॥

मन्ये सर्वं निशम्यैतदन्तर्हासं हसिष्यसि।
जाड्यं वाऽमानुषं वापि वाक्यं मे स्यान्मतौ तव ॥ १७ ॥

मैं समझता हूँ कि आप मेरी इस बात को सुनकर मन ही मन में हँसेंगे। अथवा मेरी यह बात आपकी दृष्टि में मूर्खतापूर्ण अथवा अलौकिक प्रतीत होगी ॥ १७ ॥

त्वं वा जवाहिरो वापि भवेतं शासनेन चेत्।
निगृहीतौ तदा किं स्यादिति पृष्टोऽवदन्मुनिः॥ १८॥

पत्र-प्रतिनिधिने पुनः पूछा—यदि भारतसर्कार आपको या पण्डित जवाहिरलालजीको पकड़ ले तो क्या हो? तब महात्माजी बोले—॥१८॥

विद्युद्वेगेन शक्तीनां संचारोऽत्र प्रजासु च।
भविष्यति न शङ्केथा आवयोर्निगृहीतयोः॥ १९॥

हम दोनोंके पकड़े जानेपर प्रजामें बिजलीके वेगके समान शक्तिका संचार हो जायगा। इसमें शङ्का नहीं करें॥ १९॥

अंग्रेजा योद्धुकामाश्चेन्निर्गच्छेयुर्न भारतात्।
व्याकुलयेत्कथं तान्नासहकारो ह्यहिंसकः॥ २०॥

युद्धकी इच्छा होनेके कारण यदि अंगरेज भारतसे न निकलें तो क्या आपका अहिंसक असहयोग उन्हें व्याकुल नहीं बनावेगा? ॥२०॥

आम्रीकस्य वचः श्रुत्वा पुनः प्रोवाच स प्रभुः।
नाहं तदस्त्रमेतेषु संप्रयोक्तुं विचारये॥ २१॥

इसे सुनकर श्रीमहात्माजी बोले कि असहयोगरूप शस्त्रका प्रयोग मैं अंगरेजोंपर नहीं करना चाहता हूँ॥ २१॥

जापानाय न साहाय्यं कार्यमस्माभिरित्यसौ।
निर्णयो नस्ततो नास्ति स्थाने प्रश्नोऽयमद्य ते॥ २२॥

जापानको सहायता नहीं देनी, इतना ही इस समय हमारा निर्णय है। अतः आपके इस प्रश्नकेलिये अवकाश ही नहीं है॥ २२॥

वर्षैः पञ्चाशतादेशो मामकः कस्यचिद्वशम्।
यावज्जीवं कदाचिन्नो अङ्गीकर्तुमशिक्षत॥ २३॥

पचास वर्षोंसे हमारे देशने सीखा है कि किसीकी पराधीनताको जीवनभर कभी भी स्वीकार नहीं करना॥ २३॥

जर्मनस्याथ जापानस्याथवा सितचर्मणाम् ।
अङ्गीकर्तुं न कस्याप्यशिक्षतायमधीनताम् ॥ २४ ॥

जर्मनी हो, जापान हो, अथवा अंगरेज हों, किसीकी दासता स्वीकार करने को इस देश ने नहीं सीखा है ॥ २४ ॥

युध्यमानेषु चाङ्ग्लेषु कथं स्यात्सप्रभावकम् ।
अस्त्रं मदीयमनघमगाधबलशाल्यपि ॥ २५ ॥

जब कि अंगरेज यहाँ युद्ध करते रहेंगे तो मेरा असहयोग-शस्त्र यद्यपि बल्वान् और निर्दोष है तो भी प्रभावशाली सिद्ध नहीं हो सकेगा ॥२५॥

हिंसकेऽथ प्रतीकारे येषां स्यात्प्रत्ययः परः ।
साहाय्यमङ्गरेजानामवश्यं तैः करिष्यते ॥ २६ ॥

जिनको हिंसक प्रतिकार ( बचाव ) में विश्वास होगा वह अवश्य ही अंगरेजोंकी सहायता करेंगे ॥ २६ ॥

यावदिष्टं हि साहाय्यं भारतात्सर्वमाप्यते ।
धनानां च जनानां च वक्तीदममरी सदा ॥ २७ ॥

एमरी साहेब तो हमेशा यह कहते रहते हैं कि धन-जनकी जितनी सहायता चाहिये, वह सब भारत से मिल रही है ॥ २७ ॥

यावद्धनमिमे सर्वे दिनेनैकेन चाप्नुयुः ।
तावन्महासभा प्राप्तुं वर्षेणापि न शक्नुयात् ॥ २८ ॥

यह अंगरेज जितना धन एक दिन में प्राप्त कर लेंगे उतना महासभा तो एक वर्ष में भी नहीं प्राप्त कर सकेगी ॥ २८ ॥

असहाया वयं तस्माद्धिंसाशून्यां सहायताम् ।
सत्कर्तुं शक्नुयामाथ तेषां नापेक्षितं हि तत् ॥ २९ ॥

हमारा दूसरा कोई सहाय नहीं है। अहिंसक सहायता ही हम कर सकते हैं परन्तु उनको इसकी आवश्यकता नहीं है ॥ २९ ॥

श्वेतत्वचां वयं मार्गे स्तरीष्यामो न कण्टकम् ।
जापानाय च साहाय्यं दास्यामो न कदाचन ॥ ३० ॥

हम लोग अंगरेजोंके मार्गमें काँटे नहीं बिछावेंगे और जापानको कभी सहायता नहीं देंगे ॥ ३० ॥

अतः परं न शक्ष्यामः कर्तुं किञ्चित्कथञ्चन ।
अहिंसामाश्रितैः किञ्चनान्यत्कर्तुं न शक्यते ॥ ३१ ॥

इससे अतिरिक्त हम कुछ नहीं कर सकेंगे । अहिंसाका पुजारी इससे अधिक कुछ कर ही नहीं सकता है ॥ ३१ ॥

न्यायालयाः प्रवर्तन्ते शासनस्य तदिच्छया ।
तत्रापि हेतुरस्माकं नीतिरक्लेशकारिणी ॥ ३२ ॥

हमारी नीति ही यह है कि सर्कारको कष्ट नहीं देना । इसीलिये सर्कारकी इच्छाके अनुसार न्यायालय भी चल रहे हैं ॥ ३२ ॥

आम्रीकी पृतनाऽऽगच्छेदत्र चेत्तेऽत्र सम्मतिः ।
कास्तीत्यतिथिना तेन पुनर्जिज्ञासितं मुदा ॥ ३३ ॥

उस अतिथि—पत्र-प्रतिनिधिने पुनः पूछा कि यदि यहाँ अमेरिकाकी सेना आवे तो इसमें आपकी क्या संमति है ? ॥ ३३ ॥

प्रत्याम्रीकं विभात्येतत्साहाय्यं भारतस्य मे ।
कर्तव्यमिति सन्दिश्य जोषमास्त स पृच्छकः ॥ ३४ ॥

अमेरिकाको ऐसा प्रतीत होता है कि उसे भारतकी यह सहायता करनी ही चाहिये । इतना कह कर वह चुप हो गये ॥ ३४ ॥

तदाङ्ग्रेजैः कृताः पीडाः स्मृत्वा स्मृत्वा सुदुःखितः ।
दयालुर्भगवान्गाँधिः शनैः प्रोवाच सत्वरम् ॥ ३५ ॥

उस समय अंगरेजोंने जो दुःख दिये थे उन्हें स्मरण कर करके अत्यन्त दुःखित होकर दयालु भगवान् महात्मा गांधीजी बोले ॥ ३५ ॥

अम्रीकायाः कृतावस्यां संमतिर्मे न विद्यते ।
यत एतद्धि साहाय्यं बलादस्मासु यन्त्रितम् ॥ ३६ ॥

अमेरिकाके इस कार्यमें मेरी संमति नहीं है। क्योंकि यह सहायता बलात्कारसे हमपर लादी गयी है ॥ ३६ ॥

अस्माकमिच्छया नैषा नाज्ञयापि समागता ।
भारते तेन रोचेत नेहास्मभ्यं तदागमः ॥ ३७ ॥

न तो हमारी इच्छासे और न हमारी आज्ञासे यहाँ अमेरिकाकी सेना आयी हुई है। अतः उसका आना हमें रुचिकर ( पसन्द ) नहीं है ॥ ३७ ॥

अस्मदिच्छाविरुद्धं नः समरेऽस्मिन्नियोजनम् ।
आघोषितमिहाङ्ग्रेजैस्तुदत्यद्यापि तन्मनः ॥ ३८ ॥

हमारी इच्छाके विरुद्ध अंगरेजोंने हमें भी इस युद्धमें सम्मिलित होनेकी घोषणा कर दी है। यह हमारे मनको अभी भी पीड़ा पहुँचा रहा है ॥ ३८ ॥

यथेच्छमेव तैरद्य येषां केषामपीश्वरैः ।
वस्तूनामत्यनिष्टानां भारैरर्द्यामहे वयम् ॥ ३९ ॥

वह अपनी इच्छाके अनुसार ही, हमको प्रिय नहीं हो, ऐसी वस्तुओंके भारसे भी हमको पीड़ित कर रहे हैं ॥ ३९ ॥

आम्रीकीः पृतना एते समानीयात्र भारते ।
अस्माकं कण्ठरज्जुं तां दृढीकर्तुं समुत्सुकाः ॥ ४० ॥

वह यहाँ अमेरिकाकी सेनाको ले आकर हमारे गलेकी रस्सीको और भी दृढ़ करनेको तैयार हैं ॥ ४० ॥

किं किं च भारते वृत्तं प्रत्यहं जायते न तत् ।
त्वं विजानासि नाप्यस्ति तज्ज्ञानैस्ते प्रयोजनम् ॥ ४१ ॥

भारतमें प्रतिदिन क्या-क्या होता है, इसे आप नहीं जानते हैं। इसके जाननेका आपको प्रयोजन भी नहीं है ॥ ४१ ॥

आङ्गलानां पापकृत्यानि कथयामि निशामय।
पापानां पापकृत्यैस्तैर्दुःखं स्यात्तोऽपि चेतसि ॥ ४२ ॥

अंगरेजोंके पापोंको मैं कहता हूँ, आप सुने। इससे आपके चित्तमें भी दुःख होगा ॥ ४२ ॥

वायुयानावताराय भूमिरेतैरपेक्षिता।
ग्रामीणानखिलांस्तस्माद्ग्रामान्निष्काशयन्ति ते ॥ ४३ ॥

अंगरेजोंको विमान उतारनेकेलिये जगह चाहिये। इसकेलिये वह गाँवके लोगोंको गाँवसे बाहर निकाल रहे हैं ॥ ४३ ॥

गृहाणि गृहवस्तूनि परित्यज्य व्रजन्तु ते।
इत्यादेशं विधायैते सद्यः कर्षन्ति तान्बहिः ॥ ४४ ॥

घरके वस्तुओंको छोड़कर वह शीघ्र बाहर निकल जायँ, ऐसी आज्ञा देकर तुरत उनको बाहर खींच लेते हैं ॥ ४४ ॥

ते दीनाः कुत्र गच्छेयुः क्व स्थानं स्थापितं तु तैः।
अल्पेन प्रतिदानेन किं नु कुर्वन्तु ते हताः ॥ ४५ ॥

वह गरीब गाँववाले कहाँ जायँ? उन्होंने कहाँ स्थान बनाया है? बदलेमें उन्हें इतनी थोड़ी रकम मिलती है कि उससे वह दीन क्या कर सकते हैं? ॥ ४५ ॥

स्वतन्त्रेष्वथ देशेषु नैवं भवितुमर्हति।
अस्मासु परतन्त्रेषु नास्ति किञ्चिदसङ्गतम् ॥ ४६ ॥

स्वतन्त्र देशमें ऐसा कभी नहीं हो सकता। हम तो परतन्त्र हैं अतः यहाँ जो कुछ किया जाय सब युक्त ही है ॥ ४६ ॥

देशेष्वपरतन्त्रेषु सैनिकैरुटजान्नवान्।
कारयित्वा ततो गन्तुमादेशः सम्प्रदीयते ॥ ४७ ॥

स्वतन्त्र देशोंमें सैनिकों द्वारा नये झोपड़े तैयार कराकर तब उनको घरसे निकलनेकी आज्ञा राजा देता है ।। ४७ ।।

प्रजानां गृहवस्तूनि तेषु तेषूटजेषु तैः ।
सैनिकैरेव नीयन्ते सव्यवस्थं ससाधनम् ।। ४८ ।।

प्रजाके घरके तमाम वस्तुओंको उन नये झोपड़ोंमें सैनिकोंके द्वारा ही व्यवस्थाके साथ पहुँचाया जाता है ।। ४८ ।।

षण्मासाञ्जीविकां कर्तुं साधनं तत्र दीयते ।
एतत्सर्वं विधायैव तान्गृहं हापयन्ति ते ।। ४९ ।।

छ महीने तक उनकी जीविकाका साधन स्वतन्त्र देशोंमें दिया जाता है । इतना करके ही तब उन्हें घर छोड़नेको कहा जाता है ।। ४९ ।।

जापानागमनात्पूर्वमत्र दुःखपविर्महान् ।
प्रजानां मस्तकेष्वद्य पातितस्तैर्बलादपि ।। ५० ।।

जापानके आनेसे पूर्व ही यहाँ प्रजाके सिरपर बलात् दुःखका वज्र गिराया गया है ।। ५० ।।

निरणायि मया तस्मादनुपायेन भारतात् ।
गन्तुं ब्रिटेनमादेष्टुमविलम्बेन स्वं गृहम् ।। ५१ ।।

निरापाय होकर मैंने निर्णय किया है कि अंगरेजोंको कहूँ कि वह भारत छोड़कर अब चले जायँ ।। ५१ ।।

ब्रैटिशस्याधिराज्यस्य समाप्तिर्यदि भारते ।
अम्रीका ब्रिटनश्चापि साधुवादमवाप्स्यतः ।। ५२ ।।

यदि भारतमें ब्रिटिश राज्य खत्म हो जाय तो अमेरिका और ब्रिटेन दोनों ही धन्यवाद प्राप्त करेंगे ।। ५२ ।।

यदि गन्तुं सिताङ्गा नो कामयेरन्त्रितस्तदा ।
आदाय सम्मतिं नोऽत्र ते तिष्ठेयुः सुखं चिरम् ।। ५३ ।।

यदि अंगरेज यहाँसे न जाना चाहें तो वह हमारी सम्मति लेकर चाहे जबतक यहाँ रहें ॥ ५३ ॥

सखाय एव भूत्वात्र संस्थातुं शक्नुवन्तु ते ।
भारतस्वामिभावेन तेषामिष्टात्र न स्थितिः ॥ ५४ ॥

मित्र बनकर ही वह यहाँ रह सकते हैं । भारतका स्वामी बनकर उनका यहाँ रहना हमें इष्ट नहीं है ॥ ५४ ॥

संमर्दं यत्र तत्रैव कारयितुं न नो हृदि ।
जागर्ति भावना कापि सत्याहिंसापरायणे ॥ ५५ ॥

मेरे हृदयमें सत्य और अहिंसाकेलिये सम्पूर्ण स्थान है । अतः मैं जहाँ तहाँ लड़ाई कराना या जगाना नहीं चाहता ॥ ५५ ॥

संमर्दं कारयित्वात्र तेषां निष्काशनादतः ।
विषह्य विपदां राशिं वरं तेषां निवर्तनम् ॥ ५६ ॥

लड़ाई कराकर उन्हें यहाँसे निकालनेकी अपेक्षा अनेक दुःखोंको सहकर- उन्हें यहाँ लौटाना ही अच्छा है ॥ ५६ ॥

संभूय कर्मणां त्यागस्योपदेशे न दूषणम् ।
भारतीयप्रजाभ्योऽत्र दारुणेऽवसरे स्थिते ॥ ५७ ॥

ऐसे भयङ्कर समयमें भारतीयोंको सामूहिक कार्यके त्यागका उपदेश करना दूषित नहीं है ॥ ५७ ॥

यदि धूमरथादीनामुपयोगोऽद्य केवलम् ।
ब्रिटिशसत्तास्थिरीभावे साहाय्यं स्यादुरर्थकम् ॥ ५८ ॥

यदि अंगरेज आज रेलगाड़ी आदिका उपयोग केवल अपनी सत्ताको यहाँ स्थिर रखनेकेलिये ही करते हों तो सहायता करनेका परिणाम बुरा है ॥५८॥

यावदौचित्यमेतस्याभ्यर्थनस्य न साध्यते ।
तावन्न शक्यते कर्तुं निर्णयोऽद्य मयेदृशः ॥ ५९ ॥

जबतक इस मांगका औचित्य सिद्ध नहीं कर दिया जाता तब तक मैं ऐसा कोई निर्णय नहीं कर सकता ॥ ५९ ॥

स्वीकृतायां मदीयायां प्रार्थनायां हि भारतम् ।
असन्तुष्टविरोधित्वं हित्वा मैत्रीं भजेदलम् ॥ ६० ॥

यदि मेरी प्रार्थना स्वीकृत हो जाय तो भारत असन्तोष और विरोधको छोड़कर मित्र बन जावेगा ॥ ६० ॥

स्थापयितुं बहिर्देशादस्माज्जापानभूमिजान् ।
अंग्रेजापेक्षयाऽऽस्माकं महाँल्लाभो वितिष्ठते ॥ ६१ ॥

जापानको इस देशसे बाहर रखना अंग्रेज़ोंकी अपेक्षा हमारे बड़े लाभकी बात है ॥ ६१ ॥

भारतीयधरायां चेदंग्रेजाः स्युः पराजिताः ।
तेषां कापि क्षतिर्नास्ति कथञ्चिदपि तत्त्वतः ॥ ६२ ॥

यदि भारतमें अंग्रेज़ हार जायँ तो उनकी वास्तविक रूपमें कोई भी हानि नहीं है ॥ ६२ ॥

परन्तु यदि जापानो विजयी भारते भवेत् ।
आधिपत्ये स्थिते तस्य सर्वं नो नियतं हतम् ॥ ६३ ॥

परन्तु यदि जापान भारतमें विजय प्राप्त कर ले और उसका यहाँ आधिपत्य हो जाय तो हमारा सर्वनाश हो जायगा ॥ ६३ ॥

आम्रीकातः समायातं यद्वैज्ञानिकमण्डलम् ।
तस्य ग्रेड्याभिधः सभ्यः पूर्वं सम्मिलितो मया ॥६४॥

अमेरिकासे जो वैज्ञानिक मण्डल यहाँ आया था उसके एक ग्रेड्य नामक सभ्य मुझे मिले थे ॥ ६४ ॥

अपि स्यान्मण्डलं तत्तु सदा सद्भावपूरितम् ।
परन्तु भारतीयानां शङ्कितं स्यान्मनः सदा ॥ ६५ ॥

भले वह मण्डल सद्भावसे पूर्ण हो परन्तु भारतीयोंका मन सदा शङ्कित ही रहेगा ॥ ६५ ॥

भारते तत्समायातं भारतामन्त्रणं विना ।
भारतस्य ततस्तस्मिञ्शङ्का न स्यादयुक्तिका ॥ ६६ ॥

भारतके आमन्त्रणके बिना ही वह मण्डल भारतमें आया था अतः भारतका उसके प्रति शङ्का करना अयोग्य नहीं है ॥ ६६ ॥

सर्वाण्येतानि वस्तूनि स्थितप्रज्ञस्य संदृशा ।
अनिष्टानि भवन्ति स्युर्दृष्टान्यस्माभिरत्र नो ॥ ६७ ॥

यह सब अनिष्ट कार्य यहाँ होते रहें और हम स्थितप्रज्ञकी दृष्टिसे सब देखते रहें, यह नहीं हो सकता ॥ ६७ ॥

वृत्तं भवत्समक्षं यद्दृश्यते तन्न शक्यते ।
उपेक्षितुमिहास्माभिः कथंचिदपि कर्हिचित् ॥ ६८ ॥

आपके समक्ष जो वृत्त हम देख रहे हैं उसकी कभी भी उपेक्षा नहीं कर सकते ॥ ६८ ॥

रिक्तान्कारयित्वाथ सर्वान्ग्रामान्क्रमेण ते ।
सेनावासान्प्रकुर्वन्ति स्वार्थसाधनतत्पराः ॥ ६९ ॥

क्रमशः सब गाँवोंको खाली कराकर यह स्वार्थी लोग सेनाकेलिये निवासस्थान बना रहे हैं ॥ ६९ ॥

यथारुचि यथाशक्ति युष्माकं त्राणवाञ्छया ।
कुरुध्वं यूयमित्येवमुच्यन्तेऽद्य प्रजा इमाः ॥ ७० ॥

हमारी प्रजाको वह कहते हैं कि अपनी इच्छा और शक्तिके अनुसार अपने रक्षणकेलिये कुछ भी करो ॥ ७० ॥

ब्रह्मदेशाद्भिया त्रस्ता आयन्तः पथि ते मृताः ।
भारतीयाः शतान्येव क्षुधा वापि तृषापि वा ॥ ७१ ॥

ब्रह्मदेशसे भयसे व्याकुल होकर भागे हुए सैकड़ों भारतीय भूख और प्याससे मार्गमें ही मर गये ॥ ७१ ॥

दयाकालेऽपि तस्मिंस्तैः श्वेतचर्मसु संस्थितः ।
भारतीयैरहो रंगपक्षपातोऽन्वभूयत ॥ ७२ ॥

आश्चर्य है कि दयाके समयमें भी अंग्रेजोंमें रङ्गका पक्षपात देखा गया॥७२॥

अन्यः पन्थाः सिताङ्गानामन्यो भारतवासिनाम् ।
प्रथमेऽबन्नसन्तृप्ताश्चरमेऽबन्नपीडिताः ॥ ७३ ॥

अंग्रेजोंकेलिये अन्य प्रबन्ध था और भारतीयोंकेलिये अन्य । अंग्रेज़ सैनिक अन्न-जलसे तृप्त थे और भारतीय उनके बिना दुःखित थे ॥७३॥

प्राप्तेष्वपि स्वकं देशं भारतं तेषु निर्दयैः ।
व्यवहारः स एवैतैरनिष्टोऽचारि दुर्भगैः ॥ ७४ ॥

जब वह अपने भारत देशमें आ गये तब भी इन निर्दय दुष्टोंने उनके साथ खराब व्यवहार किया ॥ ७४ ॥

जापानस्यागतेः पूर्वं भारतीयान् सिताङ्गकाः ।
चूर्णपेषं विपिंषन्ति निराधारांस्तपस्विनः ॥ ७५ ॥

जापानके आनेसे पूर्व ही अंग्रेज़ लोग निराधार और गरीब भारतीय प्रजाको पीस रहे हैं ॥ ७५ ॥

एतत्सर्वं न रक्षाया एतद्देशनिवासिनाम् ।
जगदीशो विजानातु कस्य रक्षा भविष्यति ॥ ७६ ॥

यह सब इस देशके निवासियोंकी रक्षाकेलिये तो नहीं ही हो रहा है। भगवान् जानें कि किसकी रक्षा होगी ॥ ७६ ॥

निरीक्ष्यापि निशम्यापि दुर्वृत्तं ब्रैटिशं बहु ।
एकस्मिन्सुप्रभातेऽहं निरणैषं तथाविधम् ॥ ७७ ॥

अंग्रेजोंके अनेक दुर्व्यवहारोंको देखकर और सुनकर मैंने एक प्रातःकालमें वैसा निर्णय कर लिया ॥ ७७ ॥

प्रारब्धमात्मनो भोक्तुं ते परित्यज्य भारतम् ।
जगन्नाथप्रसादाय पलायन्तामितस्त्विति ॥ ७८ ॥

अपने भाग्यको भोगनेकेलिये वह भारतको छोड़कर ईश्वरको प्रसन्न करनेकेलिये भाग जायँ ॥ ७८ ॥

निश्वसाम वयं भूयः स्वतन्त्रे वायुमण्डले ।
आम्रीकावद्वयं चापि सहिष्यामह आपदः ॥७९॥

जिससे कि हम लोग पुनः स्वतन्त्रवायुमण्डलमें श्वास ले सकें । अमेरिकाके समान हम भी संकट सहेंगे ॥ ७९ ॥

एतु स्वाधीनता देवी शक्तिः प्राप्नोतु नः परा ।
सोढुं दुःखान्यसौ दम्भो ब्रैटिशोऽन्तमुपैतु च ॥८०॥

स्वाधीनता देवीका यहाँ पदार्पण हो । हमको महती शक्ति प्राप्त हो सर्व दुःखोंको सहन करनेकेलिये । तथा अंग्रेज़ोंका दम्भ दूर हो ॥ ८० ॥

अधिकृत्य ब्रवीम्येतद्ब्रिटिशाम्रीकयोश्चमूः ।
उभयोरनयोर्नीतिः साम्यं वहति सर्वथा ॥८१॥

मैं यह जो कुछ कह रहा हूँ वह ब्रिटिश और अमेरिका दोनोंकी सेनाको लक्ष्य करके ही कहता हूँ । क्योंकि इन दोनों देशोंकी नीति समान ही है ॥ ८१ ॥

न्याययुक्तं मदीयं तच्छ्रोष्यन्ति ब्रिटिशाः क्वचित् ।
सेवमानोऽहमित्याशां प्राणांस्त्यक्ष्यामि मामकान् ॥८२॥

मेरी न्यायसंगत बातको अंगरेज कभी भी तो सुनेंगे इसी आशामें मैं अपने प्राणोंका त्याग करूँगा ॥ ८२ ॥

चिरंजीवी भवेयं चेद्द्रक्ष्यामि सफलामिमाम् ।
मदीयाशां प्रसन्नात्मा सर्वेषां शंविधायिनीम् ॥८३॥

यदि मैं चिरकालतक जीता रहा, मैं मेरी इस कल्याणकारिणी आशाको प्रसन्न होकर सफल होती देखूँगा ॥ ८३ ॥

प्रार्थितं मम वीक्षेऽत्राऽव्यवहार्यं न किञ्चन।
अकृत्वा प्रार्थितं मे ते जेतुं नार्हन्ति योधनम् ॥८४॥

जो कुछ मैं माँग रहा हूँ उसमें अव्यवहार्य कुछ भी नहीं है। मेरी माँगको पूर्ण किये बिना अंग्रेज इस युद्धको जीत नहीं सकते ॥ ८४ ॥

स्वतन्त्रं भारतं नैव जापानेन करिष्यति।
युद्धं किन्तु दृढां मैत्रीं करिष्यति सिताङ्गकैः ॥८५॥

स्वतन्त्र भारत जापानके साथ युद्ध नहीं करेगा परन्तु अंगरेजोंके साथ गाढ़ मित्रता करेगा ॥ ८५ ॥

अधमर्णत्वपापात्ते विनिर्मुक्ताः सितत्वचः।
अवश्यं भारतीयानां विजेष्यन्तेऽत्र मित्रताम् ॥८६॥

अंगरेजोंके शिरपर हमारा ऋण है। यदि वह इस पापसे छूट जायँगे तो अवश्य ही भारतको अपना मित्र बना लेंगे ॥८६॥

मानवीयः स्वभावोऽयं शोधितर्णेऽधमर्णके।
कृतज्ञत्वप्रकाशार्थमुत्तमर्णोऽपि सोद्यमः ॥८७॥

यह मनुष्यका स्वभाव है कि यदि ऋणी मनुष्य ऋण चुका दे तो जिसका ऋण होता है वह कृतज्ञता प्रकट करनेकेलिये तैयार हो जाता है ॥ ८७ ॥

निखिलं भारतं नास्ति हिंसात्यागपरायणम्।
तेन तेषामिहायोधे बहवः स्युः सहायकाः ॥८८॥

सम्पूर्ण भारत अहिंसक नहीं है अतः इस युद्धमें बहुतसे लोग उनके सहायक हो सकते हैं ॥८८॥

परं मया तु निर्दोषं न्यायमाश्रित्य केवलम्।
अभ्यर्थनमकार्येतत्तिष्ठतात्तन्मनोभुवि ॥८९॥

परन्तु मैंने तो केवल निर्दोष न्यायका आश्रय लेकर उनसे यह प्रार्थना की है। वह उनके मनमें भी ठीक मालूम हो, ऐसी इच्छा है ॥८९॥

श्वेताङ्गा बहुशोऽकुर्वन्भौतिकक्षेत्रसाहसम् ।
धन्याः कुर्वन्तु ते चाद्य नैतिके गुणवत्यलम् ॥९०॥

अंगरेजोंने लौकिक और भौतिक क्षेत्रमें बड़े-बड़े साहस किये हैं। आज वह नैतिक क्षेत्रमें भी साहस करें ॥९०॥

भारताभ्यर्थनां तेऽङ्गीकृत्य तूर्णं स्वतन्त्रताम् ।
तस्मिन्नेव समर्प्याद्य दिव्यां कीर्तिमवाप्नुयुः ॥९१॥

भारतकी प्रार्थनाको स्वीकार करके शीघ्र उसे स्वतन्त्र बनाकर सर्वोत्तम कीर्तिको वह प्राप्त करें ॥९१॥

देशमेनं समर्प्यैव भगवत्पादपद्मयोः ।
स्वदेशं तेऽभिगच्छेयुरित्येवाभ्यर्थ्यते मया ॥९२॥

अथवा इस देशको भगवान्के चरणोंमें अर्पण करके वह अपने देशमें चले जायँ, इतनी ही प्रार्थना है ॥९२॥

तथाकृते मिथः सर्वे पक्षा भारतसंस्थिताः ।
करिष्यन्ते कलिं किं वाऽनुसरिष्यन्ति सौहृदम् ॥९३॥

ऐसा करनेपर इस देशमें जो अलग-अलग पक्ष हैं वह या तो परस्पर झगड़ेंगे या प्रेमसे रहेंगे ॥९३॥

अस्मिन्सन्तमसाच्छन्ने आशासे नितरामहम् ।
जायमानामहिंसां तां सर्वक्लेशनिवारिणीम् ॥९४॥

इस अन्धकारमय कालमें सर्वक्लेश दूर करनेवाली अहिंसाका भाव पैदा होगा, ऐसी मुझे आशा है ॥९४॥

समस्तं जगदाघुष्य श्रावयित्वा स्वतन्त्रताम् ।
भारतस्य पलायन्तामङ्ग्रेजा इति मे मतिः ॥९५॥

समस्त जगतमें घोषणा करके, भारतको स्वतन्त्रता देकर अङ्ग्रेज यहाँसे भाग जाय, इतना ही मैं चाहता हूँ ॥९५॥

एवं कृते च सैन्यानि तारतीयानि तत्क्षणम् ।
विसृष्टानि भवेयुस्ते त्वरया यान्तु स्वां भुवम् ॥९६॥

ऐसा करनेपर भारतीय सेना उसी समय बिखर जायगी। अतः वह शीघ्र अपने देशको जायँ ॥९६॥

इहैव स्थितिमन्तो वा घोषयेयुरमी इति ।
भारतान्नहि साहाय्यं गृहीतं स्याद्युधः कृते ॥९७॥

अथवा वह यहाँ ही रहकर यह घोषणा कर दें कि युद्धकेलिये भारतसे सहायता नहीं ली जायगी ॥९७॥

ग्रहीष्यते करो नापि युद्धव्याजेन भारतात् ।
प्रवेशो भारतीयानां सेनायां न कृतो भवेत् ॥९८॥

तथा, युद्धके बहानेसे भारतसे कर-टैक्स नहीं लिया जायगा। भारतीयोंको सेनामें प्रविष्ट नहीं किया जायगा ॥९८॥

भारतं यदि साहाय्यं स्वेच्छया यत्प्रदास्यते ।
तोष्टव्यं तेन तैरद्य नाधिकं कामयिष्यते ॥९९॥

भारत स्वेच्छासे जितनी सहायता कर सकेगा उतनेसे ही उन्हें सन्तोष मानना पड़ेगा। अधिककी इच्छा नहीं करेंगे ॥९९॥

प्राचीनां महतीमेतां प्रजां कण्ठे निबद्ध्य ते ।
आम्रीका ब्रैटिशाश्चापि महत्पापं विचिन्वते ॥१००॥

अत्यन्त प्राचीन इस प्रजाका गला दबाकर ब्रिटिश और अमेरिका बड़ा भारी पाप कर रहे हैं ॥१००॥

कुर्वता नाल्पमप्येषां प्रजास्वातन्त्र्यरक्षणम् ।
तद्विरक्षणसंघोषोऽनधिकारविचेष्टितम् ॥१०१॥

प्रजाकी स्वतन्त्रताका तनिक भी रक्षण न करते हुए भी "हम रक्षण करते हैं" ऐसी घोषणा करना अनधिकार चेष्टा है ॥ १०१ ॥

पापमेव विचिन्वन्ति कापटथ्यं सम्प्रदर्श्य ते ।
कल्याणाभिमुखा भूत्वा विजहत्वद्य भारतम् ॥१०२॥

कपटाचार दिखाकर वह पाप ही कर रहे हैं । अतः अपने कल्याण-की इच्छासे आज भारतको छोड़ दें ॥१०२॥

न्याय्यां चेदर्थनामेतां ममाम्रीकापि मन्यते ।
न ददातु किमप्येभ्यो यावद्गच्छन्त्वतो न ते ॥१०३॥

यदि अमेरिका भी मेरी इस माँगको उचित मानता हो तो जब तक अङ्गरेज यहाँसे चले न जायँ तब तक उन्हें वह कोई सहायता न दे ॥१०३॥

धनान्यस्त्राणि शस्त्राणि सम्प्रदेयानि कर्हिचित् ।
भारतं स्वं परित्यज्याऽगच्छते ब्रिटनाय नो ॥१०४॥

जब तक ब्रिटिश भारतका त्याग करके जाय नहीं तब तक धन, अस्त्र, शस्त्र कुछ भी उसे नहीं देने चाहिये ॥१०४॥

मित्रीभूतमहीपानां कार्ये साहाय्यमाचरन् ।
अम्रीकादेश एतेषां वृत्तिं पापेषु पुष्यति ॥१०५॥

मित्रराज्योंके कार्यमें सहायता करता हुआ अमेरिका इनकी पापवृत्तिका पोषण कर रहा है ॥१०५॥

पापः सोपि भवेदेव पापकर्मसु पापिनाम् ।
साहाय्यं यो ददात्येव यस्य कस्यापि वस्तुनः ॥१०६॥

पापियोंके पापकर्ममें किसी वस्तुकी जो सहायता करता है वह भी पापी ही होता है ॥१०६॥

एतास्ता भारतीयार्वत्प्रजा मुक्ता न कुर्वते ।
नात्सीतस्तान्समीचीनान्वक्तुमर्हति कः सुधीः ॥१०७॥

जब तक अंगरेज इस भारतीय प्रजाको मुक्त नहीं करते तब तक कौन विद्वान्—समझदार यह कह सकता है कि नाजियोंसे यह अच्छे हैं ? ॥१०७॥

एव स्वकीयैर्विमलैर्विचारैराम्रीकलोकान्परितोष्य देवः ।
विदार्य तेषां पटलं समन्ताद्व्यराजतान्धन्तमसां तमोघ्नः ॥१०८॥

श्रीमहात्माजीने इस प्रकारसे अपने विमल विचारोंके द्वारा उन अमेरिका निवासियोंको सन्तुष्ट कर, उनके अज्ञानान्धकारको दूर कर दिया ॥ १०८ ॥

निपीय तद्वागमृतं रसौघं-
सर्वे कणेहत्य विदेशिनस्ते ।
कार्तार्थ्यमात्मन्यनुभूय शान्ता—
स्ततो ययुस्ते प्रणिपत्य देवम् ॥१०९॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते पारिजातापहारेऽष्टमः सर्गः

महात्माजीके वाणीरूप अमृतका पान करके, तृप्त होकर, कृतार्थ बनकर वह अमेरिकन लोग महात्माजीको प्रणाम करके चले गये ॥१०९॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते स्वोपज्ञराष्ट्रभाषाटीकायां पारिजातापहारे
अष्टमः सर्गः



# नवमः सर्गः

श्वेताङ्ग एको भयविह्वलो यतिं न्यवेदयत्पत्त्रमुखेन सत्वरम् ।
प्रवर्तते संकटकाल एष नस्ततोधुनास्मासु न शोभते द्विषः ॥१॥

एक अंग्रेजने व्याकुल होकर पत्रद्वारा श्रीमहात्माजीसे निवेदन किया कि यह हमारा संकटकाल है। ऐसे समयमें हमसे द्वेष करना शोभा नहीं देता है ॥ १ ॥

अन्याय्यकृत्यप्रवणेषु राजतां तथाविधं कृत्यमिदं कथं पुनः ।
विपत्परीतेष्वहितेष्वनुग्रहः प्रदर्शनीयो महतां पथि स्थितैः ।२॥

अन्यायी मनुष्यके साथ वैसा ही अन्याय करना कैसे शोभा दे सकता है ? अपना शत्रु भी हो और वह विपत्तियोंमें पड़ा हो तो महापुरुषको उसपर दया ही दिखानी चाहिये ॥ २ ॥

सितत्वचां भारतवर्षतोधुना व्रजि विधातुं कथनं हठादये ।
निमन्त्रणं स्यादिति मन्यते मया जापानलोकागमनाय भारते ॥३॥

अंग्रेजोंको इस समय भारतसे चले जानेकेलिये हठसे कहनेका अर्थ मैं यह समझता हूँ कि भारतमें जापानियोंको आमन्त्रण दिया जा रहा है ॥ ३ ॥

विदेशिलोकाक्रमणं परासितुं भवेदहिंसा न कदापि शंकरी ।
द्विषत्प्रतीकारबलं भवत्सु चेत्कथं समर्था वयमीशितुं हि वः ॥४॥

विदेशियोंके आक्रमणको हटानेकेलिये अहिंसा योग्य साधन नहीं है। यदि आपमें शत्रुओंके सामने लड़नेकी शक्ति होती तो हम आपपर राज्य कैसे कर सकते ? ॥ ४ ॥

विस्मृत्य पापानि पुराकृतानि नः कथं न विश्वासपदं नवप्रजाः ।
साम्राज्यमिच्छन्ति न ता ब्रुवन्ति वा तदाश्रयां वाचमरुन्तुदां क्वचित ॥५॥

हमारे पुराने अपराधोंको भुलाकर हमारी नयी प्रजाका विश्वास क्यों न किया जाय ? यह न तो साम्राज्य चाहती है और न साम्राज्यकी कोई बात कभी करती है ॥ ५ ॥

महासभायां कति ते भवन्ति ये दधत्यखण्डामविशस्तिसद्व्रते ।
श्रद्धामृते त्वामिति वेत्सि वस्तुतः कथं तदा यास्यसमेन वर्त्मना ॥६॥

राष्ट्रिय महासभामें कितने लोग हैं जो अहिंसामें बड़ी श्रद्धा रखते हों ? आपके सिवाय दूसरा तो कोई नहीं है। इसे आप जानते ही हैं तो क्यों विषम मार्गमें प्रयाण कर रहे हैं ? ॥ ६ ॥

असीमविस्पष्टभुवि त्वमेककः स्थितोसि नूनं न पुनः परः पुमान् ।
त्वमेव चैकोसि सितत्वचां हि नः प्रेयान्सखा शुद्धमना महानिह ॥७॥

आप ही एक ऐसे हैं जो अत्यन्त स्पष्ट भूमिकामें विराजमान हैं, दूसरा कोई नहीं ही। तथा आप ही एक ऐसे हैं जो हम अंग्रेजोंके शुद्धमनवाले प्रिय और महान् मित्र हैं ॥ ७ ॥

इदं दलं प्राप्य च कस्यचित्सितत्वचो महात्मा करुणार्णवो मुनिः ।
तदुत्तरं स्पष्टपथस्थितिं दधत्स प्रैषिषद्यत्तु पठन्त्वधोऽद्य तत् ॥८॥

किसी अंग्रेजके इस पत्रको पाकर अत्यन्त स्पष्ट मार्गमें स्थित श्रीमहात्माजीने जो उत्तर भेजा था उसे आप नीचे पढ़ें ॥ ८ ॥

उपक्रमादस्य विदारणस्य यः प्रभाव उद्भूत उदारचेतसि ।
ममात्र यः सोस्ति मया निवेदितः श्रीमन्महौजोलिनलीथगोपुरः ॥९॥

इस युद्धके आरम्भ करनेसे मेरे उदार चित्तपर जो प्रभाव पड़ा है उसे मैंने श्रीमान् लिनलिथगो ( वाइसराय ) के समक्ष निवेदन कर दिया है ॥ ९ ॥

पत्रेण तस्मा अवदं विचार्य यत्तदन्तरेणास्ति न संनिधौ मम ।
सदुत्तरं किञ्चिदपीति तत्पुनर्ब्रवीमि विस्पष्टतया तवाग्रतः ॥१०॥

मैंने पत्रद्वारा वाइसरायको जो कुछ कहा है उसके सिवा मेरे पास अन्य कुछ भी उत्तर नहीं है। उसीको मैं आपके सामने भी स्पष्टरूपमें कहता हूँ ॥ १० ॥

तस्मै यदुक्तं न तदर्थमल्पकं पश्चात्तपत्यद्य मनः कथंचन।
विचार्य चार्वाचरिते कुतो भवेन्मनो मनागप्यनुतापसंहितम् ॥११॥

जो कुछ मैंने वाइसरायको कहा है उसकेलिये मेरे मनमें तनिक भी पश्चात्ताप नहीं है। अच्छी तरहसे विचार करके किसी कार्यको करनेपर मनमें तनिक भी खेद कैसे हो सकता है? ॥ ११ ॥

अवश्यमेवास्मि सितत्वचामहं सुहृद्यथापूर्वमवस्थितोधुना।
न द्वेषगन्धोपि मदीयचेतनां स्पृशत्यहिंसाव्रतवर्त्मशीलिनाम् ॥१२॥

अवश्य ही मैं पहलेके समान ही आज भी अंग्रेजोंका मित्र बना हुआ हूँ। अहिंसाव्रतका पालन करनेवाली मेरी बुद्धिको जरा भी द्वेष स्पर्श नहीं करता है ॥ १२ ॥

यथा निरीक्षे धवलेष्ववस्थितान्साद्गुण्यराशीनहमद्य सस्पृहम्।
न्यमीलयन्मे नयने कदापि नो द्रष्टुं तथैषामबलत्वमप्यलम् ॥१३॥

जिस प्रकारसे मैं अंग्रेजोंके अनेक सद्गुणोंको स्पृहाके साथ देखता हूँ वैसे ही इनकी सब निर्बलताओंको भी देखनेकेलिये मैं आँख खुली रखता हूँ ॥ १३ ॥

युद्धेषु या या घटना अजीघटद्द्विषन्ति ताभिर्जनताः सितत्वचः।
मयोपदिष्टे पथि ताश्चरन्त्यहो न त्यक्तवत्यः शममांशिकं परम् ॥१४॥

युद्धमें जो कुछ किया गया है उसे भारतीयजनता अंग्रेजोंसे द्वेष करने लग गयी है। परन्तु मेरे बताये मार्गपर चलती हुई प्रजाने शान्तिका सर्वथा त्याग नहीं किया है ॥ १४ ॥

भवेदितोथो नचिरेण भारतं त्यक्त्वा गतिः श्वेतकुशासनस्य चेत्।
कल्याणमेवोभकयोर्भवेन्महत्सत्प्रत्ययं मे मनसोस्ति धारणा ॥१५॥

परन्तु यदि शीघ्र ही अंग्रेजी राज्य भारत छोड़कर चला जाय तो राजा और प्रजा दोनोंका परम कल्याण होगा, ऐसी मेरे मनकी दृढ़ धारणा है ॥ १५ ॥

**विश्वस्य विश्वस्य महाशिवाय सा सेत्स्यत्यतस्तद्गतिरेव सुन्दरी ।**
**जगत्सितत्वक्प्रसरन्मलीमसं विलोक्य नैतद्ब्रुवतोस्ति मे व्यथा ॥१६॥**

अंग्रेजोंका यहाँसे जाना समस्त विश्वके कल्याणकेलिये सुन्दर बात होगी। आज जगत्में अंग्रेजोंकी फैलती निन्दाको देखकर, इसे कहनेमें मुझे जरा भी दुःख नहीं होता है ॥ १६ ॥

**पलायतां चेत्सितशासनं ततो भवेदिदं कृत्यमनूनसंपदम् ।**
**शिवाय सर्वस्य तथा सितत्वचामप्येतदित्येव निगद्यतेखिलैः ॥१७॥**

अदि अंग्रेजी राज्य यहाँसे भाग जावे तो यह अंग्रेजोंकेलिये भी तथा सबकेलिये भी बहुत ही श्रेयस्कर होगा, ऐसा सभी कह रहे हैं ॥ १७ ॥

**नो भारतस्याथ सिताधिपस्य नो संमिश्रलाभोत्र निरीक्ष्यते युधि ।**
**ततो भवेच्चेद्विजयोपि वः परं पराजयः स्याद्भरतक्षितेर्हि सः ॥१८॥**

इस युद्धमें भारतका और अंग्रेजीराज्यका कोई मिश्रलाभ दीख नहीं पड़ रहा है। अतः अंग्रेजोंका विजय हो तो भी वह भारतकेलिये पराजय ही होगा ॥ १८ ॥

**प्राप्यः कियत्कालगणेन दुर्जयो न शक्यते वक्तुमिहाद्य कैरपि ।**
**प्रविश्य चात्रैव विदेशिसैनिका दुराचरन्तीति नितान्तदुःखदम् ॥१९॥**

वह दुष्ट विजय कितने समयमें प्राप्त होगा, इसे आज कोई भी नहीं कह सकता। परदेशी सैनिक भारतमें आकर तरह तरहके दुराचार कर रहे हैं, यह अत्यन्त दुःखद वस्तु है ॥ १९ ॥

**जापानसेनाभयतः पलाय्य तानागन्तुमस्यां भुवि सोद्यमांस्तदा ।**
**श्वेतान्प्रति श्रीभरतप्रजाः प्रति द्वैतेन वृत्तिस्तुदते मनो मम ॥२०॥**

जापानी सेनाके भयसे भागकर भारतमें आनेकेलिये जब अंग्रेजी सेना

तैयार हुई उस समय अंग्रेजों और भारतीयोंके साथ जो भेद-व्यवहार हुआ वह मेरे चित्तको पीड़ित कर रहा है ॥ २० ॥

**इमानि कृत्यानि सितत्वचामहो तेषां स्पृहायां वचनेषु चापि माम् ।**
**प्रतीतिमाधातुमलं बलेन संनिवारयन्तीति करोमि किं कथम् ॥२१॥**

अंग्रेजोंके यह कृत्य उनकी इच्छा और उनके वचनमें विश्वास करनेकेलिये मुझे हठात् मना कर रहे हैं । मैं कैसे क्या करूँ ? ॥ २१ ॥

**पारम्परीणां प्रकृतिं त आत्मनो वाञ्छन्ति नो संपरिवर्तितां क्वचित् ।**
**न दुर्गुणं स्वं गणयन्ति दुर्गुणं विवेकदृष्टिर्मदिनां न संभवेत् ॥२२॥**

वह अपने परम्परासे प्राप्त स्वभावको बदलना नहीं चाहते हैं । वह अपने दुर्गुणको दुर्गुण गिनते ही नहीं हैं । अभिमानीको विवेककी दृष्टिका होना संभव नहीं है ॥ २२ ॥

**ते ब्रह्मदेशं च सिलोनमफ्रिकामुद्दिश्य नैसर्गिकमात्मनः स्मयम् ।**
**प्रदर्शयन्ते न हि शक्नुयुः क्षणं प्रशासितुं तेन सहाद्य ताः प्रजाः ॥२३॥**

ब्रह्मदेश, सिलोन, अफ्रिकाको अपना स्वाभाविक गर्व वह दिखा रहे हैं । परन्तु गर्वके साथ आज क्षणभरके लिये भी वह उन प्रजाओंपर शासन नहीं कर सकते ॥ २३ ॥

**संपीडितास्ते दृढमेतया रुजा तदौषधं तीव्रतरं ह्यपेक्षितम् ।**
**महौषधं तेभ्य उदीरितं मया पलायनं नाम सपद्यतस्त्विति ॥२४॥**

वह लोग इस अभिमानरूप रोगसे अत्यन्त पीड़ित हैं । इसकी दवा भी अत्यन्त तीव्र होनी चाहिये । मैंने उनके लिये, यहाँसे शीघ्र भाग जाना सर्वोत्तम औषध बताया है ॥ २४ ॥

**यौरोपदेशानपि ते विहाय चेद्बहिर्व्रजेयुः प्रथयेयुरात्मताम् ।**
**तथा सुहृद्राज्यगणं समाश्रयेद्बलं हि तन्नैतिकमुद्गतं स्वतः ॥ २५ ॥**

युरोपके देशोंको भी छोड़कर यदि अंगरेज बाहर स्वदेश-स्वभूमिको

चले जायँ तो वह बड़ा भारी आत्मबल दिखा सकेंगे। ऐसा करनेसे मित्रराज्योंको भी स्वतः उत्पन्न हुआ नैतिक बल प्राप्त होगा ॥ २५ ॥

**भवेच्च सन्धिर्बलिभिस्तथारिभिः स्वमानरक्षासहितो हितावहः ।**
**साम्राज्यवादोऽस्तमुपैष्यति क्षणात्फास्यादिनात्स्यादिगणोऽप्यनुव्रजेत्॥२६॥**

ऐसा करनेसे बलवान् शत्रुओंके साथ स्वमानरक्षापुरस्सर कल्याणप्रद सन्धि भी हो जायगी, साम्राज्यवादका भी नाश होगा और इसके साथ ही फासीवाद नाजीवाद आदि भी समाप्त हो जायँगे ॥ २६ ॥

**उभाववन्यामथ जीवधारणं सदा दधातां गतशक्तितेजसौ ।**
**वादौ भवेतां नितरां गतासुतां साम्राज्यवादं नियतं गते सति ॥२७॥**

यदि फासीवाद और नाजीवाद यह दोनों जीते भी रह गये तो भी साम्राज्यवादके नष्ट हो जानेपर यह दोनों वाद शक्ति और तेजसे तो हीन अवश्य हो जायँगे ॥ २७ ॥

**समेत्य पक्षस्य च राष्ट्रियस्य ते साहाय्यमाप्स्यन्ति यशस्विनं जयम् ।**
**स्वातन्त्र्यहीना न तु राष्ट्रमानवा दास्यन्ति तद्धृष्टतमेन चेतसा ॥२८॥**

राष्ट्रिय पक्षकी सहायता पाकर अंगरेज यशस्वी जय प्राप्त करेंगे। परन्तु परतन्त्र राष्ट्रके मनुष्य प्रसन्न चित्तसे सहायता नहीं देंगे ॥ २८ ॥

**यावन्न फुल्लं हृदयं समन्ततो भवेज्जनानां न हि तावदव्यया ।**
**प्रकाशिता स्यादिह शूरता परा न क्रीतदासैर्विजयो भविष्यति ॥२९॥**

जबतक हृदय सर्वथा प्रसन्न न हो तबतक प्रजा अपनी महती शूरताको प्रकट नहीं कर सकती। तथा गुलामोंसे तो विजय होगा ही नहीं ॥ २९ ॥

**अस्मासु सन्त्येव तथाविधा नरा न कल्पयन्ते प्रशमेन वर्त्मना ।**
**स्वराज्यसम्प्राप्तिमियं निराशता सिताङ्गनीत्यैव जनेष्वजायत ॥३०॥**

हमारेमें ऐसे भी लोग हैं जो शान्तिके मार्गसे स्वराज्य प्राप्तिकी

कल्पना भी नहीं करते। अंगरेजोंकी नीतिके कारण ही यह निराशा लोगोंमें पैदा हुई है॥ ३० ॥

स्वातन्त्र्यमार्तण्डमरीचिमालया न देश एषोऽस्तु विभासितो यदि।
अवश्यमान्दोलनमेतदाप्तये भवेन्नृपूत्पाद्यमधीरबुद्धिषु ॥ ३१ ॥

यदि स्वातन्त्र्यरूप सूर्यके किरणोंसे यह देश प्रकाशित न हुआ तो इसकी स्वतन्त्रताकी प्राप्तिकेलिये निराश लोगोंमें मुझे आन्दोलन पैदा करना ही होगा ॥ ३१ ॥

तेनोदितेनेह च कीदृशं भवेज्जनेषु सज्जेषु फलं न शक्यते।
ज्ञातुं विदा केनचनापि साम्प्रतं परं तदुत्थाप्यमितीष्यते मया ॥३२॥

उस आन्दोलनके शुरू होनेपर तथा जब प्रजा तैयार हो जायगी तब क्या परिणाम आवेगा इसे तो कोई भी विद्वान् नहीं जान सकता है। परन्तु मेरी इच्छा है कि मैं उस आन्दोलनका आरम्भ करूँ॥३२॥

यदि त्वयाङ्गीक्रियते सितैः कृतं देशेऽत्र पापं प्रकृतं महत्तदा।
प्रयत्यतां तद्व्यपनेतुमाग्रहात्सतामियं स्यात्सरणिः सनातनी ॥ ३३ ॥

यदि आप स्वीकार करते हों कि अंगरेजोंने इस देशमें बड़ा भारी पाप किया है तो उसे दूर करनेके लिये प्रयत्न कीजिये। सज्जनोंका यही सनातन मार्ग है ॥ ३३ ॥

पापापनुत्त्यै सितवर्ष्मणां यदि प्रयत्यते नो विजयोऽपि नेष्यताम्।
न बाधके तिष्ठति मन्त्र औषधे ज्वलेच्छिखावान्व्यवसायसंचयैः ॥३४॥

आप यदि अंगरेजोंके पापको दूर करनेका प्रयास न करें तो उनके विजयकी इच्छा भी न करें। कभी ऐसा नहीं हुआ है कि अग्निको जलनेसे रोकनेवाला कोई मन्त्र या कोई औषधि उपस्थित हो और आग जले ॥ ३४ ॥

यावत्स्थितिः स्यादिह भारते सितत्वचां न तावद्विपदामपक्रमः।
अवश्यमामन्त्रितमेव बुध्यतां जापानलोकागमनं भुवीह नः ॥३५॥

जबतक यहाँ अंगरेज रहेंगे तबतक दुःखका निवारण नहीं हो सकेगा। और तब तो आप समझ ही लीजिये कि इस पृथिवीपर जापानको आनेका निमन्त्रण मिल ही चुका है ॥ ३५ ॥

**श्वेतेषु यातेषु निजां धरामितो जापानदेशोपि विहास्यति स्वयम्।**
**मनोगतां लोभततिं स्वकामिति प्रकल्प्यते तत्त्वविपश्चितां कुलैः ॥३६॥**

यदि अंगरेज यहाँसे अपनी भूमिमें चले जायँ तो जापान स्वतः ही अपने मनमें रहे लोभोंको छोड़ देगा ऐसी विद्वानोंकी कल्पना है ॥ ३६ ॥

**अथ स्वतन्त्रताप्राप्तं भारतं निर्भयं तदा।**
**जापानाक्रमणस्यापि धास्यते संमुखीनताम् ॥३७॥**

स्वतन्त्रताको प्राप्त करनेपर निर्भय भारत तब जापानके आक्रमणका भी सामना कर सकेगा ॥ ३७ ॥

**तदानीमस्त्रशस्त्राणामभावादधिभारतम्।**
**विशुद्धोसहयोगः स्यात्प्रवृत्तस्तद्विरोधने ॥३८॥**

**इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते**
**पारिजातापहारे**
**नवमः सर्गः**

उस समय भारतमें अस्त्र-शस्त्रोंका अभाव रहेगा। इसलिये जापानका विरोध करनेके लिये पवित्र असहयोग उस समय प्रवृत्त होगा ॥ ३८ ॥

**इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपंडितराजप्रणीते**
**स्वोपज्ञराष्ट्रभाषाटीकायां**
**पारिजातापहारे नवमः सर्गः**



# दशमः सर्गः

युद्धकालेऽनुभूयासौ नाणकानां विपत्करीम् ।
न्यूनता यतिराजोऽसौ प्रजाभ्यो देशनामदात् ॥१॥

युद्धकालमें द्रव्यकी अत्यन्त न्यूनता देखकर श्रीमहात्माजीने प्रजाको उपदेश दिया ॥ १ ॥

अतीव जटिलः प्रश्नो विद्यते सूत्रनाणकः ।
मामिका कल्पना तस्मिन्विषयेऽद्धाऽवगम्यताम् ॥२॥

सूत्रद्रव्य ( पैसेके बदले सूत्रके उपयोगको सूत्रद्रव्य कहते हैं ) एक बहुत कठिन प्रश्न है । उसमें मेरी जो कल्पना है उसे समझो ॥ २ ॥

समीचीनतया केपि नान्वगच्छन्कदापि ताम् ।
तद्रहस्यमिदं स्पष्टमत्राहं बोधयामि वः ॥३॥

उस कल्पनाको स्पष्टरूपमें कभी किसीने समझा नहीं है । आज मैं उसका रहस्य तुम लोगोंको समझाता हूँ ॥ ३ ॥

धातूनां नाणकाः सर्वे सर्वथा सन्ति कृत्रिमाः ।
न धातुसदृशं मूल्यं विद्यते तत्र किञ्चन ॥४॥

धातुके बने हुए जितने द्रव्य हैं वह सब कृत्रिम ( बनावटी ) हैं । धातु के मूल्यके समान उस द्रव्यको कोई मूल्य नहीं है ॥ ४ ॥

पत्राणां नाणकाश्चापि कृत्रिमा एव सर्वथा ।
सुप्राप्यं यत्पणेनातस्तत्पत्रं क्रीयते शतैः ॥५॥

नोट भी बनावटी ही हैं । जो कागज़ एक पैसे में मिलता है या मिल सकता है उसे सौ पैसेमें खरीदा जाता है ॥ ५ ॥

मुद्रेयं शासनो तत्र विद्यते तेन तावता ।
मूल्येनादीयते सर्वैस्तस्य मूल्यं तदस्ति नो ॥६॥

उस पैसेके ऊपर या नोटके ऊपर सर्कारकी छाप है अतः सब लोग उतना द्रव्य देकर उसे ख़रीदते हैं। परन्तु उसका वह असली मूल्य नहीं है ॥ ६ ॥

तथाप्येतादृशः सर्वे नाणका उपयोगिनः।
निर्वोढुं व्यवहारांस्तान्प्रात्यहिकान्नृणां सदा ॥७॥

तो भी प्रतिदिनके व्यवहारका निर्वाह करनेकेलिये ऐसे द्रव्य उपयोगी होते हैं ॥ ७ ॥

खादीमनु तथा चान्यान्ग्रामोद्योगाननु श्रिता।
कल्पना प्रतिकूलेतो विद्यते शिवदा सदा ॥८॥

खादी और अन्य ग्रामोद्योगोंके पीछे इसके विपरीत कल्पना है और वह श्रेयस्करी है ॥ ८ ॥

लक्षेषु सप्तसु ग्रामेष्वस्माकं दृष्टिरीक्षते।
पूर्वं कञ्चिदपि ग्राममेकमन्यांस्ततः परम् ॥९॥

सात लाख ग्रामोंमेंसे हमारी दृष्टि पहले किसी एक गाँवपर पड़ती है पश्चात् अन्य ग्रामोंपर ॥ ९ ॥

पारवश्यं यथा तस्य ग्रामस्यापनिनीषवः।
ग्रामाणामपरेषां च जगतोऽपि तथा वयम् ॥१०॥

जिस प्रकारसे एक गाँवकी पश्चात् अन्य गाँवोंकी पराधीनताको दूर करनेकी हमारी इच्छा है वैसे सभी जगत्‌की परतन्त्रताको दूर करनेकी भी हमारी इच्छा है ॥ १० ॥

भोजनाच्छादने ग्रामा भारतीया अनाश्रिताः।
सर्वे भवन्तु ते येन तत्कर्मेहोपदिश्यते ॥११॥

भोजन और वस्त्रमें सब भारतीय जिस कार्यसे स्वाधीन हों, उस कार्यका यहाँ उपदेश करता हूँ ॥ ११ ॥

अन्योन्यव्यवहाराय तेषां न स्यात्प्रयोजनम्।
धातूनां वापि पत्राणां कृत्रिमैर्नाणकैः क्वचित् ॥१२॥

परस्पर व्यवहार करनेकेलिये सिक्के और नोटके कृत्रिम रुपयोंकी आवश्यकता नहीं है ॥ १२ ॥

ग्रामेषु नाणकः स स्यान्निर्मातुं शक्यते हि यः ।
ग्रामीणैः सकलैश्चापि संग्रहीतुं विना श्रमम् ॥१३॥

ग्रामोंमें तो ऐसा द्रव्य चाहिये कि जिसे सब गाँववाले बिना श्रमके बना सकें और इकट्ठा कर सकें ॥ १३ ॥

एतादृशं भवेद्वस्तु न शाकं नापि तैलकम् ।
पल्पूलनमथो नापि न वा किञ्चिदपीदृशम् ॥१४॥

ऐसी वस्तु न तो शाक हो सकता है न तेल ही हो सकता है। ऐसी ही दूसरी चीजें भी नहीं हो सकती हैं ॥ १४ ॥

केवलं विद्यतेऽत्रैकं कार्पासं सूत्रमीदृशम् ।
नित्यापेक्षमथो नित्यं संग्राह्यं हि तदश्रमात् ॥१५॥

केवल रूईमेंसे पैदा किया गया हुआ सूत ही एक ऐसी वस्तु है जिसकी रोज आवश्यकता होती है और बिनाश्रमके प्राप्त किया जा सकता है ॥१५॥

सूत्रनाणप्रवेशेन ग्रामाणामुन्नतिः परा ।
साधिता द्राग्भवेत्तेन प्रसिध्येत्स्वावलम्बिता ॥१६॥

सूत्रसिक्केके चलनेसे ग्रामोंको बहुत उन्नति हो सकती है और उससे स्वावलम्बीपना आ सकता है ॥ १६ ॥

लाभास्तु बहवः सन्ति सूत्रनाणकवर्तने ।
तेषां निरूपणायात्र न प्रयासो विधीयते ॥१७॥

सूत्रसिक्केके प्रचारसे लाभ तो बहुत हैं परन्तु उनके बतानेकेलिये यहाँ प्रयास नहीं करना है ॥ १७ ॥

कथमस्य प्रयोगः स्याद्ग्रामेषु निखिलेष्वपि ।
इत्येव बोधनायात्र यथाशक्ति प्रयत्यते ॥१८॥

सब गाँवोंमें इस सिक्केका किस प्रकार प्रयोग किया जा सकता है इसीको यथाशक्ति बतानेका प्रयास करता हूँ ।। १८ ।।

ग्रामेषु निखिलेष्वेकोऽपेक्ष्यते विक्रयालयः ।
प्रत्यहं व्यवहार्याणां वस्तूनामाप्तये सुखम् ।।१९।।

प्रत्येक ग्राममें एक दूकान होनी चाहिये जिसमें नित्यके उपयोगकी वस्तु सुगमतासे मिल सके ।। १९ ।।

तस्मादेवालयात्सर्वे ग्रामलोका अपेक्षितम् ।
क्रीणीयुः सर्वदा वस्तुजातं सूत्रेण केवलम् ।।२०।।

उसी दूकानसे गाँवके लोग जिसे जो चाहे, उसे, सूत देकर खरीदें ।।२०।।

अस्यां विक्रयशालायां क्रेतुं वस्तूनि सर्वथा ।
अवश्यं स्युश्च सूत्राणि निर्मातव्यानि तज्जनैः ।।२१।।

परन्तु इस दूकानमेंसे वस्तु खरीदनेकेलिये अपने हाथसे सूत कातना आवश्यक होना चाहिये ।। २१ ।।

स्यान्नियतप्रकाराणां सूत्राणां तत्र विक्रयः ।
स्याद्विक्रेतव्यसूत्राणामायामश्चापि निश्चितः ।।२२।।

सूतोंकी जाति-प्रकार नियत होना चाहिये। उसी प्रकारके सूत वहाँ बिक सकते हैं। तथा बिकनेवाले सूतकी लम्बाई भी नियत होनी चाहिये ।।२२।।

सूत्रोत्पादनकार्याणि समीचीनतया स्वयम् ।
कर्तव्यानि भविष्यन्ति सर्वैस्तैर्ग्रामवासिभिः ।।२३।।

सूत पैदा करनेका काम बहुत अच्छी तरहसे उस ग्रामके रहनेवालोंको करना पड़ेगा ।। २३ ।।

तन्तुभिस्तैरनेकानि वस्तून्येषां दिने दिने ।
क्रेतव्यानि ततो नैकः स क्रियेत निरर्थकः ।।२४।।

प्रतिदिन उन्हीं सूतोंसे उन लोगोंको वस्तु खरीदनी चाहिये। एक भी सूत निरर्थक व्यर्थ नहीं होना चाहिये ।। २४ ।।

प्रतिष्ठावर्धनैरेतैरुपायैरतिशोभनैः ।
तन्तवः सुप्रतिष्ठाः स्युर्ग्रामेषु नगरेष्वपि ॥२५॥

यह उपाय बहुत सुन्दर है। इससे प्रतिष्ठा बढ़ेगी। तथा गाँवों और शहरोंमें सूतकी प्रतिष्ठा बढ़ जावेगी ॥ २५ ॥

तेभ्यः क्रीतानि वस्तूनि स्युः प्रशस्तानि सर्वथा ।
दुःखदा निर्धनानां सा विलुप्येत महार्घता ॥२६॥

उन सूतोंसे खरीदी हुई चीज़ बहुत अच्छी होगी। और गरीबोंकी महँगवारी भी नष्ट हो जायगी ॥ २६ ॥

क्रेष्यतेऽपेक्षितं वस्तु कोऽपि बालोऽपि निर्भयम् ।
अस्मात्प्रामाणिकाद्धट्टाद्ग्रामीणैरेव चालितात् ॥२७॥

इस दूकानको गाँवके ही लोग चलावेंगे अतः यह दूकान प्रामाणिक ही होगी। एक बच्चा भी अपनी अपेक्षित वस्तुको निर्भय होकर यहाँसे खरीदेगा ॥ २७ ॥

सामान्यास्तन्तवस्तत्र ग्रहीष्यन्ते कदापि न ।
ततोऽपेक्षिष्यते तत्र पूर्वं सुष्ठु परीक्षकः ॥२८॥

मामूली सूत उस दूकानमें नहीं लिया जायगा। अतः वहाँ एक अच्छा सूतका परीक्षक भी होना चाहिये ॥ २८ ॥

मलिनानि भवेयुर्नो सूत्राणीति धिया सदा ।
पत्रेण वसनेनापि वेष्टनीयानि यत्नतः ।२९॥

सूत मैले न हो जायँ इस विचारसे उन्हें काग़ज़ या कपड़ेमें अच्छी तरहसे लुपेटना चाहिये ॥ २९ ॥

सूत्रवर्गपरीक्षार्थविनियुक्तपरीक्षकैः ।
व्यापारिभिश्च संबद्धैश्चर्खासंघैर्भविष्यते ॥३०॥

सूतका प्रकार जाननेकेलिये जो परीक्षक नियत होंगे वह व्यापारी और चर्खासंघ दोनों हो होंगे ॥ ३० ॥

प्रत्यहं सूत्रराशिः स चर्खासङ्घालयं प्रति ।
प्रेषितः स्यात्ततो गच्छेत्तन्तुवायगृहेषु च ॥३१॥

रोज रोज वह सब सूत चर्खासंघके कार्यालयमें भेजा जाय और वहाँसे वह जुलाहेके घर भेज दिया जायँ ॥ ३१ ॥

एतादृशेषु कुत्रापि पण्यद्रव्यालयेषु हि ।
न क्षतिर्नापि वस्तूनां मूल्येषूच्चावचं भवेत् ॥३२॥

इस प्रकारकी दूकानोंमें न तो क्षति = नुकसानकी संभावना है और न मूल्यमें घटबढ़ होनेकी संभावना है ॥ ३२ ॥

ग्राम्याण्येवात्र वस्तूनि विक्रेतव्यानि सर्वदा ।
यथानुभूति वस्तूनां शनैर्वृद्धिर्भविष्यति ॥३३॥

इस दूकानमें गाँवकी ही वस्तु बेंची जानी चाहिये । पश्चात् अनुभवके अनुसार धीरे धीरे वस्तु बढ़ायी जायेगी ॥ ३३ ॥

योजनेयमिह लब्धरूपिका सर्वमानवगणं विधास्यति ।
टङ्कशालमभिनन्द्यमीहितं नास्ति कस्यचिदपीत्यपह्नुतम् ॥३४॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
दशमः सर्गः

यह योजना यदि साकार बने तो यह सब मनुष्योंको सुन्दर टकसाल बना देगी, इसमें कुछ भी सन्देह नहीं है ॥३४॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
स्वोपज्ञराष्ट्रभाषाटीकायां
पारिजातापहारे दशमः सर्गः



# एकादशः सर्गः

भारते सर्वभागेषु भोज्यान्नपरमाध्र्यताम् ।
दृष्ट्वा म्लानमना एतत्प्रजाभ्यः समुपादिशत् ॥ १ ॥

भारत के सभी प्रान्तोंमें अन्नकी दुष्प्राप्यता देखकर दुःखी होकर महात्माजीने भारतीयप्रजाको यह उपदेश दिया ॥ १ ॥

क्षुधार्तानन्नदानेन तोषयितुं तथा तनूः ।
आच्छादयितुमेतेषां नग्नानां समयो ह्यसौ ॥ २ ॥

अन्नदान देकर भूखोंको और वस्त्रदान देकर नंगोंको सन्तुष्ट करनेका यही समय है ॥ २ ॥

भारतेऽद्य प्रदेशेषु सर्वेष्वेवोनताऽऽगता ।
अन्नस्यापि तथा योग्यवाससामपि सर्वथा ॥ ३ ॥

आज भारतके सभी प्रदेशोंमें अन्न और वस्त्रको कमी हो गयी है ॥३॥

यथा यथा प्रतिदिनं युद्धरूपं भयङ्करम् ।
अन्नादिवस्तुजातस्य न्यूनत्वं वर्त्स्यति क्रमात् ॥ ४ ॥

ज्यों-ज्यों युद्ध भयङ्कर होजायगा त्यों-त्यों धीरे धीरे अन्नादि पदार्थ कम होते जायँगे ॥ ४ ॥

वस्त्राणामन्नजातानामागमः परदेशतः ।
अवारुद्ध ततोऽभावो वस्तूनां भारतेऽभवत् ॥ ५ ॥

अन्न और वस्त्रका बाहरसे आना बन्द हो गया इसीलिये भारतमें उनका अभाव हुआ है ॥ ५ ॥

अन्नवस्त्रादिवस्तूनामभावो धनशालिभिः ।
इदानीं नानुभूयेत सर्वव्ययसहिष्णुभिः ॥ ६ ॥

धनिक लोग तो चाहे जितना द्रव्य व्यय कर सकते हैं अतः उन्हें अभी अन्न—वस्त्रादिका अभाव नहीं प्रतीत होता होगा ॥ ६ ॥

अथवा नानुभूयेत भविष्यत्यप्यनेहसि ।
तैः परं दीनलोकेषु तदभावोऽद्य नृत्यति ॥ ७ ॥

अथवा भविष्यमें भी उन्हें यह अभाव नहीं मालूम होगा परन्तु गरीबोंको तो वह अभाव खटक रहा है ॥ ७ ॥

दीनानाश्रित्य धनिकाः पुष्णन्ति धनितां निजाम् ।
अतस्तान्प्रति कर्तव्यं धनिकैर्ज्ञायतां निजम् ॥ ८ ॥

गरीबोंके द्वारा ही धनिक लोग अपने धनवानपनाको बढ़ा रहे हैं। अतः धनिकों को जानना चाहिये कि दीनोंके प्रति उनका क्या कर्तव्य है ॥ ८ ॥

दीनलोकेषु येषां स्यात्प्रेमभावस्तथाऽऽदरः ।
कार्यं तैरद्य न्यूनत्वं भोज्यवस्तुषु सर्वथा ॥ ९ ॥

जिन लोगोंको गरीबोंपर प्रेम और उनमें आदर बुद्धि हो उन्हें आज अपने खाने-पीनेकी वस्तुमें कमी कर देनी चाहिये ॥ ९ ॥

अल्पव्ययेन जीवन्तो रक्षन्तो द्रविणं ततः ।
नाशयन्ति न ते किञ्चिद्वर्धयन्ति च तत्पुनः ॥ १० ॥

थोड़े खर्चसे जीते हुए और आधे द्रव्यव्यय करते हुए उन्हें कुछ खोना नहीं है प्रत्युत उसे बढ़ाना ही है ॥ १० ॥

जीवितुं संप्रवक्ष्यामि मार्गमल्पव्ययं च यम् ।
आश्रित्य सुखिनः श्रेयः करिष्यन्तेऽद्य दुःखिनाम् ॥ ११ ॥

आज मैं जीनेकेलिये ऐसा मार्ग बताता हूँ जिसमें व्यय बहुत ही कम हो। जिसे ग्रहण करके सुखी लोग दुःखितोंका कल्याणकर सकते हैं ॥ ११ ॥

धनिका भुञ्जते भोज्यं विविधं युगपत्सदा।
स्वास्थ्यहानिकरीमेते सन्त्यजेयुः प्रथामिमाम् ॥ १२ ॥

धनिक लोग एक ही साथ बहुत प्रकारके भोजन लेते हैं। यह प्रकार हानिकारक है। इसका त्याग करना चाहिये ॥ १२ ॥

एककाले पचेयुस्ते धान्यमेकं सदा यदि।
स्वास्थ्यरक्षा भवेत्तेषां दुर्व्ययोऽन्नस्य नो भवेत् ॥ १३ ॥

एक समयमें यदि वह एक ही अनाज पकावें तो उनके स्वास्थ्यकी रक्षा भी हो और अन्नका दुर्व्यय भी न हो ॥ १३ ॥

युगपद्धनिकागारे भुज्यन्ते रोटिकौदनः।
दुग्धं घृतं गुडस्तैलं शाकं भाजी फलान्यपि ॥ १४ ॥

धनिकोंके घरमें एक ही साथ रोटी, भात, दूध, घी, गुड़, तेल, शाक, भाजी, फल यह सब खाये जाते हैं ॥ १४ ॥

एतेषां भोज्यजातानां यौगपद्यं मतौ मम।
जायेत सर्वथा भोक्तृशरीरारोग्यहानये ॥ १५ ॥

इन सभी पदार्थोंको एक साथ खानेसे मेरे मतमें आरोग्यकी हानि हो सकती है ॥ १५ ॥

दुग्धं फाण्टं तथाण्डानि मांसं भोक्तुश्च सर्वथा।
प्रोटीनं प्राणिजं प्राप्तं भवत्येव शरीरपुट् ॥ १६ ॥

दूध, अंडे, माँस खानेवालोंको शरीरपोषणकेलिये प्राणिज प्रोटीनकी प्राप्ति होती है ॥ १६ ॥

वनस्पतिजमेव स्यात्प्रोटीनं निर्धनैर्जनैः।
प्राप्तव्यं तेन तद्देहसमृद्धिर्नोपपद्यते ॥ १७ ॥

गरीब केवल वनस्पतिसे ही प्रोटीन प्राप्त कर सकते हैं। अत एव उनका शरीर पुष्ट नहीं होता ॥ १७ ॥

द्विदलं तैलमपि चेत्त्यक्ते स्यातां धनेश्वरैः।
निर्धना उपभुञ्जीरन्नत्यावश्यकवस्तुनी ॥ १८ ॥

यदि धनिक लोग दाल और तेल इन दो वस्तुओंको छोड़ दें तो गरीबोंके लिये यह अत्यावश्यक वस्तु मिल सकती है ॥ १८ ॥

अन्नं किमपि भोक्तव्यं न प्रवाहिणि वस्तुनि।
आर्द्रीकृत्य यतस्तेन जठरो मन्दतां व्रजेत् ॥ १९ ॥

किसी प्रवाही बस्तुमें कोई भी अन्न रोटी या भात भिंजाकर नहीं खाना चाहिये क्योंकि ऐसा करनेसे जठर मन्द हो जाता है ॥ १९ ॥

अनार्द्रीकृत्य भुक्तेन शाकेषु द्विदलादिषु।
अन्नेन परमाल्पेन सन्तृप्तिर्भवति क्षुधः ॥ २० ॥

शाक या दालमें भिगाये विना ही खाये हुए थोड़े अन्नसे भी भूखकी तृप्ति हो जाती है ॥ २० ॥

टोमेटोमूलकाभ्यां च गृञ्जनेन पलाण्डुना।
अन्नं हि शक्यते भोक्तुमामेनैव निरन्तरम् ॥ २१ ॥

कच्चे टमाटर, मूली, गाजर, प्याजके साथ भी रोटी, भात खाये जा सकते हैं ॥ २१ ॥

सैलेडपालकाद्याभिर्भाजाभी रोटिकौदनः।
दधिमिश्राभिरथवा केवलाभिश्च भुज्यताम् ॥ २२ ॥

सेलाड, पालक आदि कच्ची भाजियोंमें दही मिलाकर अथवा दही मिलाये बिना ही, उनके साथ रोटी-भात खाये जा सकते हैं ॥ २२ ॥

पाचितैः शाकभाजाद्यैर्विंशत्या तोलकैर्मितैः।
यो लाभः पञ्चभिस्तोलैरामैस्तैः स विजायते ॥ २३ ॥

पकायी गयी २० तोला शाक-भाजीसे जो लाभ होता है वह पाँच तोला ही कच्ची शाकभाजीसे प्राप्त होता है ॥ २३ ॥

दुग्धेन भक्षिता स्याच्चेद्रोटिका करपट्टिका।
जठरो मन्दतां याति भारो भवति चोदरे॥ २४॥

यदि रोटी या भाखरी ( मोटी रोटी ) दूधके साथ खायी जाय तो जठर मन्द हो जाता है और पेटमें भार होता है॥ २४॥

आमेनैवैककाले स्याच्छाकेन सह भोजनम्।
पाचितेन द्वितीयस्मिन्कालेऽभ्यस्येत्क्रमेण हि॥ २५॥

एक समयका भोजन कच्चे शाकके साथ और दूसरे समयका भोजन पकाये शाकके साथ, करनेका अभ्यास करना चाहिये॥ २५॥

मिष्टान्नं नहि भोक्तव्यं दूरादेव च तत्त्यजेत्।
अपुष्टिकरतत्त्वं तत्स्वास्थ्यक्षयकरं तथा॥ २६॥

मीठाई नहीं खानी चाहिये। दूरसे ही उसका त्याग करना चाहिये। उसमें कोई पोषक तत्त्व तो होता नहीं और हानिकारक होता है॥ २६॥

गुडो वा शर्करा वापि रोट्या वा पयसा सह।
केवलः केवला वापि भुक्ता हानिकरी नहि॥ २७॥

रोटी और दूधके साथ गुड अथवा खाँड़ ( चीनी ) खानेसे अथवा केवल गुड़, खाँड़ खानेसे कोई हानि नहीं होती है॥ २७॥

देहसम्पोषणार्थं स्युर्भोक्तव्यानि फलान्यपि।
धनिभक्ष्याणि तान्यद्य सन्त्यलभ्यानि निर्धनैः॥ २८॥

शरीरकी पुष्टिकेलिये फल भी खाने चाहिये। परन्तु वह तो धनिकोंकी खोराक बन गयी है, गरीबको तो फल मिल ही नहीं सकते॥ २८॥

अन्नव्यापारिभिर्लोभवृत्तिर्हेया विपत्करी।
आयग्राहग्रहाच्चापि मोक्तव्यं तैः प्रयत्नतः॥ २९॥

अन्नके व्यापारियोंको लोभवृत्ति छोड़ देनी चाहिये। अनावश्यक आमदनीके पंजेमेंसे प्रयत्नपूर्वक छूट जाना चाहिये॥ २९॥

अत्यल्पेनापि लाभेन सन्तोषः सेव्य एव तैः ।
देशं कालं विचार्यैव कर्तव्या व्यवहृतिः सदा ॥ ३० ॥

थोड़े लाभसे भी उन्हें संतोष करना चाहिये। देश-कालका विचार करके ही व्यवहार करना चाहिये ॥ ३० ॥

दीनेभ्यो धान्यरक्षायै व्यापृतास्ते निरन्तरम् ।
भवेयुर्नो तदा तेषां स्यादेवाऽऽलुण्ठनस्य भीः ॥ ३१ ॥

यदि गरीबोंकेलिये अन्न बचानेमें वह तत्पर नहीं होंगे तो उनके अन्नके लुट जानेकी भीति सदा बनी रहेगी ॥ ३१ ॥

समीपवर्तिभिर्लोकैः सम्पर्कः साध्यतां सदा ।
धान्यविक्रयिभिस्तेन प्रतिष्ठा स्याच्च नो भयम् ॥ ३२ ॥

अनाजके व्यापारियोंको चाहिये कि वह आसपासके लोगोंके सम्पर्कमें बने रहें । ऐसा करनेसे प्रतिष्ठा होगी और भय दूर होगा ॥ ३२ ॥

महासभीयसिद्धान्तपरिपालनतत्परैः ।
युगधर्मोपदेशेन बोधनीयाः सदैव ते ॥ ३३ ॥

जो लोग राष्ट्रियमहासभाके सिद्धान्तको मानते हों उन्हें चाहिये कि समयके अनुसार व्यापारियोंको उपदेश करें ॥ ३३ ॥

संचेतव्यं तदन्नादि कृषकैर्ग्रामवासिभिः ।
तन्नवोत्पादने यत्नः कार्योऽम्मय्यां सदा भुवि ॥ ३४ ॥

गाँवके कृषकोंको चाहिये कि वह अन्नका संग्रह करें। तथा जलवाली भूमिमें नये अन्न पैदा करनेका प्रयत्न करें ॥ ३४ ॥

अल्लुको वीटरूट् चापि रतालुः कदलीफलम् ।
शूरणं चाल्पयत्नेन भवेदुत्पादितं सदा ॥ ३५ ॥

आलू, शकरकन्द, रतालू, केले, सूरण यह सब अल्पश्रमसे पैदा किये जा सकते हैं ॥ ३५ ॥

अभावे धान्यजातस्य तेषां भक्षणतोऽपि च।
मनुष्याणां भवेदेव सुकरं प्राणरक्षणम् ॥ ३६ ॥

अन्नके अभावमें आलू आदि खानेसे भी प्रणरक्षा सुगमतासे की जा सकती है ॥ ३६ ॥

द्रव्याभावोऽपि सर्वेषामुपपीडापरायणः ।
तस्माद्द्रव्यस्य सम्प्राप्तेरुपायोऽद्य विचार्यताम् ॥ ३७ ॥

द्रव्यके न होनेसे भी लोगोंको दुःख होता है अतः द्रव्यप्राप्तिके उपायका अब विचार करें ॥ ३७ ॥

उद्योगा बहवः सन्ति प्रापणीयाः परं महान् ।
सूत्रचक्रेण सूत्राणामुत्पादः सुलभो भवेत् ॥ ३८ ॥

बहुतसे उद्योग हैं जो किये जा सकते हैं परन्तु रेंटिया (चर्खा) द्वारा सूत पैदा करना सहज है ॥ ३८ ॥

ग्रामीणैः स्थानिकैरन्यैरुद्योगैरपि यत्नतः ।
साधनीयोऽद्य निखिलैः कार्षापणसमागमः ॥ ३९ ॥

दूसरे भी स्थानिक ग्रामीण उद्योगोंसे द्रव्य पैदा करना चाहिये ॥३९॥

अलसेष्वपि विद्वद्भिरुपदेशः प्रतन्यताम् ।
तेन तेऽपि निजालस्यं त्यक्त्वा स्युः कर्मसंगताः ॥ ४० ॥

समझदार लोग आलसियोंको उपदेश करें, उससे वह लोग भी आलस्य छोड़कर काममें लग जायँगे ॥ ४० ॥

वस्त्रनिर्माणयन्त्रेषु विश्वासो धीयतां नहि ।
तेन स्ववस्त्रनिर्माणं कर्तव्यं भारतैः स्वयम् ॥ ४१ ॥

कपड़ोंकी मिलोंका विश्वास नहीं करना चाहिये। अतः भारतीय लोग स्वयं अपना वस्त्र पैदा करें ॥ ४१ ॥

धनुश्चर्खासमुत्पादे धनं नापेक्ष्यते बहु ।
ततस्तेनैव सूत्राणामद्य कार्या विनिर्मितिः ॥ ४२ ॥

धनुष चर्खा बनानेमें बहुत द्रव्य नहीं व्यय होता । अतः उसीसे सूत कातना चाहिये ॥ ४२ ॥

तर्कुतोऽपि च सूत्राणां निर्माणं सुकरं भवेत् ।
अन्ये चर्खा धनैः साध्या विपुलैरद्य दुर्गमैः ॥ ४३ ॥

टेकुआ ( तकली ) से भी सहलाईसे सूत काता जा सकता है । दूसरे चर्खोंके लेनेमें पैसा बहुत खर्च होता है ॥ ४३ ॥

योग्याः शक्ता जनाः सर्वे यदि तन्तुकृताविह ।
प्रत्यहं निरता एकघटिकां स्युः शिवं भवेत् ॥ ४४ ॥

यदि योग्य और सशक्त लोग एक घण्टा भी सूत कातने लग जायँ तो कल्याण हो जायँ ॥ ४४ ॥

हस्तचालितकार्पासयन्त्राणि सकलान्यपि ।
फालोत्पादनकार्येऽद्य व्यापृतानि भवन्त्वतः ॥ ४५ ॥

सब कर्घे फाल पैदा करनेके काममें लग जायँ ॥ ४५ ॥

तूलमार्जनिका गेहे स्थापनीयाऽखिलैरपि ।
तूलसंमार्जनं सर्वैः स्वयं निष्पाद्यमन्वहम् ॥ ४६ ॥

धुनकी ( पींजण ) सबको घरमें रखनी चाहिये । और सभी को सूत रोज़ कातना चाहिये ॥ ४६ ॥

यदि तन्त्राणि सर्वाणि न स्युः कार्यपराणि तत् ।
लक्षाधिकास्तन्तुवायाः क्षुधा मृत्युमवाप्नुयुः ॥ ४७ ॥

यदि सभी तन्त्र कार्य नहीं करेंगे तो लाखों जुलाहे ( वणकर ) मर जायँगे ॥ ४७ ॥

अतीव कठिनं कार्यं भवेदेतद्विभासितम् ।
परं दुःखमहासिन्धुनिमग्नांस्तारयेदिदम् ॥ ४८ ॥

यह कार्य कदाचित् बहुत कठिन मालूम होता होगा परन्तु दुःख-महासागरमें डूबे हुओंको यही पार करेगा ॥ ४८ ॥

महासभानुगैः सर्वैः स्वकुटुम्बिजनेषु तत् ।
प्रथमं सम्प्रचार्यं स्यात्प्रतिवेशिष्वनन्तरम् ॥४९॥

महासभावादियोंको चाहिये कि वह इस कार्यको पहले अपने घरमें और पश्चात् पड़ोसियोंमें प्रचार करें ॥ ४९ ॥

यथा संस्पर्शजा रोगाः परितः प्रसरन्ति ते ।
तथैव सूत्रकरणं सर्वव्याप्तं भविष्यति ॥५०॥

जिस तरहसे छुतिहर रोग चारों ओर फैल जाते हैं वैसे ही यह कताई भी सर्वत्र फैल जायगी ॥ ५० ॥

वास्तविको भवेदेष युद्धयत्नो हितावहः ।
कुर्वन्वा कारयंश्चैतं स्यान्महाफलभाङ्नरः ॥५१॥

यह वास्तविक युद्धयत्न होगा और इससे लाभ होगा । इस यत्नको करने करानेवाले लोग पुण्यपात्र बनेंगे ॥ ५१ ॥

राजानो भारतीयाश्चेन्नैतत्कार्यं प्रकुर्वतः ।
वर्जयेयुर्जनान्साधुवादं प्राज्ञं समाप्नुयुः ॥५२॥

यदि भारतीय नरेन्द्र इस कार्यको करनेवालोंको मना नहीं करेंगे तो बहुत धन्यवाद प्राप्त करेंगे ॥ ५२ ॥

मुहम्मद अली जीना मुस्लिमलीगसभ्यकान् ।
महासभाजनैः सार्धं कार्यं कर्तुं प्रणोदयेत् ॥५३॥

मुहमदअली जिन्नाको चाहिये कि मुस्लिम लीगके सभ्योंको महासभा-वादियोंके साथ कार्य करनेकी प्रेरणा करें ॥ ५३ ॥

तूलसंमार्जने सूत्रकर्तने फालनिर्मितौ ।
खखखगुणदृङ्मुस्लिम्मानवाः सन्ति केवला ॥५४॥

रूईके साफ करनेमें-धूननेमें, सूत कातनेमें और फाल बनानेमें २३००० केवल मुसलमान् काम कर रहे हैं ॥ ५४ ॥

चर्खासंघोऽद्य सर्वेभ्य एतेभ्यो जीविका ददत् ।
मुसल्मानेभ्य आधत्ते दरिद्रभरणं सदा ॥५५॥

चर्खासंघ इन सब मुसलमानोंको जीविका देकर गरीबोंका सदा पालन कर रहा है ॥ ५५ ॥

सर्वज्ञदेवो दुरितापहारी,
परोपकाराय कृतावतारः ।
आर्याननार्यान्सकलान्समेन,
भावेन पथ्यं समुपादिशत्सः ॥५६॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
एकादशः सर्गः

पापोंके हरनेवाले, परोपकारकेलिये अवतार धारण करनेवाले महात्माजीने हिन्दुओं और मुसलमानोंको समानभावसे लाभकारक वस्तुका उपदेश किया ॥ ५६ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
स्वोपज्ञभारतराष्ट्रभाषाटीकायां पारिजातापहारे
एकादशः सर्गः



# द्वादशः सर्गः

सितशासनस्य नयनाशपण्डितैः सितसैनिकैर्निशिचरैरिवार्तिदैः ।
क्रियमाणमन्वहमवेक्ष्य दुष्कृतं यतिवर्यमाह ललना च कापि तम् ॥१॥

नीतिनाश करनेमें कुशल, निशाचरके समान दुःख देनेवाले अंगरेजोंकी अंगरेजी सेना द्वारा किये जानेवाले प्रतिदिनके दुष्कर्मोंको देखकर एक महिलाने श्रीमहात्माजीसे पूछा कि—॥ १ ॥

क्रियते कदाचिदिह राजपूरुषैरबलासु मानहरणी क्रिया यदि ।
वद किं तदास्तु करणीयमुत्तमं कुलजाभिरार्यललनाभिरीश्वर ॥२॥

यदि कभी राजपुरुष सैनिकादि स्त्रियों पर अत्याचार करें तो उस समय स्त्रियोंको क्या करना चाहिये ? ॥ २ ॥

अथ नीतिपण्डितकुलस्य शेखरो यतिराज आदित गिरं तरस्विनीम् ।
निकषोपलोस्ति समयो महानयं भविता परीक्षणमिहाद्य सन्नृणाम् ॥३॥

नीतिशास्त्रके विद्वानोंमें श्रेष्ठ श्री महात्माजी बोले कि यह महान् कसौटीका समय है । इसमें सत्पुरुषोंकी परीक्षा होगी ॥ ३ ॥

कविकल्पनैव भवताच्च भारते लिखितानि रामचरितेपि वा यदि ।
परमद्य तानि चरितानि वस्तुतो नयनाजिरे परिणतानि मानुषे ॥४॥

महाभारतमें अथवा वाल्मीकि रामायणमें जिन चरितोंका उल्लेख है वह भले कविकल्पना ही हो परन्तु आज वह मनुष्योंकी आँखके सामने उपस्थित है ॥ ४ ॥

असुरेशरावणसमीकतुल्यतां दधतेद्य जन्यमिदमाङ्गलं महत् ।
गगने नभस्वति महाजवाः स्थिता अनलास्त्रवर्षणमिमे प्रकुर्वते ॥५॥

अंग्रेजोंका यह महान् युद्ध रावणके युद्धके समान ही है । यह महा-

बलशाली अंग्रेजी सैनिक आकाशमें और वायुमें स्थिर रहकर अग्न्यस्त्रसे अग्निवर्षा करते हैं ॥ ५ ॥

**परिकल्प्य हुं मिथ इमेरितां सितास्तृषितां चिरेण वसुधां नृशोणितैः ।**
**परितर्पयन्ति जलराशिभिर्यथा धिगिमां महामहिमशालिसंसृतिम् ॥६॥**

यह अंग्रेज परस्पर एक दूसरेमें शत्रुताकी कल्पना करके मनुष्योंके रक्तसे, बहुत समयसे प्यासी पृथ्वीको, जलके समान तृप्त कर रहे हैं। इस संसार को धिक्कार है ॥ ६ ॥

**नहि दृश्यते किमपि शौर्य्यमत्र तैर्नरमुण्डलोलुपगणैर्महामृधे ।**
**न सुरो नरोपि नहि कर्तुमीदृशं हृदयर्तिकृत्प्रधनमेतदासुरम् ॥७॥**

मानवमुण्डके लोभी यह अंग्रेज इस महायुद्धमें कोई शूरता नहीं दिखा रहे हैं। हृदयको व्यथित करनेवाले इस आसुर युद्धको न तो कोई मनुष्य कर सकता है और न कोई देवता ही ॥ ७ ॥

**पशुभिर्विधातुमिह शक्यते तु यन्नरपामरा अपि समाचरन्ति तत् ।**
**जनतागृहापणगतान्धनादिकान्नितरां लुठन्ति बत सैनिका इमे ॥८॥**

जो कार्य केवल पशु ही कर सकते हैं उसे भी यह नराधम कर रहे हैं। लोगोंके घरमें या दूकानमें पड़ी हुई वस्तुओंको यह अंग्रेजी सेना रोज लूटा करती है ॥ ८ ॥

**पथि संगता निरपराधशालिनीर्ललना इमे शठधियो बलादपि ।**
**परिपीडयन्ति वचनैररुन्तुदैरधमा हरन्ति निरनुग्रहाश्च ताः ॥९॥**

मार्गमें निर्दोष भद्र कुलस्त्री मिल जायँ तो यह बदमाश जबर्दस्ती उन्हें मर्मभेदी वचनोंसे पीड़ा पहुँचाते हैं और वह नीच निर्दय पुरुष उनका हरण भी कर लेते हैं ॥ ९ ॥

**बहुशो विशन्ति गृहमेधिनां गृहं निरपत्रपा धवलसैनिका इमे ।**
**अथपातयन्तिपतिताःपतिव्रताः सितशासनंविकृतिधिक्चसैनिकान् ॥१०॥**

अंग्रेजी सैनिक गृहस्थोंके घरमें घुस जाते हैं। यह निर्लज्ज और पापी पतिव्रता स्त्रियोंके पातिव्रत्यका नाश करते हैं। इस राज्यको और इसके सैनिकोंको धिक्कार है ॥ १० ॥

**सितशासनेन परिपालिता इमे पशुवृत्तिपालनपरा नराधमाः ।**
**निखिलं दुराचरणमद्य मद्यपा इह दर्शयन्ति कृपणे हि भारते ॥११॥**

इन सैनिकोंको अंग्रेजोंने पाल रखा है। यह नराधम पशुवृत्तिको पोषण करनेवाले हैं। शराब पीनेवाले यह सैनिक इस गरीब देशमें सभी दुराचरण करके दिखा रहे हैं ॥ ११ ॥

**अथ नेत्रिणोपि जनुषान्धतां गताः श्रुतिमज्जना अपि गलच्छ्रवोबलाः ।**
**भवितार एव विवशाः पराहताः प्रसरेदिहाद्य बलिनां स्वतन्त्रता ॥१२॥**

आँखवाले भी अन्धे हो गये हैं और कानवाले भी बहरे बन गये हैं। लाचार होकर सब अब नष्ट होंगे। बलवानोंकी स्वतन्त्रता अब यहाँ फैलेगी ॥ १२ ॥

**पुरुषा हि यत्र निखिलाश्चमूचरा ननु तत्र दुष्कृतिपरायणाः प्रजाः ।**
**दुरितानि तत्र नवसभ्यतातनुर्न हि मानभङ्गगणना विचार्यते ॥१३॥**

जिस देशमें सभी पुरुष सैनिक होते हैं वहाँकी प्रजा अवश्य ही दुराचारिणी होती है। उस देशमें पाप नयी सभ्यताका एक अङ्ग माना जाता है। मानभङ्गकी तो कोई गणना ही नहीं होती ॥ १३ ॥

**नहि भारते भवति रीतिरीदृशी दुरितानि नात्र सुकृतानि धार्मिके ।**
**गलिताधिनैतिकबला वनेचरा अनुयान्ति मार्गमसतां निषेवितम् ॥१४॥**

इस भारत जैसे धार्मिक देशमें यह रीति नहीं है। 'पाप' यहाँ पुण्य नहीं माना जाता। जिनका नैतिक बल गिरा हुआ है ऐसे जंगली ही दुष्टोंके मार्गमें प्रयाण करते हैं ॥ १४ ॥

**यदि कोपि दुर्भगसिताङ्गसैनिको ललनासु काममपि बलेन धर्षयेत् ।**
**न हि भाजनं भवतु सा तिरस्कृतेर्न हि पंक्तितो भवतु सा बहिष्कृता॥१५॥**

यदि कोई दुष्ट सैनिक किसी स्त्रीका अपमान करे–शीलभङ्ग करे तो उस स्त्रीका न तो तिरस्कार होना चाहिये और न बहिष्कार होना चाहिये ।। १५ ।।

**निजधर्मभङ्गविषये हि साबला यदि धत्त एव मतिमात्मनः क्वचित् ।**
**अथ धर्मतो भवति सा च्युता तदा नहि सापि या तदितरा निराश्रया।।१६।।**

जब स्त्री धर्मभङ्ग करनेमें अनुमत होती है तब वह अपने धर्मसे च्युत मानी जाती है। परन्तु जो ऐसी नहीं है अर्थात् धर्मभङ्गमें जिसकी संमति नहीं है ऐसी निराश्रित स्त्री धर्मच्युत नहीं मानी जानी चाहिये ।।१६।।

**यदि कारयेदिह च कोपि कामपि प्रियधर्मतो निपतितां बलादिह ।**
**निजधर्मतो भवति सा न विच्युता सततं हि सार्हति दयां समाजतः।।१७।।**

अपने प्रियधर्मसे यदि किसी स्त्रीको कोई पुरुष बलसे पतित करता हो तो वह स्त्री स्वधर्मसे च्युत नहीं हुई है। वह समाजकी दयाके योग्य है ।। १७ ।।

**न हि गोप्यतां व्रजतुकृत्यमीदृशं परिचिन्तिता भवतु तत्प्रतिक्रिया ।**
**परिवर्जनाय ननु तादृशः कृतेर्जन आददीत पदवीं च कामपि ।।१८।।**

ऐसा कृत्य कभी छिपाना नहीं चाहिये। उसके लिये उपाय सोचना चाहिये। वैसा कर्म सर्वथा दूर करनेके लिये कोई योग्य मार्ग लेना चाहिये ।। १८ ।।

**अधिवृत्तपत्रमपि वृत्तमीदृशं लभते प्रकाशनपदं यदा तदा ।**
**अधिकारिणः क्वचिदितोतिदुष्कृतात्परिवर्जयेयुरुपगत्य सैनिकान्।।१९।।**

समाचारपत्रोंमें भी यदि ऐसा समाचार प्रकाशित किया जाय तो संभव है कि अधिकारी लोग जाकर सैनिकोंको ऐसे दुष्कर्मसे रोके ।।१९।।

**नगरेषु वासमभितन्वतीः सदा प्रमदा भयं प्रतिदिनं हि कुस्यति ।**
**यदि ताः समाः समुपगम्य कंचनावसथं श्रयेयुरपि चाप्नुयुः श्रियम् ।।२०।।**

शहरोंमें रहनेवाली युवती स्त्रियोंको तो अवश्य भय सदा बना रहेगा।

यदि वह सब जाकर किसी गाँवमें निवास करें तो संभव है कि उन्हें शान्ति मिले ॥२०॥

धनितां स्पृशन्ति यदि तासु का अपि,
निवसन्तु ता ऋजुतयैव तत्र तु ।
परिहाय भूषणसुवाससां गृधिं,
सुखितां प्रयान्तु विरहय्य भीतिकाम् ॥२१॥

यदि उन युवतियोंमेंसे कोई धनाढ्य हों तो भी उन्हें वहाँ ग्राममें ही सादगीसे ही रहना चाहिये। आभूषण और सुन्दरवस्त्रका मोह छोड़कर, भयसे रहित होकर सुखी बनें ॥२१॥

भयहीनतास्ति निजधर्मरक्षणे परमोभ्युपाय इति तां समन्ततः ।
परिचुम्ब्य भारतमहाधनं हि ता उपचिन्वतां गतमलं पतिव्रतम् ॥२२॥

स्वधर्मरक्षणमें भयका त्याग सर्व श्रेष्ठ उपाय है। उसका आश्रय लेकर भारतके सबसे बड़े धन—पतिव्रताकी वह रक्षा कर सकती हैं ॥२२॥

अवलोक्य धर्मनिरतां पतिव्रतां विषयप्रणीतमनसो विकारिताम् ।
परिहाय शुद्धमनसो ह्रिया जिताः कुपथात्पृथग् झटिति दूरगामिनः ॥२३॥

धर्मपरायण पतिव्रता स्त्रीको देखकर विषयी पुरुष विकारभावको छोड़कर, पवित्र मनवाला होकर, लज्जाके मारे शीघ्र कुमार्गसे पृथक् हो जाते हैं ॥ २३ ॥

बहवः पुरापि विमला महाबला अबलाः स्वधर्ममभितोभिरक्षितुम् ।
कृतकृत्यतामतितमां सिषेविरे परिवीक्ष्य ता विषयिणो ललज्जिरे ॥२४॥

पूर्व समयमें भी निर्मल बलवती स्त्रियोंने स्वधर्मकी सम्पूर्ण रक्षाकेलिये कृतकृत्यताका अनुभव किया है। कामी पुरुष उन्हें देखकर लज्जित हो गये थे ॥ २४ ॥

अथ सैनिका अपि भवन्ति नोखिलाः पशुधर्मसेवनपरा गतत्रपाः ।
पवनाशना विषधरा न वा समा विषिणोपि दंशकुशला न चाखिला ॥२५॥

किंच, सभी सैनिक निर्लज्ज और पशु नहीं होते। सभी सर्प विषधर नहीं होते और सभी विषधर सर्प दंश नहीं मारते ॥ २५ ॥

**पितृभिस्तथैव पतिभिर्हितैषिभिः प्रमदाभ्य एष उपदेश ऊर्जितः।**
**अभयङ्करः प्रतिदिनं प्रदीयतां तत एव ताः कुशलमाप्नुयुः सदा ॥२६॥**

माता, पिता, पति और अन्य हितैषियोंको चाहिये कि अभय बनानेवाला यही उपदेश सदा युवती स्त्रियोंको देते रहें। इसीसे वह कल्याण प्राप्त कर सकेंगी ॥ २६ ॥

**जगदीश्वराङ्घ्रियुगले स्वकं भरं गृहयोषितामपि समर्प्य संततम्।**
**पुरुषा भवेयुरभितः स्वरक्षणे निरता इदं भवति वर्त्म सौख्यदम् ॥२७॥**

भगवान्के चरणोंमें अपना और घरकी स्त्रियोंका भार अर्पण करके यदि पुरुष आत्मरक्षामें तत्पर बने तो यह मार्ग कल्याणकारी होगा ॥२७॥

**कठिने ह्यनेहसि यदा हितैषिणः कथमप्यलं न परिरक्षणे तदा।**
**परमेश एव कुरुते सहायतां निखिलं प्रविश्य जगदेकरक्षकः ॥२८॥**

कठिन समयमें जब अपने हितैषी किसी प्रकारसे भी रक्षण करनेमें असमर्थ हो जाते हैं तब सकल जगत्में प्रविष्ट होकर सबकी रक्षा करनेवाले भगवान् ही सहायता देते हैं ॥ २८ ॥

**हृदयं न यावदधितिष्ठतीश्वरे विमला प्रतीतिरथ तावदस्खलन्।**
**सुकरैस्तथातिकठिनैरुपायकैः कुरुताज्जनो निजकुटुम्बरक्षणम् ॥२९॥**

परन्तु हृदयमें विराजमान ईश्वरमें जबतक निर्मल विश्वास उत्पन्न न हो तब तक मनुष्यको चाहिये कि बिना विलम्ब किये, सुगम अथवा कठिन किन्हीं भी उपायोंसे अपने कुटुम्बका रक्षण करे ॥ २९ ॥

**उदिते विपत्तिदिवसे न साम्प्रतं कथमप्यहिंसनमिदं च हिंसनम्।**
**इति तर्कणा मतिमतां विपद्भुजां बत चेतसा बलिततेजसा क्वचित् ॥३०॥**

जब विपत्तिका दिन आ चुका हो और चित्त चंचल बन चुका हो तो

बुद्धिमानोंको चाहिये कि उस समय हिंसा और अहिंसाका विचार छोड़ दें ॥ ३० ॥

यदि कापि योषिदतिकामपीडितैर्नरपामरैः क्वचन धर्षिता भवेत् ।
निजरक्षणं हि कुरुतां न वीक्षतां शुचितामुपायनिहितामथेतराम् ॥३१॥

यदि कोई नरपामर किसी स्त्रीपर बलात्कार करना चाहे तो उस समय उस स्त्रीको चाहिये कि किसी प्रकारसे भी आत्मरक्षा करे। उपायकी पवित्रता और अपवित्रताका विचार न करे ॥३१॥

समुदेति तन्मनसि तत्क्षणेऽश्रमं निजरक्षणे पटु यदेव साधनम् ।
विवशाबला झटिति तेन चात्मनः प्रतनोतु रक्षणमिदं सयुक्तिकम् ॥३२॥

उस समय उस स्त्रीके मनमें बिना विलम्बके जो ही अच्छा साधन प्रतीत हो उसीके द्वारा वह आत्मरक्षा करे, यही योग्य है ॥ ३२ ॥

दशनैर्विदश्य नरराक्षसं तथा नखरैर्विधाय तमलं क्षताहतम् ।
निजधर्मरक्षणपरा परासुतां यदि संभजेत कृतिनी न तत्क्षतिः ॥३३॥

दाँतोंसे काटकर अथवा नखोंसे उसे घा करके, आहत बनाकर, अपने धर्मकी रक्षा करती हुई यदि वह स्त्री मृत्युको प्राप्त करे तो भी कोई क्षति नहीं है ॥ ३३ ॥

मृतिभीतिमास्य सुधियो निजं परान्परिरक्षितुं नियतमेव सुक्षमाः ।
मरणं प्रियं परमिहास्ति कस्यचिन्न हि तेन पापमुरु संप्रवर्तते ॥३४॥

यदि मरणका भय छोड़ दे तो अवश्य बुद्धिशाली मनुष्य अपनी और अन्योंकी भी रक्षा कर सकता है। परन्तु मरना किसीको अच्छा नहीं लगता इसीलिये बड़े बड़े पाप हो रहे हैं ॥ ३४ ॥

मृतिभीनिराकरणहेतवे जना ददते धनं विदधते नतिं पराम् ।
तृणमाननेपि विवशाः प्रगृह्णते निजमानभङ्गसहितास्तिरोहिताः ॥३५॥

मृत्युके भयको दूर करनेकेलिये लोग धन देते हैं और नतमस्तक हो

जाते हैं। लाचार होकर मुखमें घास = तृण पकड़ते हैं। मानभङ्ग कराकर छिप जाते हैं ॥ ३५ ॥

मृतिभीतितोद्य बहुशोऽबलाः सदा विषयाभिलाषकशयाहतात्मने ।
निजदेहदानमपि कुर्वतेतमामिति जायते मनसि मेतिवेदना ॥३६॥

आज मृत्युके डरसे अनेकबार स्त्रियाँ विषयी पुरुषोंको अपना शरीर अर्पण कर देती हैं इससे मेरे मनमें भारी दुःख होता है ॥ ३६ ॥

असुलोभमत्र परिहाय पाप्मनां परकारणं जनिफलान्यवाप्नुयुः ।
श्रुतिसम्मितं वच इदं श्रुतौ च यैः क्रियते विपज्जलनिधिस्तरीष्यते ॥३७॥

पापोंका मुख्य कारण है प्राणोंका लोभ। इसे छोड़कर ही जन्म सफल बनाया जा सकता है। वेदवचनके समान इस वचनपर जो ध्यान देंगे वह विपत्तिसागरको पार कर जायँगे ॥ ३७ ॥

यदि कोपि योषिदिह धर्षिता भवेत्सितसैनिकैर्न भवितव्यमीक्षकैः ।
पुरुषैः कदापि तु विधीयतां स्वयं दुरितस्य तस्य झटिति प्रतिक्रिया ॥३८॥

यदि सैनिक किसी स्त्रीका अपमान करें तो पुरुषोंको चाहिये कि वह केवल द्रष्टा न बनें; किन्तु उस अन्यायके प्रतिकार करनेमें लग जायँ ॥३८॥

नहि तर्हि राजपुरुषः क्वचिद्भवेत्परिमृग्य आत्मधिषणां समाश्रितैः ।
अविशंसनेन हननेन योषितः परिरक्षणीयमथ शीलमीडितम् ॥३९॥

उस समय पुलिसको ढूँढनेकी आवश्यकता न होनी चाहिये। अपनी बुद्धिका सहारा लेकर हिंसाद्वारा अथवा अहिंसाद्वारा स्त्रीके शील-सदाचार-की रक्षा करनी चाहिये ॥ ३९ ॥

असुसङ्कटे च निकटेपि पूरुषैः परिरक्ष्यतामधमधर्षिताबला ।
प्रतिहिंसया सपदि वाप्यहिंसया सभयत्वमस्ति नरकाय संततम् ॥४०॥

प्राणसङ्कट उपस्थित हो तो भी पुरुषोंको चाहिये कि वह नीचों द्वारा सतायी गयी हुई अबलाका हिंसा अथवा अहिंसासे रक्षण करें। भय नरकका कारण है ॥ ४० ॥

जरठोपि मादृश उपेक्षितुं क्षमो न भवेन्निरीक्ष्य ललनाविडम्बनम् ।
न वदेद्वेमि नितरामहिंसनं सकलं हि वर्त्म पररक्षणे स्थितम् ॥४१॥

मेरे जैसा वृद्ध भी स्त्रियोंके अपमानको देखकर उसकी उपेक्षा नहीं कर सकता । वह यह नहीं कह सकता कि मैं अहिंसाको ही जानता हूँ । दूसरोंकी रक्षाके लिये सब मार्ग खुले हैं ॥ ४१ ॥

अहमप्रभुर्निकृतधर्षितस्त्रियः परिरक्षणे निहननैरिति क्वचित् ।
वचनं ब्रवीमि यदि निश्चितं तदा पतितो भवामि नरकाश्रयाश्रयी ॥४२॥

मैं दुष्टोंद्वारा अपमानित स्त्रीकी रक्षा हिंसाद्वारा करनेमें असमर्थ हूँ, ऐसा यदि मैं कहूँ तो अवश्य ही मैं नरकगामी बनूँ ॥ ४२ ॥

तदहिंसकोपि सहितोन्यसाधनैः प्रवया अपीह समवेतवेपथुः ।
परिहाय मृत्युभयमाशु संव्रजेदधिरक्षणाय नसहाययोषितः ॥४३॥

अतः अहिंसक होता हुआ भी, वृद्ध होकर भी, शरीरमें कम्पन होता हो तो भी, मृत्युके भयको छोड़कर असहाय स्त्रीकी रक्षाकेलिये शीघ्र ही वह दौड़ जावेगा ॥ ४३ ॥

नहि भारतीय पुरुषो निरीक्षितुं क्षम एव योषिदपमानसंकटम् ।
समयात्ततोस्य भुवि शौर्यसत्कथा प्रचरिष्यतीति भयदा दुरात्मनाम्॥४४॥

भारतीय पुरुष स्त्रीके अपमान-संकटकी उपेक्षा नहीं कर सकता । उसी समयसे उसकी वीरताकी पवित्र कथा पृथिवीके ऊपर फैल जायगी और उससे दुष्टोंको भय लगने लग जायगा ॥ ४४ ॥

यदि कस्यचिद्भवति राजसंनिधौ परमप्रभाव इह सोपि तत्कृतेः ।
प्रतिवारणाय भविता क्षमः कथंचिदपीतिमे मनसि जायते मनाक् ॥४५॥

यदि किसीका राजाके समीप बहुत बड़ा प्रभाव हो तो वह भी उस पापकर्मको रोकने के लिये किसी प्रकार समर्थ हो सकता है, यह बात भी मेरे मनमें थोड़ी सी आती है ॥ ४५ ॥

एतस्मिन्समये परं प्रभुबलं सत्यं बलं मन्यतां,
सर्वं चान्यदनर्थकं बलमिहापत्तौ महत्यां ननु।
यश्च स्वात्मबलं तथा प्रभुबलं स्वीकृत्य संजीवति,
श्रेयः सर्वमुपाश्नुते स नितरां सीदत्यथानीश्वरः ॥४६॥

इस समयमें परमेश्वरके बलको ही सच्चा बल मानना चाहिये। ऐसी आपत्तिमें अन्य बल सब निरर्थक हैं। जो मनुष्य आत्मबल और प्रभु बल दोनोंको लेकर जीता है वही सर्वकल्याणको पाता है। ईश्वरका त्याग करनेवाला दुःखी होता है ॥ ४६ ॥

यः स्वीयंबलमूर्जयत्यथ वशीकर्तुं परान्सर्वथा,
नैष क्वाप्यसहायकोपि लभते वीर्यं परं प्राभवम्।
श्रद्धारत्नविभूषितः प्रभुजनो यः पारमेशे बले,
स्वीयं तत्प्रजुहोति रामकृपया जय्यो भवेत्सर्वदा ॥४७॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
द्वादशः सर्गः

जो मनुष्य दूसरोंको वशमें करनेकेलिये अपने बलको बढ़ाता है वह असहाय होनेपर भी कभी परमेश्वरके बलको नहीं प्राप्त कर सकता। परन्तु जो श्रद्धालु हरिजन अपने बलको भगवान्के बलमें होम कर देते हैं वह भगवत्कृपासे सदा अजय्य (न जीतने योग्य) होते हैं ॥ ४७ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराज
प्रणीते स्वोपज्ञभारतराष्ट्रभाषाटीकायां पारिजातापहारे
द्वादशः सर्गः

# त्रयोदशः सर्गः

युग्मश्रुतिग्रहब्रह्मसंमिते यैशवेऽब्दके ।
चतुर्दश्यां जुलाय्यास्ते पूजार्हा देशनायकाः ॥ १ ॥
वर्धाख्ये नगरे रम्ये श्रीमत्या राष्ट्रसंसदः ।
कार्यवाहकसमितेरधिवेशमतन्वत ॥ २ ॥

ता० १४–७–१९४२ ई० को पूज्य देशनायकने = देशनेताओंने वर्धामें राष्ट्रियमहासभाकी कार्यकारिणी समितिका अधिवेशन किया ॥१॥२॥

प्रस्तावश्चैक एषोऽयं समित्या स्वीकृतोऽभवत् ।
ऐकमत्येन सभ्यानां कार्मचन्द्रेः प्रयत्नतः ॥ ३ ॥

श्री महात्माजीके प्रयत्नसे कार्यकारिणी समितिने सर्वसम्मतिसे यह एक प्रस्ताव स्वीकृत किया ॥ ३ ॥

प्रत्यहं भारतेऽनिष्टं कृत्यं तत्त्वं च जायते ।
भारतीयैरहोरात्रमपमानोऽनुभूयते ॥ ४ ॥

"भारतवर्षमें दिन प्रतिदिन अनिष्ट कार्य हो रहे हैं तथा भारतीय रातदिन अपमान-सहन कर रहे हैं ॥ ४ ॥

अतः परं भवेदन्तः शासनस्य सितत्वचाम् ।
इति राष्ट्रसदःसभ्यविचारः प्रौढतां गतः ॥ ५ ॥

"अतः अबसे अंग्रेजी राज्यका यहाँसे अन्त होना चाहिये", सदस्योंका यह विचार पुष्ट हुआ ॥ ५ ॥

शासनं परदेशानामत्यनिष्टं स्वरूपतः ।
प्रजाक्षयकरं चापि यद्यपि स्यात्सुशोभनम् ॥ ६ ॥

"परदेशियोंका शासन बहुत अच्छा हो तो भी वह स्वरूपसे अति खराब होता है तथा प्रजाका विनाशक होता है ॥ ६ ॥

येन केनाप्युपायेन तस्मादङ्ग्रेजशासनम् ।
अपसारयितव्यं स्याद्भारतीयभुवोऽधुना ॥ ७ ॥

"जिस किसी प्रकारसे अब अंग्रेजी राज्य को इस भूमिसे हटाना ही चाहिये ॥ ७ ॥

पारतन्त्र्यं गतोऽस्माकं देशः स्वस्याद्य रक्षणम् ।
संविधातुं न शक्नोति मानरक्षणपूर्वकम् ॥ ८ ॥

"परतन्त्र बना हुआ यह हमारा देश आज मानपूर्वक अपनी रक्षा भी नहीं कर सकता ॥ ८ ॥

वर्तमानं महायुद्धं जनसंहृतिसाधकम् ।
वारयितुं न शक्नोति पराधीनं हि भारतम् ॥ ९ ॥

"जनसंहार करनेवाले इस वर्तमान युद्धको पराधीन भारत रोक नहीं सकता है ॥ ९ ॥

अनेन हेतुना चापि भारतं सितचर्मणाम् ।
हस्तादाच्छिद्य कर्तव्यं स्वतन्त्रं सर्वथाऽधुना ॥ १० ॥

"इस लिये अंग्रेजोंके हाथसे छीनकर भारतको अब सर्वथा स्वतन्त्र करना चाहिये ॥ १० ॥

नाज़ीफ़ासीचमूवादानन्तयितुं समूलतः ।
स्वातन्त्र्यं भारतस्याद्य सर्वथाऽपेक्ष्यते शुभम् ॥ ११ ॥

"नाजीवाद, फासीवाद, सेनावाद आदिवादोंको समूल नष्ट करनेके-लिये भारतकी स्वतन्त्रता सर्वथा अपेक्षित है ॥ ११ ॥

पारतन्त्र्यमहासर्पमहाविषविमूर्च्छिता ।
भारती भूमिराचामेत्स्वातन्त्र्यामृतमद्वयम् ॥ १२ ॥

"परतन्त्रतारूप महासर्पके महाविषसे मूर्छित हुआ यह भारत स्वतन्त्रतारूप अद्वितीय अमृतका पान करे ॥ १२ ॥

अन्यदेशप्रजाः काश्चित्प्रजाः अन्यास्सुनिर्बलाः ।
धर्षयन्तीरपक्षेप्तृ स्वतन्त्रं भारतं भवेत् ॥ १३ ॥

"अन्यदेशकी निर्बल प्रजाओंको हैरान करनेवाली प्रजाको स्वतन्त्र भारत ही दूर कर सकता है ॥ १३ ॥

आरम्भाद्विश्वयुद्धस्य श्वेताङ्गप्रतिरोधिनी ।
राष्ट्रपरिषदा नीतिः परित्यक्ता विचारतः ॥ १४ ॥

"विश्वयुद्धके आरम्भसे ही अंगरेजोंके कार्यमें रुकावट डालनेवाली नीतिका विचारपूर्वक महासभाने त्याग किया है ॥ १४ ॥

सत्याग्रहमहायुद्धं निष्प्रभावं भविष्यति ।
इति ज्ञात्वापि सा नीतिः सभया स्वीकृताभवत् ॥ १५ ॥

"सत्याग्रहरूप महायुद्ध उस नीतिको स्वीकार किये बिना प्रभावशून्य हो जायगा, अत एव भी उस नीतिका स्वीकार किया गया है ॥ १५ ॥

एवं कृत्वा सभा साऽशामसेवत सितत्वचः ।
सभासौजन्यसम्मानं विधास्यन्तीति कर्हिचित् ॥ १६ ॥

"ऐसा करके महासभाने यह आशा रखी थी कि अंगरेज सभाके सौजन्यका मान करेंगे ॥ १६ ॥

प्रजाप्रतिनिधीनां च स्वायत्तं राजशासनम् ।
कुर्युः श्वेतत्वचः सद्य इत्यासीत्तत्समीहितम् ॥ १७ ॥

अंगरेज राजशासनको प्रजाके प्रतिनिधियोंके अधीन करेंगे ऐसी महासभाकी इच्छा थी ॥ १७ ॥

तथा कृते च सर्वत्र संमुमूर्षुं स्वतन्त्रताम् ।
जीवयेद्भारतं नूनमित्यासीत्तत्समीहितम् ॥ १८ ॥

ऐसा किये जानेपर सर्वत्र मरती हुई स्वतन्त्रताको भारतवर्ष अवश्य जीवनप्रदान करेगा, ऐसी महासभाकी इच्छा थी ॥ १८ ॥

आधिपत्यं दृढीकर्तुं ब्रिटेनः स्वस्य भारते ।
करिष्यते किमप्यत्र नेत्यासीत्तत्समीहितम् ॥ १९ ॥

ब्रिटेन अपने आधिपत्यको भारतमें दृढ करनेकेलिये कुछ भी नहीं करेंगे, ऐसी महासभाकी इच्छा थी ॥ १९ ॥

विनष्टा निखिला आशाः क्रिप्सस्याभ्यर्थना इह ।
निष्फलाश्च समायाता झञ्झावातसमन्विताः ॥ २० ॥

सब आशाएँ नष्ट हो गयीं। झंझावात सहित क्रिप्सकी निरर्थक योजनाएँ यहाँ आयीं ॥ २० ॥

सिताङ्गानां मनोवृत्तिर्भारतं प्रति पूर्ववत् ।
अहासीत्क्रूरतां नेति योजनास्ता व्यबोधयन् ॥ २१ ॥

उन योजनाओंने इतना तो स्पष्ट कर ही दिया कि अंगरेजोंकी मनोवृत्तिने भारतके प्रति रही हुई क्रूरताका अभी भी त्याग नहीं किया है ॥ २१ ॥

ब्रिटिशानामिहस्थोऽयमधिकारः कथञ्चन ।
अल्पीभवेदितीहाशा व्यर्थास्तीत्यप्यबुध्यत ॥ २२ ॥

यह भी ज्ञात हुआ कि अंगरेजों का यहाँपर अधिकार कम होगा यह आशा व्यर्थ ही है ॥ २२ ॥

महायत्ने कृतेऽप्येता क्रिप्सीया योजना नहि ।
भारतस्य हितैः सार्धमानुकूल्यमुपासत ॥ २३ ॥

बहुत प्रयत्न करनेपर भी क्रिप्सकी योजनाएँ भारतके हितके साथ अनुकूल नहीं हुई ॥ २३ ॥

एतस्मादेव वैफल्यादिङ्ग्लैण्डविरोधिनी ।
भारतीयेषु वेगेन पुष्कला वृत्तिरुद्गता ॥ २४ ॥

इसी निष्फलतासे भारतीयोंमें ब्रिटिश प्रजाके विरुद्ध भाव जागरित हो गये हैं ॥ २४ ॥

तेनाद्य भारतीयानां लब्धजन्मा मनोभुवि।
जापानविजये तोषवृत्तिरत्रानुभूयते ॥ २५ ॥

इसीलिये जापानके विजयसे भारतीयोंके हृदयमें संतोषका भाव प्रकट हुआ देखा जाता है ॥ २५ ॥

राष्ट्रसंसद एषाऽद्य समितिः कार्यवाहिका।
लोकवृत्तिपरावृत्तिमेतामामन्यतेऽहिताम् ॥ २६ ॥

महासभाकी यह कार्यकारिणी समिति लोगोंकी इस बदली हुई मनोदशाको अहितकारक मानती है ॥ २६ ॥

प्रतिरोधो न चेदस्या भवेज्जापानसंक्रमः।
भारतीयैरगत्यैव स्वीकृतः स भविष्यति ॥ २७ ॥

यदि इस मनोदशाको रोका न गया तो लाचार होकर भारतवासी जापानके आगमनको स्वीकार कर लेंगे ॥ २७ ॥

आक्रमणानि सर्वाणि प्रतिरोध्यानि सर्वथा।
अन्यथा भारते तिष्ठेत्पारतन्त्र्यं निरन्तरम् ॥ २८ ॥

सभी आक्रमणोंको सबप्रकारसे अवश्य रोकना ही चाहिये नहीं तो भारतवर्ष सदा ही परतन्त्र रह जायगा ॥ २८ ॥

सिङ्गापुरे मलायायां ब्रह्मदेशेऽभवच्च यत्।
भविष्यद्धि तदेवात्र राष्ट्रसंसन्न वाञ्छति ॥ २९ ॥

सिंगापुर, मलाया और ब्रह्मदेशमें जो कुछ हुआ है वह यहाँ भी हो, ऐसा महासभा कभी नहीं चाहती है ॥ २९ ॥

भारताक्रामकं जापमन्यं वा पारदेशिकम्।
प्रतिरोद्धुं विधेयाद्य शक्तिः कापि निरङ्कुशा ॥ ३० ॥

भारतके ऊपर आक्रमण करनेवाले जापान अथवा अन्य किसी भी परदेशीको रोकनेकेलिये आज किसी भी निरङ्कुश शक्तिका संग्रह तो करना ही चाहिये ॥ ३० ॥

ता वृत्तीर्भारतीयानामिङ्गलैण्डविरोधिनीः ।
तस्यानुकूलतां प्राप्ता राष्ट्रसंसद्दिदृक्षते ॥ ३१ ॥

राष्ट्रिय महासभा यह देखना चाहती है कि भारतीयोंको जो इंगलैण्डके विरुद्ध भाव पैदा हुए हैं वह उसके अनुकूल हो जावें ॥ ३१ ॥

सर्वेषामेव राष्ट्राणां स्वातन्त्र्यसमवाप्तये ।
सोढुं दुःखानि तैः सार्धं भारतं चापि वाञ्छति ॥३२॥

सभी राष्ट्रोंकी स्वतन्त्रता प्राप्तिके लिये भारत भी उनके साथ दुःख सहन करना चाहता है ॥ ३२ ॥

स्वातन्त्र्यभास्करांशूनां दर्शनेनैव भारतम् ।
दासतामन्यदेशानां सर्वथाऽपनिनीषति ॥ ३३ ॥

भारतमें स्वन्त्रताके सूर्यका उदय होते ही यह भारत अन्यदेशोंकी दासताको दूर करना चाहता है ॥ ३३ ॥

राष्ट्रसंसद आयुक्तैः सभ्यैः सर्वबलैरपि ।
यत्ने कृतेऽप्यसिद्धैव वर्गभेदविनिस्सृतिः ॥ ३४ ॥

राष्ट्रीयमहासभा द्वारा नियुक्त सभ्योंके बहुत प्रयत्न करनेपर भी वर्गभेद अभी तक निकल नहीं सका है ॥ ३४ ॥

यावद्विदेशि राज्यं स्यादत्र तावन्न तत्सृतिः ।
विभज्यैव प्रजा राज्यं कर्तुमस्यास्ति पद्धतिः ॥ ३५ ॥

जबतक यह विदेशी राज्य यहाँ रहेगा तबतक वर्गभेद नहीं निकल सकता । क्योंकि प्रजाओंको विभक्त करके ही इनकी राज्य करनेकी पद्धति है ॥ ३५ ॥

आदितो रीतिरेतेषां परदेशभुवामसौ ।
प्रावर्तिष्ट ततस्तेषामपसारणमीहितम् ॥ ३६ ॥

इन परदेशियोंकी यह नीति आरम्भसे ही यही प्रवृत्त हुई है । अतः उसका निवारण इष्ट है ॥ ३६ ॥

अत्यनिष्टे विदेशानां शासने भारताद्गते।
इहस्था अखिलाः पक्षाः साधयिष्यन्त्यभिन्नताम् ॥ ३७ ॥

यह महा अनिष्ट राज्य जब भारतसे चला जायगा तब भारतमें जितने पक्ष हैं वह सब एक बन जायँगे ॥ ३७ ॥

एकतां प्रतिपन्नैस्तैर्भारतस्य हितावहाः।
सर्वे प्रश्ना अनायासात्करिष्यन्ते सुखान्तकाः ॥ ३८ ॥

एक बनकर वह सब पक्ष भारतके हितकारक जितने भी प्रश्न हैं उनका अनायास ही सुखद अन्त आवेगा ॥ ३८ ॥

राजकीयाः प्रवर्तन्ते पक्षा ये भारतेऽधुना।
अङ्गरेजान्प्रियान्कर्तुं गमिष्यन्त्यस्तमेव ते ॥ ३९ ॥

अंग्रेजोंको प्रिय बनाये रखनेकेलिए भारतमें जितने भी पक्ष आज प्रवृत्त हैं वह सब अस्त हो जायँगे ॥ ३९ ॥

भारतस्येतिहासेऽयं प्रथमः प्रत्ययो भवेत्।
देशाधिकारः श्रमिणां कृषकाणां भवेदिति ॥ ४० ॥

भारतके इतिहासमें यह प्रथम ही विश्वास होगा कि देशका अधिकार मजदूरों और किसानोंके हाथमें जायगा ॥ ४० ॥

यतो भूपैश्च भूखण्डपालैर्भूस्वामिभिस्तथा।
सम्पत्तिशालिभिः सर्वैर्धनं तेभ्योऽधिगम्यते ॥ ४१ ॥

क्योंकि राजा, जमीनदार और दूसरे थोडी बहुत जमीन के मालिक मजदूरों और किसानोंसे ही धन प्राप्त करते हैं ॥ ४१ ॥

राज्येऽपसारिते दूरमस्मिन्भारतवासिभिः।
स्त्रीपुंसैरचिरस्थायि शासनं संविधास्यते ॥ ४२ ॥

इस राज्यको दूर भगा देनेके बाद भारतीय स्त्री और पुरुष अल्पकालीन शासनका विधान करेंगे ॥ ४२ ॥

सर्वमान्यां ततः पश्चाद्विधातुं पद्धतिं पराम् ।
लोकप्रतिनिधिसभा तदानीं संगता भवेत् ॥ ४३ ॥

उसके पश्चात् दूसरी सर्वमान्य पद्धतिका स्वीकार करनेकेलिये लोकप्रतिनिधि सभा इकट्ठी होगी ॥ ४३ ॥

स्वतन्त्रभारतस्याथ ब्रिटेनस्याधिकारिणः ।
जनाः संगत्य सम्बन्धं विनिर्णेष्यन्ति भाविनम् ॥ ४४ ॥

स्वतन्त्र भारतके और ब्रिटेनके अधिकारी इकट्ठे होकर भविष्यके सम्बन्ध का निर्णय करेंगे ॥ ४४ ॥

भारतावनिसंजातमाक्रमणं कुतस्तराम् ।
प्रतिरोद्धव्यमित्येतदुभयैश्चिन्तयिष्यते ॥ ४५ ॥

भारतके ऊपर आक्रमणको किस प्रकारसे रोका जाय, इसका निर्णय दोनों ही मिलकर करेंगे ॥ ४५ ॥

सुसंबद्धप्रजानां सत्सङ्कल्पेन बलेन च ।
भारतेन निरोधव्यमाक्रमणं गुरु द्विषाम् ॥ ४६ ॥

अच्छी तरहसे परस्पर संबद्ध प्रजाके बल और शुभसंकल्पसे शत्रुओंके बड़े बड़े आक्रमणोंको भी भारत रोक सकेगा ॥ ४६ ॥

भारतादविलम्बेन ब्रिटिशस्यापसारणे ।
विद्यते कोपि नो हेतुरस्माकं नत्तिरस्कृतौ ॥ ४७ ॥

भारतसे शीघ्र ही अंग्रेजोंको निकालनेमें या उनके तिरस्कारमें दूसरा कुछ भी कारण नहीं है ॥ ४७ ॥

युद्धसंचालने मित्रभूपानां सङ्कटागतिम् ।
कामयते न कन्नासौ राष्ट्रसंसत्कदाचन ॥ ४८ ॥

युद्धसंचालनमें मित्रराज्योंको कोई संकट पड़े, यह बात यह महासभा कभी नहीं चाहती है ॥ ४८ ॥

आक्रान्तिं वैरिणां देशे भारते न कथंचन ।
सर्वकल्याणकाङ्क्षित्री महासंसत्समीहते ॥ ४९ ॥

सबके कल्याणकी इच्छा रखनेवाली यह महासभा भारतपर शत्रुओंके आक्रमणको जरा भी नहीं चाहती है ॥ ४९ ॥

जापानो जर्मनो वापि चीनदेशं निपीडयेत् ।
इत्यप्यल्पं न वष्टयेषा सर्वश्रेयःप्रवर्तिका ॥ ५० ॥

सबका कल्याण चाहनेवाली यह महासभा यह भी नहीं चाहती है कि जापान अथवा जर्मन चीन देशको हानि पहुँचावें ॥ ५० ॥

ततः स्वेषां हितार्थाय द्विषत्परिभवाय च ।
भारते सैन्यमारक्ष्यं मित्रभूपैर्निजेच्छया ॥ ५१ ॥

अतः अपने लाभकेलिये और शत्रुओंके पराजयकेलिये मित्रराज्य भले अपनी इच्छाके अनुसार यहाँ सेना रखें ॥ ५१ ॥

भारते वस्तुकामैस्तैरङ्ग्रेजैः स्थीयतामिह ।
भारतीयप्रजाभूतैस्तत्र नास्ति विरोधनम् ॥ ५२ ॥

जो अंग्रेज भारतमें रहना चाहते हों वह भारतकी प्रजा बनकर भले ही यहाँ रहें इसमें कोई विरोध नहीं है ॥ ५२ ॥

वर्तमाने च सद्भावे प्रयाणं स्यादितो यदि ।
तेषां ततोऽस्थिरं चात्र शासनं स्याद्व्यवस्थितम् ॥ ५३ ॥

सद्भावके रहते हुए यदि वह यहाँसे चले जायँगे तो यहाँका अस्थिर-अव्यवस्थित शासन व्यवस्थित हो जायगा ॥ ५३ ॥

शासनं सकलैरेतन्मित्रभूपैः समेत्य च ।
चीनरक्षणकार्येषु दत्तचित्तं भविष्यति ॥ ५४ ॥

यह भारतसर्कार मित्रराज्योंके साथ मिलकर चीनकी रक्षामें सावधान बनेगी ॥ ५४ ॥

महासभा विजानाति परिणामं विपत्करम्।
अभ्यर्थनाया एतस्याः समयस्तु महाबलः॥ ५५॥

इस माँगका परिणाम कितना दुःखदायी होगा, इसे महासभा जानती है। परन्तु समय बलवान् है॥ ५५॥

स्वातन्त्र्यप्राप्तिमार्गेषु प्रसूनानि भवन्ति नो।
कण्टकैस्तीव्रशूकाग्रैर्व्याप्तुताः सन्ति ते पुनः॥ ५६॥

स्वतन्त्रता प्राप्तिके मार्गमें फूल तो नहीं ही होते हैं। हाँ, नोकदार काँटे तो बिछे हुए होते ही हैं॥ ५६॥

अत्यन्तक्लेशपूर्णेऽस्मिन्काले कल्याणकाङ्क्षया।
भारतस्येतरेषां च देशानां ते जिघृक्षिताः॥ ५७॥

इस दुःखपूर्ण समयमें केवल भारतके तथा अन्य देशोंके मनुष्योंके कल्याणकी इच्छासे ही वह मार्ग आज अभिप्रेत है॥ ५७॥

राष्ट्रध्येयस्य लाभाय व्याकुलापि महासभा।
सद्यः कार्यसमारम्भं न वाञ्छति विचारदृक्॥ ५८॥

राष्ट्रके ध्येयकी प्राप्तिके लिये आतुर बनी हुई भी महासभा विचारपूर्वक तत्काल कार्यारम्भ नहीं करना चाहती है॥ ५८॥

मित्रीभूतमहीपानां मनोरथनिषूदिनीम्।
पदवीं न भजेतैषा देशकालविचारकृत्॥ ५९॥

देश और कालका विचार रखनेवाली यह महासभा ऐसे मार्गका ग्रहण नहीं करेगी जो मित्रराज्योंके अभिलाषका नाश करे॥ ५९॥

भारतीयहितस्यार्थे ब्रिटेनस्य हिताय च।
न्याय्यानुमोदिताऽकारि सभयाभ्यर्थनेदृशी॥ ६०॥

भारत और ब्रिटेन दोनोंके हितकेलिये ही महासभाने न्यायपूर्ण माँग पेशकी है॥ ६०॥

प्रतिबोधितमप्येतां ब्रिटेनंचेन्न मंस्यते।
महासभाऽऽगतं पश्येद्भयं भीतिप्रदं महत्॥ ६१॥

यदि ब्रिटेन इस प्रार्थनाका स्वीकार नहीं करेगा तो महासभा इस उपस्थित भयको महान् भयदायक मानेगी॥ ६१॥

उत्तरोत्तरमेषापि स्थितिः कालुष्यमेष्यति।
शत्रूणां प्रतिरोधस्य शक्तिरस्य विनङ्क्ष्यति॥ ६२॥

आगे आगे यह स्थिति भी खराब होती जायगी। तब तो शत्रुओंका सामना करनेकी इसकी शक्ति नष्ट हो जायगी॥ ६२॥

राजकीयाधिकाराणां स्वातन्त्र्यस्य च सिद्धये।
अहिंसिकां महाशक्तिं प्रयोक्ष्यति महासभा॥ ६३॥

राजकीय अधिकारों तथा स्वतन्त्रताकी सिद्धिकेलिये महासभा अपनी अहिंसक महाशक्ति प्रयोग करेगी॥ ६३॥

एतादृशं महायुद्धं नायकत्वं विना नहि।
मान्यानां माननीयस्य श्रीगांधेः सेद्धुमर्हति॥ ६४॥

इस प्रकारका महायुद्ध माननीय श्रीमहात्मागांधीके नेतृत्वके बिना सिद्ध नहीं हो सकता है॥ ६४॥

निर्णेतुं विषयान्कांश्चित्समितिः कार्यवाहिणी।
महासमितिसभ्यानां पुरतः स्थापयिष्यति॥ ६५॥

कितने ही विषयोंको, निर्णय करनेकेलिये, कार्यकारिणी समिति महासमितिके सभ्यों के सामने रखेगी॥ ६५॥

मुम्बापुर्यां भवेत्तस्यास्तस्मादेवोपवेशनम्।
तत्रैव सर्वकार्याणां निर्णयः संभविष्यति॥ ६६॥

बम्बईमें ही उसका अधिवेशन हो। वहाँ ही सब कार्योंका निर्णय होगा॥ ६६॥

युग्मवेदग्रहब्रह्मसंमिते यैशवेऽब्दके ।
अगस्तस्य च सप्तम्यामिदं सम्मेलनं भवेत् ॥ ६७ ॥

ता० ७-८-१९४२ ई० के दिन यह संमेलन किया जाय ॥ ६७ ॥

भवनादि परित्यज्य प्रजा गन्तुं स्थलान्तरम् ।
अनुशियाद्यदि क्वापि शासनं युद्धहेतुना ॥ ६८ ॥
सौकर्याय प्रजानां च शासनस्यापि शंकृते ।
सङ्केताः सम्प्रदीयन्ते सभया इह काश्चन ॥ ६९ ॥

यदि युद्धके कारण सर्कार प्रजाको अपने घरबार छोड़कर कहीं अन्यत्र जानेकेलिये आज्ञा दे तो प्रजाकी अनुकूलताकेलिये और सर्कारके कल्याणकेलिये सभा कुछ सूचनाएँ देती है ॥ ६८ ॥ ६९ ॥

पूर्वं विज्ञापनादानं विना प्रतिफलं विना ।
ग्रामा गृहाणि भूमिश्च गृह्यन्ते राजकर्मिभिः ॥ ७० ॥

पहलेसे सूचना दिये बिना और बिना किसी बदलेके राजकर्मचारी गाँव, घर और जमीन लेते हैं ॥ ७० ॥

नावः पादरथांस्तैलरथांश्चापि सहस्रशः ।
राजकर्मकरा लोका लोकानां गृह्णतेऽन्वहम् ॥ ७१ ॥

सर्कारी कर्मचारी लोगोंके हजारों नाव, मोटर, साइकिल आदि साधनोंको रोज लेते जाते हैं ॥ ७१ ॥

परिदेवितपत्राणि येषामेतादृशान्यथ ।
आगतानि कृते तेषामुपदेश इति स्मृतः ॥ ७२ ॥

जिनके ऐसे दुःखपूर्ण पत्र आये हैं उनकेलिये यह उपदेश किया जा रहा है ॥ ७२ ॥

एषा समितिराशास्ते शासनं क्रन्दनं नृणाम् ।
अपनेष्यति तत्कालं राजधर्मं विचारयत् ॥ ७३ ॥

यह सभा आशा रखती है कि सर्कार राजधर्मका विचार करके प्रजाके हाहाकारको दूर करेगी ॥ ७३ ॥

देशकालानुसारिण्यः शंसनाः शासनेन याः ।
प्रजाभ्यः सम्प्रदत्ताः स्युः पालनीया विवेकतः ॥ ७४ ॥

सर्कार देश और कालका अनुसरण करनेवाली जो भी सूचनाएँ प्रजाको दे उसका विवेकपूर्ण पालन करना चाहिये ॥ ७४ ॥

काञ्चिदाज्ञामनादर्तुमावश्यकमथो भवेत् ।
यावच्छक्यं प्रजाभिः स्यान्मृग्यः पन्थाः शमस्य हि ॥ ७५ ॥

यदि किसी आज्ञाका अनादर करना आवश्यक हो तो जहाँ तक हो सके शान्तिका ही मार्ग ढूँढा जावे ॥ ७५ ॥

आज्ञा स्वायत्तवस्तूनि धरागेहादिकानि चेत् ।
कर्तुं रिक्तानि दत्ता स्यात्सम्प्राथ्यं क्षतिपूरकम् ॥ ७६ ॥

यदि अपने अधिकारकी वस्तु-जमीन-घर आदि खाली करनेकी आज्ञा दी जाय तो उसके बदलेमें कुछ क्षतिपूरक माँगना चाहिये ॥ ७६ ॥

भूमे रूढान्नपाकानां गणयित्वैव मूल्यकम् ।
क्षतिपूरकरूपेण निश्चेया सम्प्रदेयता ॥ ७७ ॥

जमीनमें जो अन्न पक गये हों उनका मूल्य गिनकर ही क्षतिपूरकरूपमें दिया जाना चाहिये ॥ ७७ ॥

स्वीयां भूमिं परित्यज्य गमनेऽन्यत्र यो व्ययः ।
भूमिमूल्येन सत्रैव सोऽपि देयोऽस्तु शासनैः ॥ ७८ ॥

अपनी भूमिको छोड़कर अन्यत्र जानेमें जो व्यय होगा वह भी भूमिके मूल्यके साथ ही सर्कारको देना चाहिये ॥ ७८ ॥

गृहीतमेदिनीकानां कृषीणां कुत्रचिद्यदि ।
गत्वा स्थितौ धरावाप्तौ यो व्ययो देय एव सः ॥ ७९ ॥

जिन किसानोंकी जमीन ले ली गयी हो उनको कहीं जाकर रहने और जमीन लेनेमें जो व्यय हो वह भी सर्कारसे मिलना ही चाहिये ॥ ७९ ॥

कृषकाणां गृहीत्वोर्वीमन्यामुर्वी प्रदापयेत् ।
यद्यशक्यं भवेदेतद्देयं तन्मूल्यमेव तत् ॥ ८० ॥

किसानोंकी जमीन लेकर उन्हें दूसरी जमीन दिलानी चाहिये। यदि ऐसा न हो सके तो उसका मूल्य देना ही चाहिये ॥ ८० ॥

द्रुमाणां कुल्लिकानां च कूपानां ग्रहणं यदि।
नाशोऽथवा कृतस्तेषामपि मूल्यं प्रदीयताम् ॥ ८१ ॥

झाड़, नहर, कूआ आदि ले लिये गये हों अथवा उनका नाश कर दिया गया हो तो उसका भी मूल्य उन्हें मिलना ही चाहिये ॥ ८१ ॥

कृषिभूमिर्गृहीता स्यादल्पकालकृते यदि ।
तस्यां पाकस्य सम्पूर्णं देयं मूल्यं विमानतः ॥ ८२ ॥

यदि उनके खेत थोड़े समयकेलिये ले लिये गये हों तो उसमें जितना अन्न पकता हो, उसका सम्पूर्ण मूल्य गिनकर उन्हें देना चाहिये ॥ ८२ ॥

सर्वेषां क्षेत्रपाकानां क्षतिपूरकरूपतः ।
पञ्चदश प्रतिशतं देयं प्रतिफलं तदा ॥ ८३ ॥

खेतमें जितने अन्न पके हों उनके क्षति पूरकके रूपमें १५ सैकड़ा बदला तो अवश्य देना चाहिय ॥ ८३ ॥

यदा कालान्तरे भूमिः साऽर्पिता स्वामिने भवेत्।
पूर्वस्थितिं समानेतुं योव्ययः सोपि दीयताम् ॥ ८४ ॥

यदि कुछ दिनोंके बाद वह भूमि भूमिस्वामीको लौटा दी जाय तो उसके बराबर करनेमें–उसके सुधारनेमें जो व्यय हो उसे भी सर्कार दे ॥८४॥

कस्या अपि गृहीताया धरायाः खण्डकोऽवरः ।
अवशिष्टो निरर्थश्चेत्सोऽपि मूल्येन गृह्यताम् ॥ ८५ ॥

किसीका खेत या जमीन ली जाती हो, उसका कोई टुकड़ा बच जाता हो और वह मालिकके काममें नहीं आ सकता हो तो सर्कारको चाहिये कि उस टुकड़ेको भी मूल्य देकर ले ले ॥ ८५ ॥

सदनानां गृहीतानां मूल्यं यत्स्यात्प्रमाणितम् ।
सम्पूर्णं सम्प्रदातव्यं शासनेन तदैव तत् ॥ ८६ ॥

जो घर ले लिये गये हों उनका जो मूल्य प्रमाणित हो वह सम्पूर्ण मूल्य सर्कारको देना चाहिये ॥ ८६ ॥

मेदिनीस्वामिनः सर्वा गृहीता मेदिनी भवेत् ।
अवशिष्टं गृहं चापि ग्राह्यं मूल्यैस्तदिच्छया ॥ ८७ ॥

जमीनके स्वामीकी यदि सब जमीन ले ली गयी हो और उसकी इच्छा हो तो मूल्य देकर बाकी रहा हुआ उसका घर भी सर्कार ले ले ॥८७॥

गृहाध्यक्षस्य कस्यापि गृहं चेदुपगृह्यते ।
राजकीयोपयोगाय दातव्यं तस्य भाटकम् ॥ ८८ ॥

यदि किसी गृहस्वामीका घर राजकीय उपयोगकेलिये ले लिया जाता हो तो उसका भाड़ा उसे देना चाहिये ॥ ८८ ॥

यदि गेहं विना कष्टं भवेत्तस्य निकेतिनः ।
तदर्थमपि दातव्यं तस्मै प्रतिफलं तदा ॥ ८९ ॥

यदि घरके बिना गृहस्वामीको कष्ट होता हो तो उसकेलिये भी उसे सर्कारको बदला देना चाहिये ॥ ८९ ॥

कृतरिक्तनिशान्तस्य यत्र कुत्रापि गच्छतः ।
निवासाय भवन्द्रव्यव्ययस्तस्मै प्रदीयताम् ॥ ९० ॥

घर खाली करके रहनेकेलिये अन्यत्र जानेवालेका जो खर्च पड़े वह भी उसे मिलना चाहिये ॥ ९० ॥

यावन्न नूतने स्थाने लभते स स्वजीविकाम् ।
तावत्तस्मै प्रदातव्यं धनं भरणहेतवे ॥ ९१ ॥

नये स्थानमें जबतक उसे जीविका न प्राप्त हो तबतक उसके पालनकेलिये धन सर्कारसे मिलना चाहिये ॥ ९१ ॥

सर्वेष्वेव प्रसङ्गेषु तानि द्रव्याणि तत्क्षणम् ।
तत्रत्यदण्डपालेन देयमेव न चान्यथा ॥ ९२ ॥

ऊपर बताये हुए सब प्रसङ्गोंपर वह सब धन जो गृहस्वामी अथवा भूमिस्वामीको मिलना चाहिये, वहाँके हाकिमको चाहिये कि तुरन्त दे दे ॥९२॥

देशान्तरप्रयातॄणां तथा शासनकर्मिणाम् ।
देयद्रव्यविवादः स्यान्निर्णेयो मध्यवर्तिभिः ॥ ९३ ॥

घर छोड़कर जानेवाले और सर्कारी कर्मचारियोंमें यदि धनके विषयमें विवाद उपस्थित हो तो उसका निर्णय मध्यस्थसे कराना होगा ॥ ९३ ॥

निर्णयेरन्न मध्यस्था यावत्तावत्तु तद्धनम् ।
निर्धारितं स्वयं तेभ्यो देयमेवाधिकारिभिः ॥ ९४ ॥

मध्यस्थ जबतक निर्णय न करे तबतक निर्धारित धनको अधिकारी लोग उन किसानों या गृहस्वामीको दे दें ॥ ९४ ॥

उपयोज्योऽगृहीत्वा नो पदार्थाध्यक्षसम्मतिम् ।
पदार्थः कोपि वा तत्र हस्तक्षेपो न जायताम् ॥ ९५ ॥

उन उन वस्तुओंके मालिककी सम्मति लिये बिना न तो किसी पदार्थका उपयोग करना चाहिये और न उसमें हस्तक्षेप करना चाहिये ॥ ९५ ॥

अभ्यर्थ्यन्ते च नावश्चेत्प्रार्थ्यं प्रतिफलं तदा ।
यावन्न निर्णयस्तस्य तावद्देया न ताः क्वचित् ॥ ९६ ॥

सर्कार यदि नाव माँगे तो उससे उसका बदला माँगना चाहिये । जब तक उसका निर्णय न हो नाव नहीं देनी चाहिये ॥ ९६ ॥

जलावृतप्रदेशेषु समुपेक्ष्यप्लवेषु च ।
वसद्भिर्न जनैर्देयास्ताः कथंचित्कदापि च ॥ ९७ ॥

जलसे घिरे हुए प्रदेशोंमें—जहाँ कि नावकी आवश्यकता रहती ही है—बसनेवाले लोग अपनी नाव सर्कारको कभी न दें ॥ ९७ ॥

**येषां च मैनिकानां स्यात्प्लवानां प्रार्थनं तदा ।**
**प्लवमूल्यं विचार्याशु तेभ्यो देयं यथार्थतः ॥ ९८ ॥**

जिन माछीमारोंकी नाव माँगी जाय उनके नावका मूल्य विचारकर यथार्थ मूल्य उन्हें दे देना चाहिये ॥ ९८ ॥

**प्लवहानौ भवेदेव तेषां वृत्तिक्षतिः पुनः ।**
**ततो देयस्तदर्थोऽर्थस्तेभ्यो न्याय्योऽत्र शासनैः ॥ ९९ ॥**

नावके चले जानेपर उस माछीमारकी जीविकाको धक्का अवश्य ही लगेगा । अतः सर्कारको चाहिये कि इसके बदलेमें भी उसे धन दे ॥९९॥

**राजकीयप्रयोगाय शकटाङ्घ्रिरथादयः ।**
**शिलातैलरथाद्याश्च न दीयन्ताममूल्यकाः ॥ १०० ॥**

सर्कारी कामकेलिये बैलगाड़ी, साइकिल, मोटर आदि बिना मूल्यके नहीं देना चाहिये ॥ १०० ॥

**युद्धेन हेतुना सद्यो लवणन्यूनतागमः ।**
**अभूदतः परं चापि स्यादेव तदनागमः ॥ १०१ ॥**

युद्धके कारण नमककी कमी हो गयी है । अभी भी नमक आ नहीं सकेगा ॥ १०१ ॥

**ततः समुद्रतीरेषु प्रदेशेषूपसागरम् ।**
**संचेतुं तच्च निर्मातुमाज्ञा भवितुमर्हति ॥ १०२ ॥**

अतः समुद्रके किनारे अथवा समुद्रके पासके प्रदेशोंमें नमक बनाने और नमक इकट्ठा करनेकी आज्ञा होनी चाहिये ॥ १०२ ॥

**स्थानात्स्थानान्तरं नेतुं लवणं स्यादवर्जितम् ।**
**पश्वर्थं वा मनुष्यार्थं निर्माणं तस्य नानयः ॥ १०३ ॥**

एक जगहसे दूसरी जगह नमकको ले जानेकी छूट होनी चाहिये ।

पशुओं और मनुष्योंकेलिये नमक बनाना कायदाके विरुद्ध न माना जाय ॥ १०३ ॥

आत्मरक्षणसंसिद्ध्यै संस्थानां जातजन्मनाम् ।
विनाशाय तिरस्कार्याः सर्वे राजांकुशाः सदा ॥ १०४ ॥

अपनी रक्षाकेलिये जो संस्थाएँ बनायी गयी हों उसको बन्द करनेकेलिये जितने सर्कारी अंकुश हों, सब हटा लिये जायँ ॥ १०४ ॥

रक्षायामात्मनो नित्यं प्रतिवेशिगणस्य च ।
सर्वस्यैवाधिकारोस्ति स्वतः सिद्धो विनिश्चितः ॥ १०५ ॥

अपनी और अपने पड़ोसियोंकी रक्षा करनेकेलिये सबको स्वतः सिद्ध अधिकार है ॥ १०५ ॥

स्वजनिवसुमहीजान्सर्वलोकान्विपन्नान्,
सितनृपतिजनौघैः सेव्यमानाननर्थान् ।
प्रतिदिनमिह वीक्ष्य व्याकुलीभूय संस-
न्निखिलजनशिवाय प्रास्तुत ख्यातकीर्तिः ॥ १०६ ॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
त्रयोदशः सर्गः

अपने मातृभूमिके लोगोंको दुःखित देखकर और अंग्रेजों द्वारा किये जानेवाले अनर्थोंको देखकर व्याकुल होकर महासभाने सबके कल्याणकेलिये यह प्रस्ताव स्वीकृत किये ॥ १०६ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
स्वोपज्ञभारतराष्ट्रभाषाटीकायां पारिजातापहारे
त्रयोदशः सर्गः

# चतुर्दशः सर्गः

फ्रेडेरिक् पकल् कश्चित्सचिवो दुष्टवृत्तिकः ।
क्रूरः क्रूरतरो हिन्दशासनस्य मृषाभिवाक् ॥ १ ॥

फ्रेडेरिक् पकल् नामक हिन्दशासनका एक अंगरेज मन्त्री था। वह बड़ा ही दुष्ट और लबार तथा अत्यन्त क्रूर था ॥ १ ॥

पक्षवेदग्रहब्रह्ममिते खिस्ताब्दके दलम् ।
जुलाईमासपञ्चम्यां देहलीनगरात्स च ॥ २ ॥
प्रान्तीयशासनायत्तसचिवेषु समन्ततः ।
अजमेरमेरवाडाप्रान्तस्य च नियोगिनि ॥ ३ ॥
तथा नियोगिनोश्चापि बलूचिस्तानकुर्गयोः ।
सर्वत्रैवं महागुप्तं प्रैषिषत्क्षीणजीवनः ॥ ४ ॥

उसने ता० ५–७–१९४२ को दिल्ली से प्रान्तीय सर्कारोंके मन्त्रियों के पास एवं अजमेर—मेरवाडा प्रान्त तथा बलूचिस्तान और कुर्गके कमिश्नरके पास एक अत्यन्त गुप्त पत्र भेजा ॥ २ ॥ ३ ॥ ४ ॥

मुम्बापुर्यामगस्तस्य सप्तम्यामधिवेशनम् ।
भविष्यति विनिर्णेतुं वर्धाप्रस्तावमद्भुतम् ॥ ५ ॥

७ वीं अगस्तको बम्बई में वर्धाप्रस्तावका निर्णय करनेकेलिये राष्ट्रियमहासभाकी महासमितिका अधिवेशन होगा ॥ ५ ॥

अहोभिरेभिरत्यल्पैः सभाविद्रोहवर्धनम् ।
कार्यं सम्पादनीयं स्यादन्यथाऽनिष्टमुद्भवेत् ॥ ६ ॥

इन बहुत ही थोड़े दिनोंमें एक ऐसा कार्य करना चाहिये जिससे महासभाके प्रति विरोध बढ़ जाय। नहीं तो बड़ा ही अनिष्ट होगा ॥ ६ ॥

गान्धिना राजविद्रोहः स्पष्ट एष इति स्वयम् ।
उक्तं तस्यापि कर्तव्यो विरोधः सर्वशक्तिभिः ॥ ७ ॥

गांधीने स्वयं ही कहा है कि "यह स्पष्ट राजविद्रोह है"। इसलिये सब शक्ति लगाकर उनका भी विरोध करना चाहिये ॥ ७ ॥

पाषण्डरूपदौर्बल्यमस्माकं गोपितुं सदा ।
कर्तव्य एव सद्यत्नो निभृतं स्वार्थहेतवे ॥ ८ ॥

यह जो हम पाषंड करने चले हैं इस हमारी दुर्बलताको स्वार्थसिद्धि-केलिये छिपानेमें गुप्तरूपसे भारी प्रयत्न करना चाहिये ॥ ८ ॥

दुरान्दोलनकर्तॄणां तेषामस्मद्विरोधिनाम् ।
पराभवो विधातव्यो यत्नैर्बहुविधैरपि ॥ ९ ॥

वह सब जो हमारे विरोधी हैं और दुष्ट आन्दोलन कर रहे हैं उनका सब प्रकार से पराभव—तिरस्कार करना चाहिये ॥ ९ ॥

महासभीयसभ्यानां तेषां सम्पीडनादलम् ।
सर्वथा क्षेपणीयोऽस्ति निर्णयोऽसौ दृढीभवन् ॥ १० ॥

महासभाके सभ्योंको हैरान करनेसे ही वह निर्णय, जो बम्बईमें दृढ़ होनेवाला है, दूर हटाया जा सकता है ॥ १० ॥

महासभा त्यजेदेव सपद्येव निजार्थनाः ।
यथा तथा विधातव्यं युष्माभिर्निर्भयैरिह ॥ ११ ॥

तुम लोगोंको ऐसा काम करना चाहिये कि जिससे महासभा अपनी माँग छोड़ दे ॥ ११ ॥

यद्वा तद्वापि कर्तव्यं मनसा निर्भयात्मना ।
पराभवो निजारीणां धर्म एव नृणां मतः ॥ १२ ॥

निर्भय मनसे जो हो सके तुम लोग सब कुछ करो । शत्रुको हराना यह मनुष्यों का धर्म है ॥ १२ ॥

क्रियतेऽकारि वा यद्यत्तत्सर्वमनुमोदितम् ।
भारतैरितरैश्चेति दर्शनाय प्रयस्यताम् ॥ १३ ॥

हम जो कुछ करते हैं या कर चुके हैं उन सबका भारतीयोंने और अन्योंने भी अनुमोदन किया है, यह बतानेका प्रयास करो ॥ १३ ॥

उत्साहिता भवेयुस्ते येषामाधारमाश्रिताः ।
स्थातुं च जीवितुं चापि भारते स्मो वयं क्षमाः ॥ १४ ॥

जिनका आश्रय लेकर भारतमें हम रह और जी सकते हैं उन्हें खूब उत्तेजित करो ॥ १४ ॥

दोलारूढचलच्चित्ता भारते सन्ति ये नराः ।
महासभाविरोधाय कार्या युष्मत्पदानुगाः ॥ १५ ॥

भारतमें जो ऐसे मनुष्य हैं कि कभी इनकी बात माननी और कभी उनकी; उनको महासभाका विरोध करनेकेलिये अपना अनुयायी-बनावो ॥ १५ ॥

प्रभावशालिनो येऽन्ये प्रतिष्ठिततमा जनाः ।
इदानीं स्वार्थसंसिद्ध्यै स्वपक्षे कुरुताखिलान् ॥ १६ ॥

और भी जो लोग प्रतिष्ठित और प्रभावशाली हों उन सबको आज स्वार्थ सिद्ध करनेकेलिये अपने पक्षमें लेलो ॥ १६ ॥

तद्विरुद्धाः सभा या या भवेयुर्भारतेऽपराः ।
द्वारीकृत्यैव ताः सर्वाः सभाद्रोहो विधीयताम् ॥ १७ ॥

भारतमें कांग्रेसके विरुद्ध दूसरी जितनी सभाएँ हों उन सबको साधन बना कर कांग्रेसका विरोध करना चाहिये ॥ १७ ॥

उपायैः सकलैः शक्यैस्तद्विरुद्धं प्रचार्यताम् ।
निर्दिश्यन्तेऽत्र विषयाः प्रचारार्थं प्रधानतः ॥ १८ ॥

जितने भी उपाय किये जा सकते हों सबोंके द्वारा महासभाके विरुद्ध प्रचार करो । प्रचारकेलिये प्रधान विषयोंका मैं निर्देश करता हूँ ॥ १८ ॥

स्वातन्त्र्यं भारतस्यात्र महाशासनशासनैः ।
अतिस्पष्टं समाघुष्टं विद्यते नैव संशयः ॥ १९ ॥

भारतकी स्वतन्त्रताकेलिये तो पार्लामेन्टने अति स्पष्ट घोषणाकी है, इसमें तो सन्देह ही नहीं है ॥ १९ ॥

शत्रुभिः सह युद्धेषु वर्तमानेषु सर्वशः ।
आविजयं प्रतीक्ष्यः स्यात्कालस्तस्य कृतेऽधुना ॥ २० ॥

लेकिन् वर्तमान युद्धमें शत्रुओंके साथ जब तक विजय प्राप्त न हो तबतक उसकेलिये समयकी प्रतीक्षा तो करनी ही चाहिये ॥ २० ॥

विजयानन्तरं सर्वैर्भारतैरेव मानवैः ।
यथेष्टं मिलितै राज्यव्यवस्था रच्यतामिति ॥ २१ ॥

विजयके पश्चात् सर्वभारतीय लोग मिलकर यथेष्ट राज्यव्यवस्था-करें ॥ २१ ॥

इदानीं राज्यमर्यादामनुसृत्य विधीयताम् ।
साहाय्यं सकलैर्मित्रराज्यानां चेतसा सता ॥ २२ ॥

इस समय तो सर्कारके कायदेका अनुसरण करके सभी लोग मित्र-राज्योंकी सहायता करें ॥ २२ ॥

महासभा समभ्यर्थ्यं युद्धकाले वदेत्कथम् ।
औचित्यं स्वस्य रूपस्येत्येतद्वेत्ति न कश्चन ॥ २३ ॥

युद्ध समयमें महासभाकी माँग कैसे उचित कही जा सकती है इसे कोई नहीं जानता ॥ २३ ॥

एतेनाभ्यर्थनेनाद्य विजयः संभवेत्कथम् ।
युद्धेषु मित्रराज्यानां महद्भिः शत्रुभिः सह ॥ २४ ॥

ऐसी माँगसे इस युद्धमें मित्रराज्योंका विजय कैसे हो सकता है? ॥ २४ ॥

इदमभ्यर्थ्य सभया मित्रराज्यपराभवः ।
विजयोऽस्मद्विपक्षाणां कामितः सर्वथाऽनया ॥ २५ ॥

ऐसी माँग करके तो महासभाने मित्रराज्योंका पराजय और शत्रुका विजय चाहा है ॥ २५ ॥

विचारसङ्कटापन्नो जापानो विद्यतेऽधुना ।
रशियायाः पराभूतिर्विधेया भारतस्य वा ॥ २६ ॥

जापान इस समय विचार संकटमें पड़ा हुआ है कि रशियाको जीतना या भारतको ॥ २६ ॥

गान्धिः स्वीकृत्य तं वार्धं प्रस्तावं वृणुते ध्रुवम् ।
राष्ट्रविप्लवमत्युग्रमथो नृपतिहीनताम् ॥ २७ ॥

गांधी वर्धाके प्रस्तावको स्वीकार करके भयङ्कर राष्ट्रविप्लव और अराजकता चाहते हैं ॥ २७ ॥

प्रस्तावे स्वीकृते चास्मिन्मुम्बापुर्यां निरापदम् ।
भारताक्रमणायैव जापानः प्रार्थितो भवेत् ॥ २८ ॥

बम्बईमें निर्विघ्न यदि वह प्रस्ताव स्वीकृत हो गया तो उसका अर्थ यही होगा कि भारतपर आक्रमण करनेकेलिये जापानको कहा जा रहा है ॥ २८ ॥

महासभामहानेतृमण्डलं महतां द्विषाम् ।
शुभाकाङ्क्षि जयाशंसि विद्यतेऽद्यात्र न भ्रमः ॥ २९ ॥

महासभाके बड़े बड़े नेता आज अवश्य ही शत्रुओंका मङ्गल और विजय चाहते हैं ॥ २९ ॥

इष्टं महासभाया यत्तदस्मद्धितवृद्धये ।
इत्येवं मन्यते सर्वैः शत्रुभिर्भारतस्य तैः ॥ ३० ॥

भारतके शत्रु तो यह समझते हैं कि कांग्रेस जो कुछ चाह रही है। उससे हमारा ही लाभ है ॥ ३० ॥

यावन्न मित्रराज्यानां जयो जायेत सर्वथा ।
तावत्स्वतन्त्रताऽप्यस्य भारतस्य न संभवेत् ॥ ३१ ॥

जब तक मित्र राज्योंका सम्पूर्ण विजय न हो तब तक भारतकी स्वतन्त्रताका संभव ही नहीं है ॥ ३१ ॥

इत्येवमादि निपुणं वृत्तपत्रेषु सत्वरम् ।
प्रेष्य मुद्रापयित्वा च प्रचारयत सर्वतः ॥ ३२ ॥

इत्यादि बातें अच्छी तरहसे समाचारपत्रोंमें शीघ्र भेज कर प्रकाशित कराकर सर्वत्र प्रचार करें ॥ ३२ ॥

सभाप्रस्तावमुद्दिश्य विविधाक्षेपराशयः ।
विधीयन्तां प्रकारोऽयं तस्याधो लिख्यते मया ॥ ३३ ॥

महासभाके प्रस्ताव के सम्बन्ध भिन्न भिन्न प्रकारके आक्षेप करें। उसका प्रकार मैं नीचे लिखता हूँ ॥ ३३ ॥

अंग्रेजा भारतं हित्वा प्रतिगच्छन्तु लण्डनम् ।
अधुनैवेति प्रब्रूते सा सभैव न भारतम् ॥ ३४ ॥

अंग्रेज भारत छोड़कर अभी ही लंडन चले जायँ, यह बात केवल कांग्रेस कहती है न कि भारत ॥ ३४ ॥

यदि सर्वे विभागाः स्युः संमताः प्रार्थ्यवस्तुनि ।
अस्मिंस्तदा विचार्या स्यात्प्रार्थनेयं न चान्यथा ॥ ३५ ॥

भारतमें जितने पक्ष हैं सब ही मिलकर यदि इस माँगमें सहमत हों तभी इसपर विचार किया जा सकता है, अन्यथा नहीं ॥ ३५ ॥

मुसल्मानाश्च सिक्खाश्च साम्यवादानुयायिनः ।
रायिणः श्रमिकाश्छात्राः सर्वे चापि कृषीवलाः ॥ ३६ ॥
यावदेतेऽपि संभूय प्रस्तावं तं सभामतम् ।
सर्वथा नानुमोदन्ते तावन्न स्यात्स चिन्तितः ॥ ३७ ॥

मुसलमान्, सिक्ख, कम्युनिष्ट, रायके अनुयायी, मजूर, किसान, विद्यार्थी; जब तक यह सब मिलकर महासभाके प्रस्तावका अनुमोदन न करें तब तक उसपर विचार न किया जाय ॥ ३६-३७॥

ऐच्छिकाः सैनिकाः प्राप्ता अस्माभिर्भारतावनेः ।
सम्पराये प्रवृत्तेऽस्मिन्यथेष्टा अप्रयासतः ॥ ३८ ॥

इस वर्तमान युद्धमें हमने भारतसे यथेष्ट सैनिक विना श्रमके प्राप्त किये हैं और वह अपनी इच्छासे ही युद्धमें सम्मिलित हुए हैं ॥ ३८ ॥

सर्वेषां भारतीयानां प्रातिनिध्यं महासभा ।
योधने विषये धत्ते नेति सिद्धं श्रमाद्विना ॥ ३९ ॥

युद्धके विषयमें महासभा समस्त भारतवासियोंका प्रतिनिधित्व नहीं रखती है यह तो स्वतः सिद्ध है ॥ ३९ ॥

अस्मात्सत्याग्रहात्पूर्वं कारणं दम्भपूरितम् ।
व्याख्यातं यच्च निर्लज्जं तदपि ध्यायतां समैः ॥ ४० ॥

इस सत्याग्रहसे पूर्व जिस निर्लज्ज और दम्भपूर्ण कारणका वर्णन किया गया है उसपर सब लोग विचार करें ॥ ४० ॥

सिकन्दरहयात्खान आन्दोलनमवर्णयत् ।
श्वेतेषु पृष्ठतो ह्येष प्रहार इति तत्तदा ॥ ४१ ॥

उस समय सिकन्दर हयातखानने इस आन्दोलनको अंग्रेजोंकी पीठपर प्रहार कहा ॥ ४१ ॥

परीप्सितं समादाय क्रिप्स आगाच्च लन्दनात् ।
बहुधा बोधिताऽप्येषा सभा नैव वशं गता ॥ ४२ ॥

लन्दनसे क्रिप्स कितनी ही योजनाएँ लेकर आये परन्तु बहुत समझानेपर भी महासभाने स्वीकार नहीं किया ॥ ४२ ॥

विजयेऽधिगते सद्यः सांस्थानिकपदं ननु ।
स्वातन्त्र्यं यादृशं किंवा स्याद्दिष्टं मिलितं भवेत् ॥ ४३ ॥

विजय प्राप्त करनेके पश्चात् शीघ्र ही सांस्थानिक स्वाराज्य अथवा जैसा इष्ट होगा मिल सकेगा ॥ ४३ ॥

इति क्रिप्सोक्तिमव्यर्थां परिवर्त्य सभाजनैः ।
प्रजाभिः कारितं स्वेच्छं प्रतिकूलार्थदर्शनम् ॥ ४४ ॥

क्रिप्सके इस वाक्यका कोई दूसरा अर्थ नहीं था तो भी महासभा वादियोंने अपनी इच्छाके अनुसार इसका अर्थ बदलकर प्रजाको समझाया ॥ ४४ ॥

महासभा प्रयत्नं न व्यधिताल्पमपीह तम् ।
येन जातीयविद्वेषो गच्छेदस्तमहीधरम् ॥ ४५ ॥

महासभाने ऐसा कोई अल्प भी प्रयत्न नहीं किया है कि जिससे जातीय विद्वेष यहाँसे मिट जावे ॥ ४५ ॥

उक्तवान्राजगोपालो मैत्रीं कर्तुं महासभाम् ।
मुस्लिमलीगेन तेनासौ न्यक्कृतोथ बहिष्कृतः ॥ ४६ ॥

राजगोपालाचार्यने मुस्लिमलीगके साथ मित्रता करनेको कहा था इसलिये उनको तिरस्कार करके बाहर निकाल दिया ॥ ४६ ॥

जापानविजये तोषं ते पुष्णन्त्यत्र केवलम् ।
महासभासदस्या ये नापरे भारताः क्वचित् ॥ ४७ ॥

जो महासभाके सदस्य हैं वही केवल जापानके विजयपर संतोष मान रहे हैं, अन्य भारतीय नहीं ॥ ४७ ॥

भारतीयप्रजास्वद्य गौराङ्गान्प्रति याऽधुना ।
द्वेषबुद्धिः समायाता पोषिता सभया च सा ॥ ४८ ॥

अंग्रेजोंके प्रति भारतीयोंमें जो आज द्वेषबुद्धि आयी है उसे केवल महासभाने ही पोषण दिया है ॥ ४८ ॥

स्त्रिह्यते मित्रराज्येष्वित्युदघोषि तया च यत् ।
सत्यं चेत्तदभि स्युस्तां प्रजा आवर्जिता ध्रुवम् ॥ ४९ ॥

महासभाने जो यह घोषणा की है कि वह मित्रराज्योंपर प्रेम करती है, यदि यह सत्य घोषणा होती तो सारी प्रजा उसकी ओर झुक जाती ॥४९॥

श्रमिकेषु समर्प्यः स्यादधिकार इति प्रियम् ।
वचस्तु मोहनार्थं स्यात्केवलं नैव तात्त्विकम् ॥ ५० ॥

मजदूरोंको अधिकार सौंप दिया जायगा यह कथन तो केवल लुभानेके-लिये ही है, वास्तविक नहीं ॥ ५० ॥

तन्त्रं महासभीयं तु कांश्चिद्विधृतसत्त्वकान् ।
सर्वसत्त्ववतः कर्तुं वाञ्छतीति न वाङ् मृषा ॥ ५१ ॥

महासभाका तन्त्र तो यह चाहता है कि कुछ लोग जो बलवान् हैं उन्हें, सर्वशक्तिमान् बना दिया जाय । यह कथन असत्य नहीं है ॥ ५१ ॥

महासभीयतन्त्रेऽस्ति प्रभुत्वं व्यवहारिणाम् ।
जनानां मध्यमश्रेणिस्थितानामपि सर्वथा ॥ ५२ ॥

महासभाके तन्त्रमें तो व्यापारियोंकी अथवा मध्यमश्रेणीवालोंकी प्रधानता है ॥ ५२ ॥

अधिकारो न कोऽप्यद्य विद्यते श्रमजीविनाम् ।
स्थापिते शासनेऽप्यद्य स भवेदिति दुःशकम् ॥ ५३ ॥

आज श्रमजीवियों—मजदूरोंका कोई अधिकार नहीं है । स्वराज्य मिलनेपर वह उनका अधिकार होगा, यह अशक्य है ॥ ५३ ॥

योजना स्यात्सभायाः साऽव्यवहार्यैव सर्वथा ।
स्पष्टेति कथ्यमानापि न सा स्पष्टेति बुध्यताम् ॥ ५४ ॥

महासभाकी योजना सर्वथा उपयोगमें आनेवाली नहीं है । भले महासभावादी कहें कि वह योजना स्पष्ट है, परन्तु वह स्पष्ट नहीं ही है॥५४॥

क्रिप्सीययोजनामेव विधाय विकृतां पराम् ।
उपस्थापयतीहाद्य प्रायेणेत्यपि विद्यताम् ॥ ५५ ॥

क्रिप्सकी जो योजना थी उसीको बिगाड़कर आज यह लोग उपस्थित कर रहे हैं, ऐसा समझना चाहिये ॥ ५५ ॥

क्रिप्सीययोजना तावत्सर्वथा लोकशासनम् ।
अन्वधावदियं सा तु सभाया प्रतिगच्छति ॥ ५६ ॥

क्रिप्सकी योजना लोकशासनके अनुकूल थी परन्तु महासभाकी योजना उसके प्रतिकूल है ॥ ५६ ॥

प्रजानां प्रातिनिध्येन पूर्णे धारासदस्यलम् ।
क्रिप्सीययोजनाऽधत्त निर्वाचनसुपद्धतिम् ॥ ५७ ॥

प्रजाके प्रतिनिधित्वसे पूर्ण धारासभामें निर्वाचनकी पद्धतिका क्रिप्सकी योजनामें समावेश है ॥ ५७ ॥

लोकशासनसिद्धान्तमनुसृत्याऽभवत्तदा ।
तत्र धारासृजो लोकसभायाः सद्व्यवस्थितिः ॥ ५८ ॥

लोकशासनके सिद्धान्तका स्वीकार करके उस समय नियम बनानेवाली लोकसभाकी व्यवस्था की गयी थी ॥ ५८ ॥

अनागते तथा काले नियमानेष्यतः प्रति ।
स्वातन्त्र्येण विचाराय व्यवस्थासीदनुत्तमा ॥ ५९ ॥

भविष्यमें भी नियमों—क़ायदोंके बढ़ानेके विषयमें स्वतन्त्रतापूर्वक विचार करनेकी उसमें व्यवस्था थी ॥ ५९ ॥

प्रयान्तु काममंग्रेजा इति गांधिमनोरुचेः ।
पूर्तये साधनं सर्वं क्रैप्स्यां तस्यां व्यवस्थितम् ॥ ६० ॥

गांधीकी जो यह इच्छा है कि अंग्रेज यहाँसे सर्वथा चले जायँ, इसकी पूर्तिकेलिये भी क्रिप्सकी योजनामें सब व्यवस्था थी ॥ ६० ॥

लोकशासनसद्वर्त्म नानुयाति महासभा ।
तया संस्थापिते सर्वं शासने सत्त्वमिच्छति ॥ ६१ ॥

महासभा लोकशासनके मार्गमें नहीं जा रही है। वह जिस शासनकी स्थापना करेगी, उसे ही सब अधिकार चाहती है ॥ ६१ ॥

मध्यकालिकसंस्थेयं योधनानन्तरं स्वयम्।
अपेक्षिता व्यवस्थास्ता योजयिष्यति बुद्धितः ॥ ६२ ॥

मध्यकालिक यह संस्था युद्धके बाद उन सब व्यवस्थाओंकी योजना करेगी जो अपेक्षित होगी ॥ ६२ ॥

सत्त्वं च प्रथमं गौरं भवेद्दूरीकृतं ततः।
मध्यकालिकसत्त्वस्य संस्थापनमुदेष्यति ॥ ६३ ॥

पहले अंग्रेजोंका प्रभुत्व दूर किया जाय तभी अन्तरिम गवर्नमेन्ट मध्यकालिक शासनकी स्थापना हो सकेगी ॥ ६३ ॥

गौराङ्गगमनाऽपेक्ष्यसत्त्वागमनयोर्ननु।
मध्यकाले भवेत्किं तच्छासनं रचयेच्च कः ॥ ६४ ॥

अंग्रेजोंका जाना और इष्ट गवर्नमेन्टका आना, इन दोनोंके मध्यकालमें वह कौन वस्तु है जो उस शासनकी रचना करेगी ? ॥ ६४ ॥

कां व्यवस्थामनुसृत्य शिष्यात्सर्वा इमाः प्रजाः।
इत्येतत्सर्वमस्पष्टं सभाया अधियोजनम् ॥ ६५ ॥

किन नियमोंका अनुसरण करके महासभा इन प्रजाओंका शासन करेगी, यह सब उसकी योजनामें अस्पष्ट है ॥ ६५ ॥

प्रायतिष्ट सभा नाप्तुमन्यपक्षाश्रयं क्वचित्।
औदासीन्यं विरोधं वा भजेयुस्ते सभां प्रति ॥ ६६ ॥

अन्य पक्षोंका सहयोग प्राप्त करनेकेलिये महासभाने प्रयत्न नहीं किया है अतः वह सब पक्षपाती उदासीन रहेंगे या महासभाका विरोध करेंगे॥६६॥

अल्पकालं महीभारनिक्षेपः क्रियते यदि।
सभायामपरे पक्षा न सहेरन्कदापि तत् ॥ ६७ ॥

यदि थोड़े समयकेलिये महासभाको ही भारतका भार सौंप दिया जाय तो दूसरे पक्ष इसे कभी भी सहन नहीं करेंगे ॥६७॥

अयं तु मध्यमः कालो दीर्घायुष्ट्वमुपैष्यति ।
अवश्यं कतिपयान्मासान्व्याप्य संस्थास्यते स च ॥६८॥

और यह मध्यकाल तो बहुत लम्बा होगा। कितने ही महीने तो उसमें अवश्य लगेंगे॥ ६८ ॥

एतस्मिन्समये शक्तिर्या भविष्यति शासिका ।
निर्बलाऽनिश्चिता सा स्यादवश्यं मन्यतामिदम् ॥ ६९ ॥

इस समयमें जो शक्ति हुकूमत भारतपर करेगी वह अवश्य ही निर्बल और अनिश्चित होगी ॥ ६९ ॥

लब्धसन्धिः कथं तिष्ठेन्मौनं जापानभूपतिः ।
सत्याग्रहसमारम्भस्तस्मा आमन्त्रणं भवेत् ॥ ७० ॥

तब जापानको अवसर मिलेगा। वह बैठा नहीं रहेगा। तब तो सत्याग्रहका आरम्भ जापानको निमन्त्रणके समान होगा ॥ ७० ॥

प्रस्तावेऽस्मिंश्च साहाय्यं कर्तुं युद्ध उपस्थिते ।
एकेनापि न शब्देन सङ्केतः कोपि विद्यते ॥ ७१ ॥

इस प्रस्तावमें ऐसा एक भी शब्द नहीं है कि युद्ध उपस्थित होनेपर महासभा उसमें सहायता करेगी ॥ ७१ ॥

मित्रराज्यप्रयासेषु युद्धमुद्दिश्य नो चरेत् ।
विक्षेपं सा सभा कश्चिदित्येवेच्छा प्रदर्शिता ॥ ७२ ॥

केवल इतनी ही इच्छा दिखायी गयी है। युद्धके प्रति मित्रराज्य जो प्रयत्न करेंगे उसमें सभा विक्षेप नहीं करेगी ॥ ७२ ॥

मित्राणां च भयग्रस्ता शक्तिः संरक्षणात्मिका ।
भवेद्येन न तत्कार्यमितीच्छापि प्रदर्शिता ॥ ७३ ॥

यह इच्छा भी प्रदर्शित की गयी है कि मित्रराज्योंकी रक्षणशक्ति भय-ग्रस्त बने ऐसा कुछ भी महासभा नहीं करेगी ॥ ७३ ॥

आविजयं मनोयोगैर्युद्धनिर्धारणं पुनः ।
एतस्मिन्लिपिपत्त्रे नो दृश्यते क्वापि निर्भ्रमम् ॥ ७४ ॥

परन्तु जबतक मित्रराज्योंको विजय प्राप्त न हो तबतक मनोयोगसे युद्धका साहाय्य करेंगे ऐसा स्पष्ट उस लिपिपत्रमें नहीं है ॥ ७४ ॥

एषा मनोदशा नूनं सभाया अनुधावति ।
सद्यो विलिखितं लेखं गान्धिना शत्रुणाऽसता ॥ ७५ ॥

महासभाकी यह मनोदशा, दुष्ट शत्रु गांधीने अभी जो लेख लिखा है, उसीके अनुकूल है ॥ ७५ ॥

पृत्नानां भारतीयानामस्त्रत्यागो विधास्यते ।
शासने राष्ट्रिये जात इति प्रावोचि गान्धिना ॥ ७६ ॥

गाँधीने कहा है कि जब राष्ट्रीय हुकूमत यहाँ आवेगी तब भारतीय सेनाको निरस्त्र बना दिया जायगा ॥ ७६ ॥

दूतान्प्रेषयितुं स्वीयान्दुर्दम्यान्विद्विषः प्रति ।
गान्धिः कथयतीत्यत्र क्षते क्षारं विनिक्षिपन् ॥ ७७ ॥

और जलेपर नमक छिड़कनेके समान गांधी यह कहता है कि बलवान् शत्रुओंके पास अपने दूत भेजे जायँ ॥ ७७ ॥

भारते मित्रराज्यानां पृत्नास्तिष्ठन्तु रक्षितुम् ।
भारतं सम्परिक्षीणसाहाय्याशालतोद्भवाः ॥ ७८ ॥

भारतमें मित्रराज्योंकी सेना भारतकी रक्षाकेलिये है, परन्तु उसे भारतकी सहायताकी आशा नहीं रखनी चाहिये, ऐसा गांधी कहते हैं॥७८॥

इत्येवादादसौ तद्धि बह्वस्तीति स मन्यते ।
जुलाय्याः पञ्चदश्यास्तच्छब्दानत्र समुद्धरेः ॥ ७९ ॥

भारतने इतना जो दिया है, वही बहुत है, ऐसा गांधी मानता है। यहाँपर जुलाईकी १५ वीं तारीखके लेख उद्‌धृत करो ॥ ७९ ॥

**स्वतन्त्रं भारतं वर्षं मित्रराज्याविरोधि सत्।**
**स्थास्यतीति मया शक्यं वक्तुं स्वस्थेन चेतसा ॥ ८० ॥**

मैं इतना ही स्वस्थ चित्तसे कह सकता हूँ कि स्वतन्त्र भारत मित्र-राज्यका मित्र बनकर रहेगा ॥ ८० ॥

**परं तद्धिंसनामार्गमहिंसकपथं च वा।**
**ग्रहीष्यतीति वक्तुं न प्रभवामि कथञ्चन ॥ ८१ ॥**

परन्तु वह अहिंसक मार्गका ग्रहण करेगा अथवा हिंसक मार्गका, इसे मैं किसी तरहसे नहीं कह सकता हूँ ॥ ८१ ॥

**सङ्कोचमन्तरेणैव शक्यते वक्तुमित्यथ।**
**शक्ष्यामि तत्करिष्यामि सर्वहिंसाप्रतीपगम् ॥ ८२ ॥**

बिना संकोचके मैं यह कह सकता हूँ कि जितना मेरेलिये शक्य होगा, मैं सब हिंसासे उसे अलग रखूँगा ॥ ८२ ॥

**समाधानप्रियाणां च योधनप्रतिषेधिनाम्।**
**भारैर्निपीडिता संस्था वर्ततेऽद्य महासभा ॥ ८३ ॥**

आज इस महासभामें ऐसे लोग बहुत हैं जो समाधान चाहते हैं और युद्धका निषेध करते हैं ॥ ८३ ॥

**सभाशासनमन्यत्र रक्षणाद्भारतक्षितेः।**
**किं विधास्यति तन्नास्ति विस्पष्टं कथमप्यहो ॥ ८४ ॥**

महासभाकी सर्कार भारतकी रक्षाके अतिरिक्त क्या करेगी, वह तनिक भी स्पष्ट नहीं है ॥ ८४ ॥

**प्रवर्त्स्यद्युद्धमाजेतुं प्रदातुं च सहायताम्।**
**संश्रवं नियमं वापि नहि प्रत्यश्रृणोदसौ ॥ ८५ ॥**

भविष्यके युद्धको जीतनेकेलिये अथवा सहायता देनेकेलिये गांधी कोई प्रतिज्ञा अथवा नियम नहीं बताता है ॥ ८५ ॥

भारतं विजिगीषूणां शत्रूणामवरोधनम् ।
कया रीत्या सभा कर्तुमुद्यतेति न कथ्यते ॥ ८६ ॥

यह भी नहीं बताता है कि भारतको जीतनेकी इच्छावाले शत्रुओंकी महासभा किस रीतिसे रुकावट करेगी ॥ ८६ ॥

हिंसयाऽहिंसया वापि द्विषतामवरोधनम् ।
भविष्यतीति संगोप्तुं निपुणं यत्न आस्थितः ॥ ८७ ॥

शत्रुओंकी रुकावट हिंसासे अथवा अहिंसासे की जायगी इसे छिपानेकेलिये भारी प्रयत्न किया गया है ॥ ८७ ॥

आक्रामकमहाशक्तिनिष्क्रियाङ्गीकृतावसौ ।
प्रस्तावः कृत्रिमं खेदमाविष्कुरुत उज्ज्वलम् ॥ ८८ ॥

आक्रमण करनेवालेका निष्क्रिय अङ्गीकार करनेमें वह प्रस्ताव बनावटी खेद प्रकट करता है ॥ ८८ ॥

निष्क्रियत्वेन रिप्वङ्गीकारस्यैव पुनः पुनः ।
बहुभिर्वत्सरैर्गांधिरुपदेशं तनोति सः ॥ ८९ ॥

वह गांधी निष्क्रियतासे ही शत्रुका स्वीकार करनेकेलिये बहुत वर्षोंसे पुनः पुनः उपदेश कर रहा है ॥ ८९ ॥

पत्रे हरिजनेत्याख्ये जुलाय्या द्वादशे तिथौ ।
लेखमेकं महादेवदेसाई व्यलिखत्पुरा ॥ ९० ॥

ता० १२ जुलाईके हरिजनमें महादेवदेसाईने एक लेख लिखा है ॥९०॥

स्पष्टमेव प्रतीयेत लेखेनैतेन कीदृशी ।
वर्धां व्याप्य स्थिता गूढा मार्शलपेताँमनोदशा ॥ ९१ ॥

उस लेखसे यह स्पष्ट जाना जाता है कि मार्शल पेताँकी मनोदशा वर्धामें किस प्रकार व्याप्त हुई है ॥ ९१ ॥

सुशिक्षितेषु लोकेषु वार्तालापप्रसङ्गने।
सात्याग्रहमियं वार्ता युष्माभिरुपयुज्यताम् ॥ ९२ ॥

सुशिक्षित लोगोंके साथ जब तुम बातचीत करो तब बहुत आग्रहके साथ इस बातका उपयोग करो ॥ ९२ ॥

इष्टपूर्तिर्यदि स्यान्नो सभायास्तर्हि सा स्वयम्।
शान्तो भूत्वा वितिष्ठेताऽपरैः कार्यं यथेहितम् ॥ ९३ ॥

यदि महासभाकी इष्टसिद्धि नहीं होगी तो वह स्वयं शान्त होकर बैठ जायगी। तब दूसरे लोग जैसा अच्छा लगे, काम करेंगे ॥ ९३ ॥

प्रस्तावेऽस्मिन्नसावर्थो विनिगूढोऽवतिष्ठते।
गांधिना च तथाऽऽज़ादेनायं स्पष्टीकृतः स्वयम् ॥ ९४ ॥

इस प्रस्तावमें यह अर्थ छिपा हुआ है। गांधी और अबुल कलाम आजादने इसे स्पष्ट किया है ॥ ९४ ॥

फ़ारसीभाषया बद्धं कथानकमिदं परम्।
युष्माभिरुपयोज्यं स्यादर्थतो यत्र तत्र च ॥ ९५ ॥

फारसी जबानमें यह एक कहावत है इसके अर्थका जहाँ तहाँ सर्वत्र उपयोग करो ॥ ९५ ॥

न ख़ुद ख़ुरम् न ब कस् देहम्।
परसीद् शवद् त ब सग् देहम् ॥
अहमद्यां न चेदन्यैरादयिष्यामि वस्तु नो।
पूतीभूतमसारं तच्छुने दास्यामि खादितुम् ॥ ९६ ॥

"न ख़ुद ख़ुरम् न ब कस् देहम्। परसीद शवद् त ब सग् देहम्। यदि किसी वस्तुको मैं नहीं खा सकता तो दूसरों को भी नहीं खिलाऊँगा। यदि सड़ जायगी तो कुत्तेको खिला दूँगा ॥ ९६ ॥

आक्रमणं न कर्तव्यमिदानीमधिसभं क्वचित्।
प्रत्यक्षं स्पष्टतश्चेति ध्येयं युष्माभिरन्वहम् ॥ ९७ ॥

तुम इतना हमेशा याद रखना कि किसी सभामें प्रत्यक्ष और स्पष्ट अभी महासभापर आक्रमण नहीं करना ॥ ९७ ॥

वैयक्तिकोऽपि कर्तव्यो नाऽऽक्षेपः सम्प्रति क्वचित् ।
अन्यथा हि तटस्थाः स्युस्तत्सहायप्रदायिनः ॥ ९८ ॥

अभी स्पष्टरूपसे व्यक्तिगत आक्षेप भी कहीं नहीं करना । नहीं तो जो अभी तक तटस्थ हैं वह गांधीके सहायक हो जायँगे ॥ ९८ ॥

नीतिरेषा सभायाः स्याद्युद्धक्षयविधायिनी ।
इति लोकेषु वक्तव्यं नाधिकं हानिरन्यथा ॥ ९९ ॥

लोगोंमें इतना ही कहना कि महासभाकी इस नीतिसे युद्धको हानि पहुँचेगी । इससे अधिक नहीं कहना; नहीं तो अपनी हानि होगी ॥ ९९ ॥

ब्रिटिशराज्यस्य ये सन्ति कृतज्ञा मानवा इह ।
सन्दिग्धमनसो येऽपि सर्वे स्थाप्या वशेऽधुना ॥ १०० ॥

इस समय जो लोग ब्रिटिश राज्यके कृतज्ञ हैं अथवा जो लोग सन्दिग्धमनवाले हैं उनको इस समय वशमें रखना ॥ १०० ॥

यदि युद्धं प्रवर्तेत सभाब्रिटिशराज्ययोः ।
पुष्कलैः साधनै राज्यं युध्येतेति प्रचार्यताम् ॥ १०१ ॥

और यह प्रचार करो कि यदि महासभा और ब्रिटिशराज्यमें युद्ध शुरू हुआ तो राज्य पुष्कल साधनोंसे युद्ध करेगा ॥ १०१ ॥

यानि यानि महास्त्राणि सन्ति राज्यगतानि च ।
सभानुयायिलोकेषु प्रयोक्तव्यानि तान्यथ ॥ १०२ ॥

राज्यके पास जितने भी बड़े बड़े अस्त्र हैं उन सब का प्रयोग महासभाके अनुयायियोंपर किया जायगा ॥ १०२ ॥

युद्धप्रयासविद्वेषि सभीयाभ्यर्थनानि चेत् ।
नेशनल् वॉर फ्रन्टो हि विरोद्‌धुमुपयुज्यताम् ॥ १०३ ॥

यदि महासभाकी प्रार्थनाएँ युद्धप्रयासका विरोध करनेवाली हों तो विरोध करनेकेलिये "नेशनल् वॉर फ्रन्ट" का उपयोग करो ॥ १०३ ॥

भाषणानि च लेखाश्च पत्रेषु स्थानिकेषु च।
पुस्तकानां वितरणं व्यङ्ग्यचित्रानुचित्रणम् ॥ १०४ ॥

भाषण, स्थानीय समाचारपत्रोंमें लेख, पैम्फलेट छोटी छोटी पुस्तिकाओंका वितरण, व्यंग्य चित्रोंका आलेखन—॥ १०४ ॥

विज्ञप्तिपत्रसंश्लेषो भित्तिषु क्रियतामथ।
वार्तालापप्रसङ्गोऽपि तत्सम्बद्धो विधीयताम् ॥ १०५ ॥

भीतोंमें-दीवालोंमें विज्ञापन लगाना, यह सब काम करो। इसी सम्बन्धमें वार्तालापका प्रसंग भी ढूँढो ॥ १०५ ॥

सर्वाण्येतानि सन्त्येव साधनानि प्रयोजितुम्।
अनायासेन तान्यद्याऽनुष्ठातुं त्वर्यतां ततः ॥ १०६ ॥

यह सब साधन बिना प्रयास ही उपयोग करनेकेलिये उपस्थित हैं। इन्हें करनेकेलिये शीघ्रता करो ॥ १०६ ॥

भित्तिसंश्लेष्यपत्रार्थं व्यङ्ग्यचित्रार्थमप्यथ।
सङ्केताः संविधीयन्ते केचनात्र मयोचिताः ॥ १०७ ॥

दीवालमें विज्ञापन सटानेकेलिये और व्यंग्य चित्रके आलेखनकेलिये मैं कुछ उचित संकेत कर देता हूँ ॥ १०७ ॥

गृहं द्विद्वारमालिख्य मध्ये स्थाप्यः सभाजनः।
शत्रुभ्यः स्वागतं कुर्वन्बहिष्कुर्वन्सितत्वचः ॥ १०८ ॥

एक घर बनावो। उसमें दो दर्वाजे बनावो। उसमें महासभावादीको खड़ा करो। वह एक तरफ़ तो अंग्रेजोंका बहिष्कार करता हो और दूसरी ओर शत्रुओंका स्वागत करता हो ॥ १०८ ॥

महासभानुगस्यास्य पुरुषस्यैव संनिधौ।
द्वारे च दक्षिणे कश्चित्कृषकः स्थाप्यतामथ ॥ १०९ ॥

इसी महासभाके अनुयायी पुरुषके पास दक्षिण दर्वाजेमें एक किसानको रखो ॥१०९॥

तेन द्वारेण जापानो विशन्कश्चित्प्रदर्श्यताम् ।
कृषकः कथयेत्कोऽयमायातीक्षस्व चेत्यलम् ॥ ११० ॥

उसी द्वारसे किसी जापानीको प्रवेश करता हुआ दिखावो। और किसानको यह कहता हुआ चित्रण करो कि 'देखो यह कौन आता है'? ॥११०॥

अथवा द्विपथे स्तम्भे एकाऽऽस्तां काष्ठपट्टिका ।
पथिकौ द्वौ स्थितौ स्यातां तस्मिन्नेव पथि श्रितौ ॥ १११ ॥

अथवा कहीं दो रास्ते बतावो। उसपर एक खंभा खड़ा करो। उस खंभे पर एक लकड़ीकी पट्टी रखो। उसी मार्गपर दो मुसाफिरोंको खड़े रखो ॥ १११ ॥

एकः पृच्छेत्पथा केन स्वातन्त्र्यमुपयाम्यहम् ।
निर्दिशेदपरो वर्त्म विजयीयं समादरात् ॥ ११२ ॥

एकको पूछने दो कि किस मार्गसे मुझे स्वतन्त्रता मिलेगी? दूसरेको कहने दो कि "विजयप्राप्त करनेके मार्गसे स्वतन्त्रता मिलेगी" ॥ ११२ ॥

हिट्लर् मुसोलिनी टोजो ध्वनिवर्धकयन्त्रिणः ।
सभामेवानुमन्वानाः प्रदर्श्यन्तां प्रयत्नतः ॥ ११३ ॥

ध्वनिवर्धकयन्त्र (लाउड स्पीकर) से यह बतावो कि हिटलर, मुसोलिनी, तो जो महासभाको ही अनुमोदन दे रहे हैं ॥ ११३ ॥

कापट्यमाश्रित्य महासभासौ
मया विजेयेति विचार्य चारु ।
श्रीफेडरिक् पक्कल एवमेत-
द्व्यजिज्ञपत्कर्तुमधीनदासान् ॥११४॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
चतुर्दशः सर्गः

प्रपंचका आश्रय लेकर ही आज राष्ट्रिय महासभाका पराजय किया जा सकता है ऐसा विचारकर फ्रेडेरिक् पकल्‌ने अपने अधीन धनदासोंको ऐसी सूचना दी ॥ ११४ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
चतुर्दशः सर्गः



# पञ्चदशः सर्गः

पाकलं पत्रमाश्रित्य कश्चिद्दासः प्रचारकः।
उत्कले चोत्कलाधिप्यमुखमन्त्री पदं न्यधात् ॥ १ ॥

पकल्के इस पत्रका आश्रय लेकर उत्कल सर्कारके मुख्य मन्त्रीने इस कार्यमें पैर उठाया ॥ १ ॥

जुलाय्या अविलम्बेन द्वाविंशतितमे तिथौ।
सर्वत्रैवोत्कले पत्रं मण्डलेशेषु संगतम् ॥ २ ॥

शीघ्र ही उसने २२ जुलाईको उत्कल (उड़ीसा) प्रान्तके सभी जिलोंमें कलेक्टरोंके पास पत्र भेज दिया ॥ २ ॥

तेन पत्रेण विज्ञप्ताः समे मण्डलशासकाः।
महासभीयसिद्धान्तं विरोधयितुमन्वहम् ॥ ३ ॥

उसमें सभी जिलाधीशोंको उस पत्र द्वारा सूचना दी कि महासभाके सिद्धान्तका वह लोग विरोध करें ॥ ३ ॥

दिल्लीतोऽस्मि तथा कर्तुमादिष्टोऽहमशेषकैः।
कारयितुं तथोपायैरिति दासोऽलिखत्स्फुटम् ॥ ४ ॥

उस गुलाम मन्त्रीने स्पष्ट लिख दिया कि दिल्लीसे उसे आज्ञा मिली है कि वह सबसे ऐसा ही करावे ॥ ४ ॥

कयापि गुप्तया रीत्या सभानिन्दाप्रचारणम्।
कर्तव्यं धर्म एवायं मन्यतां दृढनिश्चयैः ॥ ५ ॥

किसी भी गुप्तरीतिसे महासभाकी निन्दाका प्रचार करना यह धर्म है, ऐसा समझ लो ॥ ५ ॥

कलेक्टरास्तथा तेषां विधेया अधिकारिणः।
महासभाविरोधार्थं साग्रहं तेन सूचिताः ॥ ६ ॥

कलक्टर तथा उसके हाथ नीचेके अधिकारियोंको महासभाका विरोध करनेके लिये उसने आग्रहपूर्ण सूचना दी ॥ ६ ॥

महासभीयसिद्धान्ताननुसारिण्य आस्थिताः ।
कटके षट् सभास्तासां नामधेयानि सूचये ॥ ७ ॥

महासभाके सिद्धान्तका अनुसरण करनेवाली कटकमें छ सभाएँ हैं, मैं उनके नाम लिखता हूँ ॥ ७ ॥

चतस्र एव गञ्जामे सभाः सन्ति तथाविधाः ।
तासां नामगणं सर्वं प्रेषये तव संनिधौ ॥ ८ ॥

चार ऐसी सभाएँ तो गंजाममें हैं। तुम्हारे पास उनके नाम भेजता हूँ ॥ ८ ॥

बालासोरे च मज्ज्ञाता तादृगेकैव विद्यते ।
उडीसावस्त्रयन्त्राणां स्वामिनां सा सभा पुनः ॥ ९ ॥

जहाँ तक मैं जानता हूँ, बालासोरमें ऐसी एक ही सभा है। और वह सभा उड़ीसा मिलके मालिकोंकी है ॥ ९ ॥

अतिरिक्ता भवेयुश्चेदेताभ्यस्तासु चासु च ।
आज्ञापत्त्राणि सम्प्रेष्य तासां साहाय्यमिष्यताम् ॥ १० ॥

इनसे अतिरिक्त भी कोई सभा हो सकती है। आज्ञापत्र ( हुक्म ) भेजकर उनकी सहायता माँगो ॥ १० ॥

उत्कलेषु महायुद्धसमितीनां परम्परा ।
विद्यते साऽपि सम्राह्याऽनायासेनात्र कर्मणि ॥ ११ ॥

उड़ीसामें बहुतसी युद्धसमितियाँ हैं। इस कार्यमें उनका भी संग्रह करो ॥ ११ ॥

कृत्स्ना एता सभाः प्रार्थ्याः सभाभिर्वृत्तपत्त्रकैः ।
सभाप्रस्तावमुद्दिश्य विरोधस्य प्रचारणम् ॥ १२ ॥

सभाओं द्वारा तथा समाचारपत्रों द्वारा इन सब सभाओंसे प्रार्थना करो कि वह महासभाके प्रस्तावके विरुद्ध प्रचार करें ॥ १२ ॥

एतत्प्रान्तीयपत्त्रेषु परप्रान्तगतेषु च ।
पत्त्रेषु तत्सभाद्रोही लिख्यतां लेखसद्गणः ॥ १३ ॥

इस प्रान्तके तथा अन्य प्रान्तके समाचार पत्रोंमें महासभा विरोधी लेख लिखो ॥ १३ ॥

एसोसियेटेडप्रेस——युनाईटेडप्रेसयोः ।
यथाशक्यं ग्रहीतव्यं साहाय्यं यत्नपूर्वकम् ॥ १४ ॥

एसोसियेटेडप्रेस और युनाइटेड प्रेसकी इस कार्यमें यत्नके साथ यथाशक्य सहायता लो ॥ १४ ॥

युष्मत्प्रान्तप्रतिष्ठाभाग्जनैर्लेखो विलिख्यताम् ।
असभीयेषु वृत्तान्तपत्त्रेष्वादिष्टरीतिभिः ॥ १५ ॥

तुम्हारे प्रान्तके प्रतिष्ठित लोग, उन पत्रोंमें जो महासभावादी नहीं हैं, मेरी सूचनाके अनुसार लेख लिखें ॥ १५ ॥

महासभीयसिद्धान्तविरुद्धैः पत्त्रतन्त्रिभिः ।
विरोधोद्भावका लेखा लिख्यन्तां बलपूर्वकम् ॥ १६ ॥

जो पत्रसम्पादक महासभाके सिद्धान्तसे विरोध करते हों उनसे विरोधोत्पादक लेख लिखावो ॥ १६ ॥

रीत्या कयापि ते पत्त्रे उभे प्राप्ते महात्मना ।
ते उद्दिश्य व्यलेखीत्स लेखमेकमधः स्थितम् ॥ १७ ॥

जिस किसी प्रकारसे यह दोनों पत्र श्रीमहात्माजीको मिल गये। इन दोनोंको उद्देश्य करके उन्होंने नीचेका लेख लिखा ॥ १७ ॥

राष्ट्रावश्यककार्येषु दत्तध्यानं विधायिनाम् ।
सुहृदां मां मदीयानां प्राचुर्यमिति मे भगः ॥ १८ ॥

ऐसे मेरे बहुतसे मित्र हैं जो राष्ट्रके आवश्यक कार्यमें मेरा ध्यान दिलाते रहते हैं। यह मेरा सौभाग्य है ॥ १८ ॥

अत्र चैकं महाश्चर्यगर्तोपातनशक्तिभृत् ।
वस्तु निर्दिश्यते हिन्दजनताग्रे मयाऽधुना ॥ १९ ॥

आज मैं यहाँ भारतकी जनताके सामने एक ऐसी वस्तु रखता हूँ जो सबको महान् आश्चर्यमें डुबा देगी ॥ १९ ॥

श्रीमहादेवदेसाई हेलेटपरिपत्रकम् ।
स्मारयत्यद्य संप्राप्तं शरदां प्राक् च सप्तकात् ॥ २० ॥

सात वर्ष पूर्व प्राप्त हुए हेलेटके परिपत्रको श्रीमहादेवदेसाई आज मुझे याद करा रहे हैं ॥ २० ॥

सुप्रसिद्धं च तत्पत्रं मित्त्रेणैकेन मां प्रति ।
महायत्नैर्विशोध्यैव सम्प्राहायि मुदा तदा ॥ २१ ॥

उस अतिप्रसिद्ध पत्रको बड़े यत्नसे ढूँढ़कर एक मित्रके द्वारा उस समय उन्होंने भेजवाया था ॥ २१ ॥

श्रद्धानन्दोऽपि सम्प्रापदेकं पत्त्रममूदृशम् ।
नातीवावश्यकं किन्तु तदासीत्तदनेहसि ॥ २२ ॥

स्वामी श्रद्धानन्दजी ने इसी प्रकारका एक पत्र पाया था परन्तु उस समय वह बहुत आवश्यक नहीं था ॥ २२ ॥

वैयक्तिके इमे पत्त्रे उभे आस्तां तदा परम् ।
पकलीयमिदं प्राप्तं मया नैव तथाविधम् ॥ २३ ॥

वह दोनों पत्र तो वैयक्तिक थे। परन्तु पकल् का यह पत्र वैयक्तिक नहीं है ॥ २३ ॥

पकलीयं च दासीयं पत्त्रं तज्जनतास्वहम् ।
प्रसिद्धिं प्रापये तेन तयोरर्हामि पूज्यताम् ॥ २४ ॥

पकल्के और दासके पत्रोंको मैं जनताके सामने प्रकाशित करता हूँ। इससे वह दोनों ( पत्रलेखक ) मेरी प्रशंसा करेंगे ॥ २४ ॥

निर्दोषमपि यत्किञ्चिदान्दोलनमिहास्ति चेत्।
राष्ट्रियं तद्विनाशाय कुरुते किं न शासनम् ॥ २५ ॥

यहाँ पर निर्दोष जो कुछ आन्दोलन चल रहा है उसके नाशकेलिये सर्कार क्या नहीं कर रही है? ॥ २५ ॥

चाटूक्तिनिपुणं धूर्तं स्वार्थसाधनकौशलम् ।
शासनं कीदृशं धत्ते प्रजा वेत्तु निरावृतम् ॥ २६ ॥

सर्कारके पास चिकनी चुपड़ी बोलनेवाला, स्वार्थ साधनमें कुशल कैसा धूर्त है इसे प्रजा स्पष्ट जान ले ॥ २६ ॥

भगवानेव जानातु कियन्तीदृंशि चौर्यतः ।
परिपत्त्राणि सर्वत्र भवेयुः प्रेषितान्यथ ॥ २७ ॥

भगवान् ही जाने कि ऐसे कितने परिपत्र चोरीसे जहाँ तहाँ भेजे गये होंगे ॥ २७ ॥

तानि सर्वाणि पत्त्राणि ज्ञातुं शक्यानि केनचित्।
भविष्यन्ति महोपायैरपि नेति सुनिश्चितम् ॥ २८ ॥

उन सब पत्रोंको कोई किसी भी उपायसे जान सके, यह शक्य नहीं है ॥ २८ ॥

सत्प्रतिष्ठो मया पन्थाः शासनायोपदिश्यते ।
गच्छत्तेन पथा नैतत्कदाचिदपि दोष्यति ॥ २९ ॥

मैं सर्कारको एक बहुत प्रतिष्ठित मार्ग बताता हूँ। उस मार्गसे जानेसे वह कभी दूषित नहीं होगी ॥ २९ ॥

प्रजामतं प्रयत्नेन स्वपक्षे कर्तुमीहितम् ।
साधनैरखिलैरेव प्रचारस्तेन तायताम् ॥ ३० ॥

यदि प्रजामत अपने पक्षमें लेना हो तो सर्कारको चाहिये कि सब साधनोंसे प्रचार करे ॥ ३० ॥

**पश्चात्तमनुरुध्यैव प्रजामतविनिर्णयम् ।**
**शासनं कुरुतां कार्यं तत्र नास्ति क्षतिर्मम ॥ ३१ ॥**

पश्चात् उसी प्रजाके निर्णयके अनुसार सर्कार कार्य करे तो मेरी कोई हानि नहीं है ॥ ३१ ॥

**विज्ञातुं च मतं प्राजं मतसंख्यानमिष्यताम् ।**
**अनिह्नुतमथाऽन्योऽपि कोपि मार्गोऽवलम्ब्यताम् ॥ ३२ ॥**

प्रजामत जाननेके लिये मतकी स्पष्टरूपमें गणना होनी चाहिये । अथवा कोई दूसरा मार्ग लेना चाहिये ॥ ३२ ॥

**प्रजामतमनुसृत्य संजातं निर्णयं सभा ।**
**अविरोधं प्रमोदेन शिरसा स्वीकरिष्यति ॥ ३३ ॥**

प्रजामतके अनुसार जो निर्णय होगा उसे महासभा बिना किसी विरोधके प्रसन्नतासे सिरपर चढ़ावेगी ॥ ३३ ॥

**एतदेव भवेदुक्तं वस्तुतो लोकशासनम् ।**
**नैतत्तु साम्प्रतं यच्च प्रवृत्तं निन्द्यवेषकृत् ॥ ३४ ॥**

इसीका नाम वस्तुतः लोकशासन है । आज जो लोकशासनका रूप है वह तो अत्यन्त गन्दा है ॥ ३४ ॥

**एतादृशानि पत्त्राणि भारतात्सितचर्मणाम् ।**
**गमनं द्रढयन्त्येव शतधाऽथ सहस्रधा ॥ ३५ ॥**

ऐसे ही पत्र अंग्रेजोंका भारतसे चले जानेके सिद्धान्तको सैकड़ों और हजारों प्रकारसे दृढ़ बनाते हैं ॥ ३५ ॥

**नेमामभ्यर्थनां विद्यान्मुखादेव विनिस्सृताम् ।**
**वेदनादूनचित्तानामाविर्भूतां मनस्तलात् ॥ ३६ ॥**

इस मेरे निवेदनको केवल मुखसे निकला हुआ न समझा जाय। यह तो दुःखित चित्तवालोंके मनसे निकला हुआ निवेदन है ॥ ३६ ॥

दासस्य सदृशैरन्यैर्दासैश्चापीति मन्यताम् ।
देशद्रोहात्परेणापि पथा स्यात्कुक्षिपूरणम् ॥ ३७ ॥

दासके समान ही दूसरे अन्य दासों को भी ऐसा समझ ही लेना चाहिये कि देशद्रोह न करके अन्य मार्गसे भी अपना पेट वह भर सकते हैं ॥ ३७ ॥

फ्रेड्रिक्पकल्कृता येयं विज्ञप्तिर्देशनाशिनी ।
अनुयायित्वमस्या नो कैङ्कर्याङ्गं हि विद्यते ॥ ३८ ॥

फ्रेडरिक् पकल्ने जो यह देशका नाश करनेवाली सूचना भेजी है वह यह नहीं सूचित करती है कि दास उसमें विश्वास रखते हैं। किन्तु वह तो गुलाम है। यह सूचना भी उसी गुलामीका एक अङ्ग है ॥ ३८ ॥

यतिस्तिरस्कृत्य पकल्कृताया
अङ्गानि सर्वाणि च योजनायाः ।
सिताङ्गदुर्मानसजातनीतिं
प्रकाश्य सर्वेषु जयत्यलं सः ॥३९॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
पञ्चदशः सर्गः

पकलकी योजनाके सब अङ्गों-विभागोंका तिरस्कार करके अंग्रेजोंके दुष्ट मनकी नीतिको सबके समक्ष प्रकाशित करके महात्माजी विजयी हो रहे हैं ॥ ३९ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
स्वोपज्ञभारतराष्ट्रभाषाटीकायां पारिजातापहारे
पञ्चदशः सर्गः ।

# षोडशः सर्गः

लन्दने प्रकाश्यमानवृत्तपत्त्रमेककं,
न्यूस् क्रॉनिकल् प्रसिद्धिमत्परं प्रसादनम् ।
प्रातिनिध्यमादधच्च तस्य कोपि संगतो,
मुम्बईपुरीं ययौ महर्षिसंनिधौ हि सः ॥ १ ॥

लन्दनमें न्यूस क्रॉनिकल् नामक एक समाचारपत्र प्रकाशित होता है। उसके कोई एक प्रतिनिधि बम्बईमें आये और श्रीमहात्माजीके पास गये ॥ १ ॥

प्राप्य लोकवन्दितं महायशःपयोनिधिं,
सादरं प्रणम्य तस्य पादकञ्जयोर्मुदा ।
प्रश्नराशिमार्पयत्स्वचित्तशान्तिकारणा-,
च्छ्लेतदेह आनतः स सभ्यतापुरस्सरम् ॥ २ ॥

उसने महात्माजीके पास जाकर सभ्यताके साथ उनके चरणोंमें प्रणाम करके अपने चित्तकी शान्तिकेलिये कितने ही प्रश्न पूछे ॥ २ ॥

गन्तुमादिशद्भवानितः सितांश्च शासनं,
शक्यते कथं गतिं विधातुमाशु तैस्त्वितः ।
राज्यभार आहितोद्य कुत्र तैर्निधीयतां,
सादरं निवेद्य सोथ मौनितामुपागमत् ॥ ३ ॥

आपने अंग्रेजोंको और अंग्रेजी सर्कारको यहाँसे चले जानेकी आज्ञा दी है परन्तु वह जल्दी कैसे जा सकते हैं ? राज्यके भारको वह किसे सौंपें ? इतना आदरसहित पूछकर वह चुप हो गये ॥ ३ ॥

श्रीमतां च धीमतां सदैव सेवितो यतिः,
प्राब्रवीच्च नीतिशास्त्रसम्मितं वचः खलु ।

चारु चिन्तनं विधाय गन्तुमादिशं सितान्,
भारताच्च तद्वियोगदुःखजन्यदुःखितः ॥ ४ ॥

श्रीमानों तथा विद्वानोंसे सेवित श्रीमहात्माजी बोले कि मैंने बहुत ही सोच विचार करके ही अंग्रेजोंको यहाँसे जानेकेलिये कहा है। उनके वियोगका दुःख मुझे भी है ॥ ४ ॥

ईहितास्ति भारताद्गतिः सितत्वचामये,
तेन वक्तुमिष्यते तथाविधं पुनः पुनः।
तैरपीह भोत्स्यते रहस्यमस्य पूर्णतो,
नाधुना परं गतेषु वत्सरेषु तत्त्वतः ॥ ५ ॥

अंग्रेजोंका भारतसे जाना इष्ट ही है, अतः बार बार मैं उन्हें जानेके-लिये कहता हूँ। इसका आशय, अभी नहीं, कुछ वर्षोंके बाद वह भी पूर्णरूपसे अवगत करेंगे ॥ ५ ॥

प्रज्वलद्धुताशने वयं समे स्म आहुता,
मुक्तिमालभामहे गतेषु चैव तेष्वितः।
येन हेतुनापतन्ति संकटानि मानवे,
नास्तितैव तस्य तानि दूरतः क्षिपत्यलम् ॥६॥

इस समय हम सब जलती आगमें डाल दिये गये हैं। अंग्रेजोंके जानेपर ही हम इस अग्निसे मुक्त हो सकते हैं। जिस कारणसे मनुष्यपर संकट आते हैं उसके अभावमें ही वह संकट दूर होते हैं ॥ ६ ॥

मोहतः प्रलोभतश्च साधयन्तु नो गतिं,
तेधुना ततो भविष्यतीह या दशात्र नः।
सर्वथैव भूतभाविवर्तमानसंस्थिति—
ज्ञानवानवैति तां महेश एव केवलः ॥ ७ ॥

मोहसे अथवा लोभसे भले अंग्रेज आज यहाँसे न जायँ, परन्तु उनके न जानेसे हमारी जो दशा होगी उसे तो त्रिकालज्ञ भगवान् ही जानता है ॥ ७ ॥

राज्यकार्यभारदानपात्रचिन्तनेन ते,
पीडिता भवन्ति केन हेतुना मुधाधुना।
हिन्दुमुस्लमानयोर्गलेद्यदीह भेदिता,
चिन्तया तदा ह्यलं परन्तु सास्ति नाधुना॥ ८॥

राज्यके कार्यके भारको किसे सौंपा जाय इस चिन्तासे वह व्यर्थमें क्यों दुःखी होते हैं! यदि यहाँ हिन्दू-मुसलमानोंका भेद गलित हो जाय तो, चिन्ताका कोई कारण नहीं रहता। वही तो नहीं है॥ ८॥

पादयोर्महेश्वरस्य भारतीयमेदिनीं,
यान्तु ते समर्प्य भक्तिभावमाश्रिता इतः।
अस्त्वराजकत्वमत्र विग्रहेण भूयतां,
लुण्ठनं परस्परं प्रवर्ततां च भारते॥ ९॥

वह भारतदेशको भगवान्‌के चरणोंमें सौंपकर चले जायँ। भले ही यहाँ अराजकता फैले, युद्ध हों और परस्पर लूटपाट हो॥ ९॥

अल्पकालमेव लुण्ठनादिकं प्रवर्त्स्यति,
सत्यनिष्ठ एष देश एकतां गमिष्यति।
पुनर्जगाद पृच्छकः स सत्यसद्मसन्निधिं,
प्रणम्य तत्पदाब्जयोः स्वसंशयापनुत्तये॥१०॥

थोड़े ही समय तक लूट-पाट यहाँ चलेगा फिर तो यह सत्यनिष्ठ देश एक हो जायगा। उस प्रतिनिधि भाईने पुनः चरणोंमें प्रणाम करके अपने संशयको दूर करनेकेलिये श्रीमहात्माजीसे पूछा॥ १०॥

नो भवान्समीहते सितान्विधातुमुद्व्यथा—
नस्ति चेदिदं वचस्त्वयेरितं परं ध्रुवम्।
स्यात्कथं तदाज्ञया समञ्जसं वचस्त्विदं,
पीडिता भवेयुरेव चेद्व्रजेयुरद्य ते॥ ११॥

यदि आप अंग्रेजोंको दुःखित करना नहीं चाहते हैं, यह आपका

वचन सत्य है तो इस आज्ञाके साथ यह वचन संगत कैसे हो सकता है? क्योंकि यदि वह आज जायँ तो अवश्य ही दुःखी होंगे ॥ ११ ॥

अब्रवीद्यतीश्वरो व्रजेयुरद्य ते यदि,
स्वेच्छयैव भारतं विहाय बुद्धिभास्वराः ।
व्याकुलीप्रकुर्महे न तान्वयं कथंचन,
व्याकुला न ते भवेयुरेतदस्ति मे मतम् ॥१२॥

श्री महात्माजीने कहा कि वह बुद्धिमान् अंग्रेज यदि आज स्वेच्छासे भारत छोड़कर चले जायँ तो न तो हम उन्हें व्याकुल करें और न वह व्याकुल बनें, ऐसा मेरा मत है ॥ १२ ॥

निष्प्रयोजनं प्रजा निबध्य संप्रपीड्य वा,
लभ्यते न कोपि लाभ ऐहिकोपि तैः परः ।
ते सरेयुरद्य चेच्छिवं भवेत्समन्तत—
स्तेभ्य एव भारतेभ्य एष मे मनोरथः ॥ १३ ॥

विना प्रयोजनके प्रजाको बन्धनमें डालकर, हैरान करके वह भी कोई बड़ा लाभ तो नहीं प्राप्त कर रहे हैं। यदि वह यहाँ से चुपचाप चले जायँ तो उन्हें भी और भारतीय प्रजाको भी सब प्रकारसे कल्याण ही प्राप्त होगा ॥ १३ ॥

द्वेषमत्र रोषमत्र सर्वथानुभूय न—
स्ते स्थितिं यदीह कामयन्त इत्यनारतम् ।
दुःखहेतुरेषु तेषु शान्तितो गतेषु तु,
स्यादनाकुलत्वमेव सर्वथेति सर्वशम् ॥ १४ ॥

यहाँपर हमारे द्वेष और क्रोधका अनुभव करके भी यदि वह यहाँ रहना चाहते हैं तो यह दुःखका ही कारण है। परन्तु यदि वह शान्तिसे चले जायँ तो व्याकुलता भी न होगी और सुख भी होगा ॥ १४ ॥

भूय उक्तवाञ्शुचिस्मितं स तं महेश्वरं
निर्गतेषु तेषु भारतादराजशालिनः ।

को वसूनसूनपीह रक्षितुं भवेत्क्षयः ।
प्रोच्य वाचमर्थभाजमास्त मौनमेव सः ॥ १५ ॥

मुस्कुराते हुए श्रीमहात्माजीसे फिर उस प्रतिनिधिने कहा कि यदि अंग्रेज चले जायँ तो भारतमें कोई राजा नहीं रह जायगा। तब लोगोंके धन और प्राणोंकी रक्षा कौन करेगा? अर्थयुक्त इतना बोलकर वह चुप हो गये ॥ १५ ॥

तद्वचो निशम्य भूय ऊच एव सद्यति—
लुण्ठने विलुञ्चने मिथोवधेपि न क्षतिः।
अल्पकालमत्र कालयुद्धमुत्थितं भवे—
च्छान्तिरेव भूयसी प्रवर्त्स्यतीह तत्परम् ॥ १६ ॥

उसकी बात सुनकर श्रीमहात्माजी पुनः बोले कि लूट, फाट, परस्पर मारकाटसे कोई विशेष हानि नहीं है। थोड़े समय तक यह कालयुद्ध = मारफाड़की लड़ाई चलेगी, पश्चात् अत्यन्त शान्ति यहाँ हो जायगी ॥१६॥

दीर्घकालतो भयं विनिह्नुतं स्थितं परं,
सह्यमत्र भूतमेव दुर्भगत्वमस्य तत्।
अप्रतीत एव सर्वथैष रोग आस्थितः,
स प्रतीयमानतो भयङ्करो महान् खलु ॥ १७ ॥

बहुत दिनोंसे छिपा हुआ यह भय हमको सह्य हो गया है, यह हमारा दुर्भाग्य है। छिपा हुआ रोग प्रकट रोगकी अपेक्षा अधिक भयङ्कर होता है ॥ १७ ॥

भारतं ग्रहीतुमेतु चेत्परा प्रजा यदा,
कर्तुमत्र भारतप्रजाः किमादिशेद्भवान् ।
भूय एव स प्रधीर्यतिक्षितीश्वरं परं,
प्रश्नमेतमन्तिमं ह्यपृच्छदेकमुत्तमम् ॥ १८ ॥

उस प्रतिनिधिने पुनः एक अन्तिम परन्तु उत्तम प्रश्न यह पूछा कि

यदि भारतपर अधिकार करनेके लिये कोई अन्य प्रजा आवे उस समय आप भारतीय प्रजाको क्या उपदेश देंगे ? ॥ १८ ॥

आह तं मुनीश्वरः कृतार्थयन्विदेशिनं,
विद्यतेत्र कारणं सिताङ्गशासनं महत् ।
अन्यदेशसंक्रमाय भारतेष्वनारतं,
ह्यामिषांशसत्तया पतत्रिणां समागतिः ॥ १९ ॥

श्री महात्माजीने कहा कि अन्य देश हमारे देशपर आक्रमण करे, इसमें सबसे बड़ा कारण अंग्रेजी राज्य ही है। क्योंकि मांस हो तभी पक्षी आते हैं। यह हमारे देशको दबाये बैठे हैं अतः दूसरे भी दबानेकी इच्छा कर सकते हैं। यह चले जाएँ तो यह भय ही निर्मूल हो जाय ॥ १९ ॥

योद्धुकाम आङ्गलैः पराक्रमेव नो भुवं,
भारतीं यदि श्रिताधिलोभमोहदोषकः ।
तन्निवारणेपि भारतीयसत्प्रजा अहं,
शिक्षयेय मार्गमेतमाश्रितोस्ति यो हि वः ॥ २० ॥

अंग्रेजोंके साथ लड़नेकेलिये यदि कोई लोभवश या मोहवश भारतपर आक्रमण करेगा तो मैं भारतीय प्रजाको वही शिक्षा दूँगा जो कि आप लोगोंके विरुद्ध उन्हें शिक्षा देता हूँ ॥ २० ॥

इमां भुवमथाक्रमेत सितकायरागादितो,
बलादपि तदा मया त्वसहयोग आदेक्ष्यते ।
भवेत्स परमास्त्रशस्त्रनिचयेन सज्जोपि वा,
परप्रियजनोस्त्वसौ भवतु वापि जापानिकः ॥ २१ ॥

अंगरेजोंसे द्वेषके कारण यदि कोई अस्त्र-शस्त्रोंसे सज्ज होकर भारतपर बलात् आक्रमण करेगा तो वह चाहे हमारा कोई अतिशय प्रियजन हो अथवा जापानी हो, मैं असहयोगका ही आदेश दूँगा ॥ २१ ॥

परन्तु बत साभिमानसितकायकास्तेषु चेत् ,
प्रहारमिह कुर्युरेव निशितास्त्रशस्त्रादिकैः ।

प्रभावरहितो भवेदसहयोग आत्यन्तिके,
विरोध उपजात एव मम तीक्ष्णशस्त्रं ननु ॥ २२ ॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
षोडशः सर्गः

परन्तु यदि अभिमानी अंग्रेजोंने अपने तीक्ष्ण अस्त्र-शस्त्रोंसे उनपर प्रहार किया तब तो अत्यन्त विरोध हो जानेपर यह हमारा असहयोगरूप तीक्ष्णशस्त्र भी प्रभाव शून्य हो जायगा ॥ २२ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
षोडशः सर्गः



# सप्तदशः सर्गः

पूर्णभारतवर्षीयराष्ट्रसंसन्महासदः ।
अगस्तमासस्याष्टम्यां मुम्बापुर्यामुपाविशत् ॥ १ ॥

अखिल भारतवर्षीय राष्ट्रीय महासभाकी महासमिति ८ वीं अगस्तको बम्बईमें इकट्ठी हुई ॥ १ ॥

सदस्यानां च सर्वेषां गृहीत्वा हार्दसम्मतिम् ।
तया प्रस्ताव एकोऽयं स्वीकृतोऽधोनिदर्शितः ॥ २ ॥

सब सदस्योंकी हार्दिक सम्मति लेकर उसने निम्नलिखित एक प्रस्ताव स्वीकृत किया ॥ २ ॥

जुलायीमाश्चतुर्दश्यां वर्धाख्ये नगरे वरे ।
जातं प्रस्तावमादृत्य समितिः कार्यवाहिका ॥ ३ ॥
महासमितिमापृच्छत्स्वीकर्तुं तं यथायथम् ।
तेनैषा समितिस्तत्र समतानीद्विचारणाम् ॥ ४ ॥

ता० १४-७ को वर्धामें जो प्रस्ताव हुआ था उसके अनुसार कार्यकारिणी समितिने उस प्रस्तावको स्वीकृत करनेकेलिये पूछा, इससे इस समितिने विचार किया ॥ ३–४ ॥

युद्धस्थितौ समायातमुत्तरोत्तरमन्वहम् ।
परिवर्तनमप्येषा निरपेक्षममीमनत् ॥ ५ ॥

युद्धकी परिस्थितिमें जो दिन प्रतिदिन उत्तरोत्तर परिवर्तन हुआ था उसपर भी इस समितिने निरपेक्ष भावसे विचार किया ॥ ५ ॥

ब्रैटिशस्यात्र राज्यस्य प्रतिष्ठितजनैरपि ।
उच्चारितानि बहुशो वचनानि व्यचीचरत् ॥ ६ ॥

ब्रिटिश राज्यके प्रतिष्ठित लोगोंने अनेक बार जो वचन कहे थे उनपर भी विचार हुआ ॥ ६ ॥

निर्णयं तं पुरस्कृत्य भारतीयनृणामपि ।
विदेशिविदुषां चापि निरैक्षिष्ट विवेचनाः ॥ ७ ॥

उस निर्णयको समक्ष रखकर भारतीयों और विदेशीय विद्वानोंने जो विवेचना की थी उसका भी अवलोकन किया गया ॥ ७ ॥

महासमितिरेषाद्य प्रस्तावं परिचिन्त्य तम् ।
स्वीकरोति गतव्याजं सर्वेषामेव शङ्करम् ॥ ८ ॥

यह महासमिति उस निर्दोष अत एव सबका कल्याण करनेवाले प्रस्तावको विचारकर स्वीकार करती है ॥ ८ ॥

भूताहेषु घटना या घटिता भारतावनौ ।
समर्थयन्ते ताश्चापि प्रस्तावस्यास्य योग्यताम् ॥ ९ ॥

भूतकालमें भारतमें जो घटनाएँ हुई हैं वह इस प्रस्तावकी योग्यताका समर्थन करती हैं ॥ ९ ॥

मित्त्रभूपमनःकामसिद्धये भारतस्य च ।
कल्याणायापि वाञ्छया स्याच्छ्वेतराज्यपराहतिः ॥ १० ॥

मित्रराजाओंके मनोरथकी सिद्धि तथा भारतके कल्याणकेलिये अंग्रेजी राज्यका यहाँ से उठ जाना वाञ्छनीय है ॥ १० ॥

अनेन शासनेनात्र भारतावनतिः परा ।
भवत्येव तथा नित्यं वर्धते शक्तिसंक्षयः ॥ ११ ॥

इस शासनके द्वारा भारतकी नित्य महती अवनति होती है और शक्तिका विनाश बढ़ता जा रहा है ॥ ११ ॥

रशियाचीनयोर्ज्ञात्वा निकृष्टां युद्धसंस्थितिम् ।
शोचत्येषा तयोः शौर्यमादरेण च वीक्षते ॥ १२ ॥

रशिया और चीनकी खराब युद्धस्थिति जानकर यह सभा शोक करती है और उन दोनोंकी वीरताको आदरसे देखती है ॥ १२ ॥

वर्धमानं भयं वीक्ष्य स्वातन्त्र्याय प्रयस्यताम् ।
देशानां विषये नीतिर्ब्रैटिशी नार्थसाधिका ॥ १३ ॥

बढ़ते हुए भयको देखकर स्वतन्त्रताकेलिये प्रयास करनेवाले देशोंके सम्बन्धमें ब्रिटिशकी नीति कार्यसाधक नहीं है ॥ १३ ॥

नीत्याऽनयैव बहुशो नैष्फल्यं दुःखकारणम् ।
ब्रिटिशेनाद्य सर्वत्राऽऽलिङ्गितं हि पुनः पुनः ॥ १४ ॥

इसी नीतिके कारण ब्रिटिशने आज सर्वत्र बार-बार असफलताका आलिङ्गन किया है जो दुःखका कारण है ॥ १४ ॥

नीतिरेषा न कल्याणी केवलं स्वार्थसाधिका ।
स्वातन्त्र्यस्यास्ति संहर्त्री वर्धयित्री च दासताम् ॥ १५ ॥

यह नीति स्वार्थपूर्ण होनेके कारण अच्छी नहीं है, इतना ही नहीं, प्रत्युत यह स्वतन्त्रताका संहार करनेवाली और दासताको बढ़ानेवाली भी है ॥ १५ ॥

साम्राज्यस्य सुरक्षायै प्रजानां पीडनाय च ।
सांस्थानिकप्रजानां च नाशनाय भवेदसौ ॥ १६ ॥

साम्राज्यकी रक्षाके लिये, प्रजाको पीड़ित करनेके लिये और सांस्थानिक प्रजाके नाशके लिये ही यह नीति हो सकती है ॥ १६ ॥

भारभूतं सिताङ्गानां विशप्तमिव दुर्बलैः ।
साम्राज्यं शासकीं शक्तिं विधुनोति दिने दिने ॥१७॥

दुर्बलों द्वारा जिसे शाप दिया गया है और जो अंग्रेजोंके लिये भाररूप है वह साम्राज्य दिनोंदिन अपनी शासन शक्तिको खो रहा है ॥ १७ ॥

सर्वेषां प्रश्नराशीनां भारतं निकषायितम् ।
अस्य बन्धेन दुर्भावो ब्रिटिशस्य प्रकाशते ॥ १८ ॥

सब प्रश्नोंके लिये भारतवर्ष कसौटी जैसा है। इसको बन्धनमें रखनेसे अंग्रेजोंका दुर्भाव प्रकट होता है ॥ १८ ॥

श्वेतशासनसंहारे जाते भारतवर्षतः ।
मित्रभूपैर्भवेज्जेयं युद्धमेतत्प्रवृत्तिमत् ॥ १९ ॥

भारतसे अंग्रेजी राज्यके जानेपर ही मित्रराज्य इस युद्धको जीत सकते हैं ॥ १९ ॥

लोकशासनवादस्य साफल्यं केवलं भवेत् ।
श्वेताङ्गा भारताद्द्य गच्छेयुश्चेत्सशासनाः ॥ २० ॥

यदि अंग्रेज और अंग्रेजीराज्य आज भारतसे चले जाँय तो लोकशासनवादकी सफलता हो सकती है ॥ २० ॥

नाज़ी-फ़ासी-महाराज्य-स्वातन्त्र्याणां च संयुगे ।
स्वतन्त्रं भारतं स्वीयैः साधनैर्जयवद्भवेत् ॥ २१ ॥

नाज़ीवाद, फ़ासीवाद, महाराज्य, तथा स्वतन्त्रताके युद्धमें स्वतन्त्र भारत अपनेही साधनोंसे विजयी हो सकता है ॥ २१ ॥

पारतन्त्र्याच्च देशस्य भारतस्य विमोचनात् ।
युध्येतस्यां पराधीनप्रजासु स्यान्महद्बलम् ॥ २२ ॥

भारतको परतन्त्रतामें से छुड़ा लेनेके कारण इस युद्धमें पराधीन प्रजाओंका बल बहुत हो जायगा ॥ २२ ॥

पापीयःपारतन्त्र्याख्यमहारोगनिवारणात् ।
सर्वाः प्रजा विमुक्ताः स्यु सन्ति या भूमिमण्डले ॥ २३ ॥

महापापी परतन्त्रतारूप रोगके निवारण करनेसे पृथ्वीकी सभी प्रजाएँ मुक्त हो जायँगी ॥ २३ ॥

सकलानां प्रजानां स्याद्भारतं मित्रमुत्तमम् ।
भूमौ ता अपि भूयासुराध्यात्मिकविनायकाः ॥ २४ ॥

भारत सभी प्रजाओंका उत्तम मित्र है। पृथिवीपर वह प्रजाएँ भी अध्यात्मिक तत्त्वको बनानेवाली बन जायँगी ॥ २४ ॥

यदि बन्धनबद्धं स्याद्भारतं सुचिरं तदा ।
सार्वभौमप्रतीकत्वं व्यक्तं स्यास्यति शाश्वतम् ॥ २५ ॥

यदि भारत बहुत दिनोंतक बन्धनमें बँधा हुआ ही रहे तो सार्वभौमका प्रतीक नित्य व्यक्त रहेगा ॥ २५ ॥

तस्य साम्राज्यवादस्य मित्त्रराज्येषु लाञ्छनम् ।
अपरेष्वपि निश्शङ्कं भवेत्तत्प्रतिभासितम् ॥ २६ ॥

वह साम्राज्यवाद मित्रराज्यों पर कलङ्क है। दूसरे राज्योंपर भी उसका प्रभाव पड़ सकता है ॥ २६ ॥

अद्यागतं भयं वीक्ष्य स्वातन्त्र्यं भारतक्षितेः ।
आवश्यकं भवत्याशु नश्यतु श्वेतशासनम् ॥ २७ ॥

आज आये हुए भयको देखकर भारतकी स्वाधीनता आवश्यक हो गयी है। अतः शीघ्र ही अंग्रेजी राज्यको यहाँसे नष्ट होना चाहिये ॥ २७ ॥

अस्मिन्नुपस्थिते काले यापि कापि प्रतिश्रुतिः ।
निरर्थिकैव विज्ञेया निष्प्रभावापि सा पुनः ॥ २८ ॥

इस वर्तमान कालमें जो कुछ भी प्रतिज्ञा की जाय उन सबको निरर्थक और प्रभावशून्य ही जानना चाहिये ॥ २८ ॥

हृदयानि प्रजानां सा प्रतिज्ञाऽऽवर्जितुं नहि ।
परिपुष्णाति सामर्थ्यं प्रतिज्ञासमयो गतः ॥ २९ ॥

वह प्रतिज्ञा प्रजाके हृदयोंको झुकानेमें समर्थ नहीं है। प्रतिज्ञाका समय ढल चुका है ॥ २९ ॥

परिवर्तनमानेतुं तत्क्षणं योधनस्थितौ ।
स्वातन्त्र्यजसमुत्साहैर्जनानां कोटयः क्षमाः ॥ ३० ॥

युद्धकी परिस्थितिमें परिवर्तन ले आनेकेलिये स्वतन्त्रतासे पैदा हुए उत्साहके साथ करोड़ों आदमी समर्थ हैं ॥ ३० ॥

महासमितिरेषाऽतो गन्तुं भारतवर्षतः ।
श्वेतानां शासनं सद्यो भूयो भूयो ब्रवीत्यलम् ॥ ३१ ॥

अतएव यह महासमिति अंग्रेजोंकी हुकूमत यहाँसे उठ जाय, इसे बारंबार कहती है ॥ ३१ ॥

स्वातन्त्र्ये घोषिते सद्योऽस्थायि राष्ट्रियशासनम् ।
संघटितं भवेत्सर्वपक्षप्रकृतिसम्मतम् ॥ ३२ ॥

स्वतन्त्रताकी घोषणा करनेके पश्चात् सर्वपक्षकी प्रजाको अभिमत हो ऐसी एक अस्थायी सर्कार स्थापित की जायगी ॥ ३२ ॥

स्वतन्त्रं भारतं स्वीयैर्युद्धेऽस्मिन्सर्वसाधनैः ।
साहाय्यं रचयेन्मित्रभूपालानां निरङ्कुशम् ॥ ३३ ॥

स्वतन्त्र भारत अपने समस्त साधनोंसे इस युद्धमें मित्रराजाओंकी सहायता करेगा ॥ ३३ ॥

अहिंसकबलेनापि शस्त्रास्त्रबलतोऽपि च ।
मित्त्रभूपतिभिः सार्धं द्विषतां बलमर्दयेत् ॥ ३४ ॥

अहिंसक शक्तिसे तथा अस्त्र-शस्त्रोंसे भी मित्रराजाओंके साथ मिलकर शत्रुओंके बलको भारत नष्ट कर सकेगा ॥ ३४ ॥

यत्र कुत्रापि लग्नानां क्षेत्रेषूद्योगसद्मसु ।
श्रमिणां कर्मिणा श्रेयो भवेत्साधितमादितः ॥ ३५ ॥

खेतोंमें या कल-कारखानोंमें लगे हुए जो मजदूर हैं प्रथम, उनकी सुख-शान्तिका विचार किया जायगा ॥ ३५ ॥

लोकानां प्रातिनिध्याढ्यां सभां काञ्चिदनुत्तमाम् ।
नियोजयिष्यते शीघ्रमिदमस्थायि शासनम् ॥ ३६ ॥

यह अस्थायी सर्कार शीघ्र ही किसी सर्वोत्तम लोक प्रतिनिधि सभाकी योजना करेगी ॥ ३६ ॥

भविष्यति प्रणीतैव प्रजाशासनपद्धतिः ।
सभया च समवायतन्त्रानुगुणिता शिवा ॥ ३७ ॥

वह सभा, समवायतन्त्रके अनुकूल लोकशासनपद्धतिकी स्थापना करेगी ॥ ३७ ॥

तस्मिन्नेव समवायतन्त्रे सम्मिलिताः समे ।
प्रायेण शासने प्रान्ता भवेयुः साधिकारकाः ॥ ३८ ॥

उसी समवायतन्त्रमें सम्मिलित होकर सब प्रान्त हुकूमतके विषयमें अधिकार प्राप्त करेंगे ॥ ३८ ॥

अवशिष्टा अधिकाराः संघतन्त्रवशानुगाः ।
सुरक्षिता भविष्यन्ति सर्वदुःखापहारकाः ॥ ३९ ॥

अवशिष्ट रहे जो समवायतन्त्रके अनुकूल अधिकार हैं वह सुरक्षित रहेंगे ॥ ३९ ॥

प्रजानां प्रतिनिधिभिर्भारतस्य भविष्यति ।
मित्रीभूतमहीपालैः सम्बन्धोऽपि विधास्यते ॥ ४० ॥

भविष्यमें भारतीय प्रजाके प्रतिनिधि मित्रराजाओंके साथ सम्बन्ध-स्थापन भी करेंगे ॥ ४० ॥

प्राप्तमुक्ति झटित्येव प्रजाशक्तिसमायुतम् ।
भारतं प्रतिकुर्वीत शत्रुदारुणसंगरम् ॥ ४१ ॥

स्वतन्त्र होकर, प्रजाशक्तिके साथ भारतवर्ष शीघ्र ही शत्रुओंके साथ भयङ्कर संग्राम खेलेगा ॥ ४१ ॥

खण्डशो यदि विच्छिन्ना भारतस्य विशृङ्खला ।
एशियाफ्रिकयोश्चापि प्रजाः स्युर्मुक्तबन्धनाः ॥ ४२ ॥

यदि भारतका बन्धन टुकड़े-टुकड़े नष्ट हो जाय अर्थात् सर्वथा भारत स्वतन्त्र हो जाय तो एशिया और अफ्रीकाकी प्रजा भी बन्धनसे मुक्त हो सकेगी ॥ ४२ ॥

ब्रह्मदेशो मलाया च हिन्दचीनस्तथाकृते ।
डचद्वीपसमूहश्च बन्धनान्मुक्तिमाप्नुयुः ॥ ४३ ॥

ब्रह्मदेश, मलाया, हिन्दचीन, डचद्वीपसमूह यह सब बन्धनसे तब छूट सकेंगे ॥ ४३ ॥

ईरानेराकयोश्चापि स्वातन्त्र्यं स्यान्निरर्गलम् ।
न बन्ध्यो बन्धनं नापि नापि बद्धा भवेत्तदा ॥ ४४ ॥

ईरान और ईराक्का बन्धन भी टूट जायगा । उस दशामें बन्धन, बध्य (बँधनेवाला) बन्धक (बांधनेवाला), कोई भी नहीं रह जायगा ॥४४॥

परिकीर्तितदेशेषु येऽद्य जापानशासने ।
ते संस्थाप्या भवेयुर्नो औपनीवेशतन्त्रके ॥ ४५ ॥

गिनाये हुए देशोंमें जो देश आज जापानकी हुकूमतमें हैं वह सब उपनिवेशतन्त्रमें मिला लिये जायँगे ॥ ४५ ॥

अस्मिन्भयप्रदे काले प्राधान्येनास्ति केवलम् ।
आत्मबन्धनविच्छेदचिन्तैका भारतक्षितेः ॥ ४६ ॥

इस भयङ्कर समयमें केवल भारतकी स्वतन्त्रताकी ही मुख्य चिन्ता है ॥ ४६ ॥

तथापि जगतः शान्त्यै व्यवस्थायै च निर्मितिः ।
निर्बन्धराष्ट्रसंघस्य समितेरस्ति सम्मता ॥ ४७ ॥

तो भी जगत्की शान्ति और व्यवस्थाके लिये स्वतन्त्र राष्ट्रसंघकी स्थापना तो महासभाकी समितिको स्वीकृत ही है ॥ ४७ ॥

एतादृशेन तन्त्रेण विना शान्तिर्भवस्य नो ।
भविष्यति कदापीति विचिकित्स्यं न कैरपि ॥ ४८ ॥

ऐसे तन्त्रके बिना जगत्में कभी भी शान्ति स्थापित नहीं हो सकेगी, इसमें किसीको सन्देह नहीं करना चाहिये ॥ ४८ ॥

एतत्तन्त्रं प्रजाः सर्वा एतत्तन्त्रानुगामिनीः।
शोषणाक्रमणाभ्यां च रक्षिष्यति समन्ततः ॥ ४९ ॥

इस तन्त्रको माननेवाली प्रजाओंको यह तन्त्र शोषण और आक्रमणसे सब प्रकारसे बचावेगा ॥ ४९ ॥

रक्षणं स्वल्पसंख्यानां प्रजानां च करिष्यति।
अधो निपतितान्देशांस्त्रास्यते पतिताः प्रजाः ॥ ५० ॥

अल्पसंख्यक प्रजाओंकी रक्षा तथा गिरे हुए देशों और गिरी हुई प्रजाका रक्षण भी यह तन्त्र करेगा ॥ ५० ॥

विद्यन्ते साधनान्यत्र यानि तानि विचेष्यते।
कल्याणाय समेषां तत्तन्त्रं दिव्यस्वरूपकम् ॥ ५१ ॥

वह सुन्दर समवायतन्त्र सबके कल्याणकेलिये जितने साधन हैं, उन्हें इकट्ठा करेगा ॥ ५१ ॥

एतादृशे प्रवृत्तेऽस्मिंस्तन्त्रे सर्वासु भूमिषु।
अनायासेन शस्त्राणां संन्यासः सेत्स्यति स्वयम् ॥ ५२ ॥

जब समस्त पृथिवीमें इस प्रकारका समवायतन्त्र स्थापित हो जायगा तब शस्त्रसंन्यास तो अनायास ही हो जायगा ॥ ५२ ॥

सर्वेषामेव देशानां स्वीयाः सेनाः पृथक्पृथक्।
सामुद्रं नौबलं वायुबलं सर्वं निरर्थकम् ॥ ५३ ॥

सब देशोंकी अपनी अपनी सेना, सामुद्रिक शक्ति, जहाजी शक्ति, वैमानिक शक्ति सब निरर्थक हो जायंगी ॥ ५३ ॥

विश्वसंघपरित्रात्री सेना विश्वस्य शान्तये।
भविष्यति तथारीणां प्रतीरोधं करिष्यति ॥ ५४ ॥

विश्वसंघकी संरक्षक सेना विश्वकी शान्तिके लिये रहेगी। तथा वह शत्रुओंका सामना भी करेगी ॥ ५४ ॥

स्वतन्त्रं भारतं तन्त्र एतस्मिन्मिलितं भवेत्।
अन्ताराष्ट्रियकार्येषु सहयोगं प्रदास्यति ॥ ५५ ॥

स्वतन्त्र भारत इस तन्त्रमें सम्मिलित होगा और अन्तर्राष्ट्रियकार्यमें सहयोग देगा ॥ ५५ ॥

सामवायिकतन्त्रस्य सिद्धान्तान्मौलिकान्समान्।
स्वीकर्तारश्च तन्त्रेऽस्मिन्मेलितुं शक्नुयुर्ध्रुवम् ॥ ५६ ॥

जो राष्ट्र समवायतन्त्रके मौलिक सभी सिद्धान्तोंका स्वीकार करेंगे वह अवश्य इसमें सम्मिलित हो सकेंगे ॥ ५६ ॥

इदानीं युद्धकालेषु तन्त्रमेतन्नियन्त्रितम्।
मित्रभूपेभ्य एव स्यादनिवार्यमिदं ननु ॥ ५७ ॥

इस युद्धकालमें यह तन्त्र केवल मित्रराज्योंके लिये ही अनिवार्य होगा ॥ ५७ ॥

इदानीमेव चेदेतत्सत्कार्यं स्यादनुष्ठितम्।
योधने चारियूथेषु सत्प्रभावो जनिष्यते ॥ ५८ ॥

यदि यह उत्तम कार्य अभी ही कर लिया जाय तो युद्ध और शत्रुओं पर बहुत अच्छा प्रभाव पड़ेगा ॥ ५८ ॥

शमे भविष्यमाणेऽनागते कालेऽविलम्बकम्।
प्रभावः सुमहानेव सम्पतिष्यति निश्चितम् ॥ ५९ ॥

भविष्यकालमें जब शान्ति होगी तब इसका शीघ्र ही बहुत बड़ा प्रभाव पड़ेगा ॥ ५९ ॥

अनुभूयापि दुःखानि युद्धजन्यानि भूरिशः।
श्रद्दधतेऽल्प एवात्र तच्च दुःखाय केवलम् ॥ ६० ॥

युद्धके अनेक दुःखोंका अनुभव करके भी बहुत थोड़े लोग हैं जो इस योजनाके विषयमें श्रद्धा रखते हैं। यह केवल दुःखका विषय है॥६०॥

श्वेतशासनमुद्भूतैर्दर्शितैः प्रतिकर्मभिः ।
स्वातन्त्र्याभ्यर्थनं हैन्दं विरुन्धानं प्रतीयते ॥ ६१ ॥

दिखायी गयी हुई उत्पन्न प्रतिक्रियाओंके कारण हिन्दकी स्वाधीनता-की माँगका अंग्रेजी राज्य विरोध करता हुआ प्रतीत हो रहा है ॥ ६१ ॥

वैदेशिकसमाचारपत्रसम्पादकैरपि ।
टिप्पणीभिः स्वकीयाभिः शासनं नीयतेऽपथम् ॥ ६२ ॥

विदेशी समाचारपत्रोंके सम्पादक भी अपनी टीका टिप्पणीके द्वारा सर्कारको कुमार्गमें ले जा रहे हैं ॥ ६२ ॥

भारताभ्यर्थनाऽस्त्येषा विपद्भ्यः स्वं विरक्षितुम् ।
रशियाचीनयोश्चापि समाहर्तुं सहायताम् ॥ ६३ ॥

भारतकी यह माँग अपनेको विपत्तिमेंसे बचाने तथा रशिया और चीनकी सहायता करनेके लिये है ॥ ६३ ॥

अनयोर्देशयोरस्ति स्वातन्त्र्यमतिमूल्यकम् ।
तेन तस्याद्य कर्तव्या रक्षा परमयत्नतः ॥ ६४ ॥

इन दोनों देशोंकी स्वतन्त्रता बहुमूल्य है। अतः उसकी रक्षा आज बड़े यत्नके साथ करनी चाहिये ॥ ६४ ॥

मित्रीभूतमहीपानां शक्तिं संरक्षणात्मिकाम् ।
ह्रासयितुं न वाञ्छास्ति समितेरल्पिकाप्यथ ॥ ६५ ॥

मित्रराज्योंकी शक्तिको घटानेकी महासभाकी जरा भी इच्छा नहीं है ॥ ६५ ॥

इदानीं भारतस्यापि मित्रराजगणस्य च ।
प्रत्यहं वर्धते भीतिः सा च प्राणहरी भवेत् ॥ ६६ ॥

आज भारत और मित्रराज्योंका भय दिन-दिन बढ़ रहा है। यह प्राणनाशक हो सकता है ॥ ६६ ॥

एतादृशे विपत्काले पारदेशिकशासने।
भारतं चेद्वितिष्ठेत प्राणहानिमवाप्नुयात् ॥ ६७ ॥

ऐसे विपत्तिकालमें यदि भारत परदेशी हुकूमतके नीचे रहेगा तो मर जायगा ॥ ६७ ॥

शत्रूणां प्रतिरोधस्य भारतीयेषु संस्थिता।
शक्तिर्विकुण्ठिता भूत्वा तद्विनाशं प्रणेष्यति ॥ ६८ ॥

भारतीयोंमें शत्रुओंको रोकनेकी जो शक्ति है वह कुण्ठित होकर नष्ट हो जायगी ॥ ६८ ॥

वर्धमानं भयं नित्यं क्रमशः श्वेतचर्मणाम्।
बन्धनं भारतस्येदं नापसारयितुं क्षमम् ॥ ६९ ॥

अंग्रेजोंका क्रमशः प्रतिदिन बढ़ता हुआ भय भारतके बन्धनको दूर करनेमें समर्थ नहीं है ॥ ६९ ॥

मित्रराज्यप्रजानां नो कथंचिदुपकारकम्।
पारतन्त्र्यं भवेदद्य भारतस्य सुरक्षितम् ॥ ७० ॥

भारतकी परतन्त्रता यों ही रहेगी तो यह मित्रराज्योंकी प्रजाके लिये किसी प्रकार भी उपकारक नहीं होगी ॥ ७० ॥

एतत्सर्वं समीक्ष्यैव समितिः कार्यवाहिणी।
ब्रिटिशं भारताद्गन्तुं सद्य एव समादिशत् ॥ ७१ ॥

यह सब समझकर ही कार्यकारिणी समितिने अंग्रेजोंको भारतसे जानेकी आज्ञा दी है ॥ ७१ ॥

उत्तरं तस्य नावाप्तं समित्या श्वेतचर्मणाम्।
वैदेशिकसमाचारपत्रभ्रामितचेतसाम् ॥ ७२ ॥

विदेशीय समाचारपत्रोंने सर्कारको भ्रममें डाल दिया है इसीलिये अभी तक समितिको कोई उत्तर नहीं मिला है ॥ ७२ ॥

वृत्तपत्रैर्विदेशीयैर्भारताहितकाङ्क्षिभिः ।
विरोधो दर्शितस्तीव्रस्तामेवाभ्यर्थनां प्रति ॥ ७३ ॥

भारतके शत्रु विदेशीय समाचारपत्रोंने भारतकी इस प्रार्थनाके प्रति बहुत भारी विरोध दिखाया है ॥ ७३ ॥

प्रभुत्वं भारतस्यैभिर्नाद्यापि त्यक्तुमिष्यते ।
ज्ञातस्वध्येयसामर्थ्या प्रजा तन्न सहिष्यते ॥ ७४ ॥

भारतके ऊपरसे अपने प्रभुत्वको यह आज भी छोड़ना नहीं चाहते हैं । परन्तु आज तो भारतीय प्रजाको अपने ध्येय और अपनी शक्तिका ज्ञान हो चुका है । वह अब सहन नहीं करेगी ॥ ७४ ॥

एतस्मिंश्चरमे काले महासमितिरेषका ।
ब्रिटेनं मित्रराजांश्च प्रार्थयते पुनः सकृत् ॥ ७५ ॥

इस अन्तिम समयमें यह महासमिति ब्रिटेन और मित्रराजाओंसे एक बार पुनः प्रार्थना करती है ॥ ७५ ॥

स्वहिते विघ्नमत्यन्तं प्रापयत्तन्निरङ्कुशम् ।
शासनं प्रतिरोद्धुं नो प्रजाः स्युः प्रतिषेधिताः ॥ ७६ ॥

प्रजाको अपने लाभमें विघ्न उपस्थित करनेवाले शासनको रोकनेसे कोई निषेध नहीं कर सकता है ॥ ७६ ॥

स्वातन्त्र्यावाप्तये तस्माद्भारतं शौर्यपूर्वकम् ।
युध्येत शासनेनाद्य समितेरिति घोषणा ॥ ७७ ॥

अतः स्वतन्त्रता प्राप्त करनेके लिये भारत वीरताके साथ अंग्रेजी राज्यसे युद्ध करेगा, यह महासमितिकी घोषणा है ॥ ७७ ॥

विंशत्या वत्सरैरेष देशोऽहिंसकशक्तिभिः ।
शिक्षितो योद्धुमरिभिर्योत्स्यते ताभिरद्य सः ॥ ७८ ॥

बीस वर्षोंसे अहिंसक शक्तियोंके द्वारा युद्ध करना इस देशने सीखा है। उन्हीं शक्तियोंसे आज यह लड़ेगा ॥ ७८ ॥

अस्य सात्त्विकयुद्धस्य सैनापत्यं समर्पितम्।
महात्मनि पौत्तलेये मोहने सभयाऽनया ॥ ७९ ॥

इस सात्त्विक युद्धके सेनापति पदपर इस महासमितिने श्रीमती पुत्तलिदेवीके पुत्र महात्मा मोहनदास गांधीको स्थापित किया है ॥ ७९ ॥

एतस्मिन्विकटे युद्धे ग्राह्या स्याद्या च पद्धतिः।
सा निर्णेया भवेत्तेन महावीरेण धीमता ॥ ८० ॥

इस विकट युद्धमें जो मार्गग्रहण करने योग्य होगा उसका निर्णय महावीर और बुद्धिमान् श्रीमहात्माजी ही करेंगे ॥ ८० ॥

सर्वमान्यो महात्माऽसौ महाशक्तिर्महेश्वरः।
स्वीकर्तुं प्रार्थनां चैतां मोहनः प्रार्थयिष्यते ॥ ८१ ॥

महती शक्तिवाले सर्वमान्य महात्मा श्री गांधीजीको इस प्रार्थनाको स्वीकार करनेके लिये महासमिति प्रार्थना करेगी ॥ ८१ ॥

आपतिष्यन्ति कष्टानि सोढव्यान्यखिलैरपि।
कर्तव्यं तत्तदेवात्र यन्निर्देक्ष्यति मोहनः ॥ ८२ ॥

जो भी कष्ट आवेंगे, सबको, सब सहना पड़ेगा। और करना वही होगा जिसके लिये श्रीमहात्माजी आज्ञा देंगे ॥ ८२ ॥

अनुशासनमाश्रित्य सर्वथा तस्य धीमतः।
ऐकमत्येन कार्याणि कर्तव्यानीति शोभनम् ॥ ८३ ॥

उनके अनुशासनको मानकर एकनिष्ठासे कार्य करना ही श्रेयस्कर होगा ॥ ८३ ॥

अहिंसा परमं मूलमस्य युद्धस्य भाविनः।
तस्मात्तां ज्ञानतः कोपि मा कदाप्यवजीगणत् ॥ ८४ ॥

इस भावी युद्धमें अहिंसाकी प्रधानता होगी। अतः कोई भी जान-बूझकर अहिंसाकी अवहेलना न करे ॥ ८४ ॥

विधिपत्रं महात्मासौ निर्देष्टुं शक्नुयान्न वा।
निर्दिष्टमपि निर्विघ्नं प्राप्येतोत न वाखिलैः ॥ ८५ ॥

श्रीमहात्माजी कोई विधिपत्र ( कैसे युद्ध करना, न करना, क्या करना इत्यादि ) हमको दे सकेंगे या नहीं, कौन जाने ? जिस विधिका वह निर्देश करेंगे वह भी सबको प्राप्त हो सकेगा या नहीं, यह भी कहा नहीं जा सकता ॥ ८५ ॥

नागरिक्यः समितय एतद्राज्याधिकारिभिः।
कुपितैरतिसन्तप्तैर्भवेयुः प्रतिबन्धिताः ॥ ८६ ॥

अंग्रेजी राज्यके अधिकारी गुस्सेमें आकर शहरसमितियोंको रोक सकते हैं ॥ ८६ ॥

एतादृशे समायाते काले सामान्यवाचिकम्।
अनुसृत्य स्वबुद्ध्यैव वर्तितव्यं प्रजाजनैः ॥ ८७ ॥

अतः जब ऐसा समय आ जावे तब सामान्य सूचनाओंके अनुसार ही प्रजाको व्यवहार कर लेना पड़ेगा ॥ ८७ ॥

येषां स्याद्बन्धनोच्छेदो वाञ्छितो भारतस्य तैः।
अहिंसानुगुणो मार्गः कल्पनीयो भविष्यति ॥ ८८ ॥

जो यह चाहते हों कि भारत स्वतन्त्र बने, उन्हें अहिंसाके अनुकूल मार्गमें ही चलना पड़ेगा ॥ ८८ ॥

आश्रयस्थानहीनेन कठिनेन पथाऽखिलैः।
मुक्तेरागमनाद्यावद्गन्तव्यं स्याच्छनैः शनैः ॥ ८९ ॥

मार्ग कठिन है। कोई विश्रामस्थान नहीं है। अतः जब तक स्वतन्त्रता न मिले तब तक धीरे-धीरे इसी मार्गसे चलना है ॥ ८९ ॥

कष्टं विषह्य विपुलं समुपार्जितं स्या-
त्स्वातन्त्र्य मस्य भरतक्षितिमण्डलस्य ।
यत्तत्समस्तमनुवंशजनोपभोग्यं,
नो केवलं भवतु जातु तदेकजातेः ॥ ९० ॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
सप्तदशः सर्गः

महान् कष्ट सहन करके इस भारतभूमिकी जो स्वतन्त्रता प्राप्त की जायगी वह यहाँके समस्त मनुष्योंके उपभोगके लिये होगी, केवल अमुक जातिके लिये नहीं होगी ॥ ९० ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञराष्ट्रभाषाटीकायां
सप्तदशः सर्गः



# अष्टादशः सर्गः

मोहमय्यां महासंसन्मण्डपस्थविपश्चिताम् ।
गणं निरञ्जनः श्रीमान्मध्यस्थः स व्यशोभयत् ॥ १ ॥

बम्बईमें महासमितिके मण्डपमें बैठे हुए विद्वानोंके समूहको, मध्यमें बैठे हुए निर्लेप महात्माजी शोभित कर रहे थे ॥ १ ॥

वर्धाख्यनगरे योऽसौ कार्यवाहकसंसदा ।
प्रस्तावः स्वीकृतस्तस्य स्वीकृत्यर्थमियं सभा ॥ २ ॥

वर्धामें कार्यकारिणी समितिने जो प्रस्ताव स्वीकृत किया था उसीकी स्वीकृतिलेनेके लिये बम्बई में यह महासमिति मिली थी ॥ २ ॥

सर्वेषामनुमोदेन द्वित्रानेव विना नरान् ।
वर्धाप्रस्ताव आरात्स सभया स्वीकृतोऽभवत् ॥ ३ ॥

दो तीन सदस्योंके सिवाय सभीने इस प्रस्तावका अनुमोदन किया अतः सभाने इसका स्वीकार किया ॥ ३ ॥

ततः परं महायोगी कार्मचन्द्रिः प्रतापवान् ।
व्याख्यातुं निखिलं तत्त्वं प्रस्तावस्य प्रचक्रमे ॥ ४ ॥

उसके पश्चात् श्रीमान् महात्माजीने प्रस्तावके सब रहस्योंको समझानेका आरम्भ किया ॥ ४ ॥

स्वदेशश्रेयसे यूयं प्रस्तावमिममञ्जसा ।
अन्वमन्ध्वमुपेत्यात्र धन्यवादं ततोऽर्हथ ॥ ५ ॥

स्वदेशके कल्याणके लिये आप लोगोंने यहाँ आकर इस प्रस्तावका स्वीकार किया इसके लिये आप धन्यवादके पात्र हैं ॥ ५ ॥

ऽयूनस्यात्र नृसंघस्य प्रस्तावेऽनुमतिं त्रयः ।
तृणाय मत्वा संख्याने मतानामाग्रहं गताः ॥ ६ ॥

इतने बड़े समूहमें केवल तीन मत विरुद्धमें थे। बाकी सबके मतको तृणसमान समझकर मतगणनाका इन्होंने आग्रह किया है ॥ ६ ॥

एतेषां साहसं धन्यं लज्जायै नास्ति किञ्चन।
संवत्सरगणेनैतैः शिक्षितं यच्च तत्कृतम् ॥ ७ ॥

इनके साहसको धन्य है। लज्जाके लिये स्थान नहीं है। वर्षोंसे इन्होंने जो सीखा है वही किया है ॥ ७ ॥

सहायाः सन्तु नितरामल्प एव तथापि नः।
पक्षे स्यात्सत्यमित्येव कैश्चिद्धेयं न साहसम् ॥ ८ ॥

हमारे सहायक थोड़े हैं तथापि हमारे पक्षमें सत्यता हो सकती है यह विचारकर किसीको साहस नहीं छोड़ना चाहिये ॥ ८ ॥

आचरितं महाधैर्यैर्वर्षैः पञ्चाशता मया।
आचरतस्तदेवात्र दृष्ट्वा त्रींस्तोषमावहे ॥ ९ ॥

पचास वर्षों तक महान् धैर्यके साथ जो मैंने किया है उसीको इन तीन भाइयोंको करते देख कर मुझे सन्तोष हुआ है ॥ ९ ॥

हिन्दूकुरानिसद्भाववर्धनायैव ते त्रयः।
अकार्षुर्नोचितं प्रार्थ्य प्रस्तावपरिमार्जनम् ॥ १० ॥

हिन्दू और मुसलमानोंमें सद्भाव बढ़ानेके लिये ही इन तीनों भाइयोंने प्रस्तावसंशोधनकी प्रार्थना करके उचित नहीं किया है ॥ १० ॥

विश्वेस्मिन्सदसन्मिश्रेऽसदत्यन्तं न किञ्चन।
सत्यं त्यक्त्वा न कुत्रापि मनः कस्यापि तिष्ठतु ॥ ११ ॥

सत्य-असत्य दोनोंसे मिश्र इस जगत्में कोई वस्तु अत्यन्त असत् तो है ही नहीं। परन्तु सत्यको छोड़कर किसीका मन अन्यत्र न जाय तो अच्छा ॥ ११ ॥

अबुल्कलाम आज़ादः श्री जवाहिरनेहरूः।
प्रयतेते यदर्थं तद्वस्तु ज्ञातं कुतो न तैः ॥ १२ ॥

मौलाना अबुलकलाम आज़ाद तथा पण्डित जवाहिरलाल नेहरू जिस वस्तुके लिये प्रयत्न कर रहे हैं उसे उन्होंने क्यों नहीं समझा ? ॥ १२ ॥

वर्धाप्रस्तावसंभाषाशोधनार्थं धृतो हठः ।
संवरीतव्य एवासीत्तैरेतैः संप्रबोधितैः ॥ १३ ॥

समझानेपर इन लोगोंको चाहिये था कि वर्धा प्रस्तावके संशोधनके हठको छोड़ देते ॥ १३ ॥

अधिकारस्य यस्यैषा कृता चर्चा त्रिभिश्चिरम् ।
महासभान्वमंस्तैव तं तथैव विचारतः ॥ १४ ॥

इन तीनोंने जिस अधिकारकी चर्चा बहुत देरतक की है, महासभाने उसे उसी प्रकार विचार करके मान ही लिया है ॥ १४ ॥

पुरा सर्वे मुसल्माना देशमेतं प्रमोदतः ।
अस्माकमिति दार्ढ्येन ब्रुवन्ति स्मात्र सर्वदा ॥ १५ ॥

पहले सभी मुसलमान् हर्षसे इस देशको अपना देश सदा मानते रहे हैं ॥ १५ ॥

जन्मभूमिरयं देशो हिन्दूनामिव सर्वथा ।
ममापीत्यब्रवीन्नित्यं शौकतोऽपि सहानुजः ॥ १६ ॥

अपने भाई मुहम्मद अलीके साथ भी शौकत अली भी यही कहा करते थे कि यह देश जैसा हिन्दुओंका है, वैसा ही हमारा भी है ॥ १६ ॥

तयोरेतादृगाख्याने नोपचारः कदाचन ।
साक्षी स्वयमहं तत्र बहुशः सङ्गसेवनात् ॥ १७ ॥

उनके इस कथनमें कोई कृत्रिमता नहीं थी। इसका तो मैं ही साक्षी हूँ क्योंकि हम सब बहुत समय तक साथमें रहे हैं ॥ १७ ॥

सारल्येन मया ज्ञातं हृदयं न तयोरिति ।
मित्रैर्वदद्भिरत्राहं निराकार्यो न कर्हिचित् ॥ १८ ॥

मैं अपनी सरलतासे उन दोनोंके हृदयको नहीं समझ सका, ऐसा कहनेवाले मेरे मित्र मेरा तिरस्कार न करें ॥ १८ ॥

लोकैः समर्थितोऽस्म्येव सरलोऽपि निसर्गतः ।
सत्यासत्यविवेके तु मम बुद्ध्या न हीयते ॥ १९ ॥

यद्यपि लोगोंने यह मान ही लिया है कि मैं स्वभावतः सरल हूँ । परन्तु सत्य-असत्यके विचारमें मेरी बुद्धि कुण्ठित नहीं होती है ॥ १९ ॥

व्यवहारे न निपुणा मतिरस्ति ममेति न ।
विषीदामि प्रसीदामि वञ्चको नेति सद्धिया ॥ २० ॥

मेरी बुद्धि व्यवहारमें कुशल नहीं है, इससे मुझे दुःख नहीं होता है । प्रत्युत मैं वञ्चक नहीं हूँ इस विचारसे प्रसन्नता ही होती है ॥ २० ॥

बन्धुत्रयेण यत्प्रोक्तं तदेवोक्तं सहस्रशः ।
सहस्रैरपरैः श्रीमन्मुसल्मानमहोदयैः ॥ २१ ॥

इन तीन भाइयोंने जो कहा है उसीको दूसरे हजारों मुसलमानोंने हजारों बार कहा है ॥ २१ ॥

हिन्दूक़ुरानिलोकानां विवादो जीवता त्वया ।
परिहार्य इति प्रोक्तो मुसल्मानगणैरहम् ॥ २२ ॥

कितने ही मुसलमानोंने मुझे कहा है कि जब तक मैं जीता हूँ । हिन्दु और मुसलमानोंका झगड़ा मुझे मिटा देना चाहिये ॥ २२ ॥

प्रशस्योऽस्मि प्रभूतैस्तैर्हिन्दुक़ौरानिकैरहम् ।
न स्वीकरोति यद्बुद्धिर्नाचरामि परन्तु तत् ॥ २३ ॥

बहुतेरे हिन्दू और मुसलमान् मेरी स्तुति करते हैं । परन्तु मेरी बुद्धि जिसे नहीं कबूल करती, मैं उसे नहीं करता ॥ २३ ॥

हिन्दूक़ुरानिसस्नेहसम्मेलनमभीप्सितम् ।
हिन्दुभिः सर्वदा तत्र नवं भाति न किञ्चन ॥ २४ ॥

हिन्दूलोग हिन्दू-मुसलमानोंका प्रेम-संमेलन चाहते हैं इसमें कोई नयी बात मुझे प्रतीत नहीं होती है ॥ २४ ॥

बाल्यादेव समुद्भूतं कोमलायां मतौ मम ।
एतयोः स्निग्धसम्बन्धः स्थापनीय इहेति च ॥ २५ ॥

बाल्यावस्थासे ही मेरी कोमल बुद्धिमें यह बात आ गयी है कि दोनों जातियोंका मीठा सम्बन्ध स्थापन करना चाहिये ॥ २५ ॥

हिन्दूकुरान्यहर्बुध्न्यदेवबालेषु सर्वदा ।
अन्तिमयोर्द्वयोरेव मम मैत्री प्रतिष्ठिता ॥ २६ ॥

हिन्दू-मुसलमान् और पारसी बालकोंमेंसे मुसलमान् और पारसी बालकोंके साथ मेरी बहुत मित्रता रही है ॥ २६ ॥

हिन्दुबालैर्यदि स्यान्नोमैत्री मे माऽस्तु सा परम् ।
मुसल्मानवयस्यैः स्यादवश्यमिति मे मतम् ॥ २७ ॥

यदि हिन्दू बालकोंके साथ मित्रता न हो तो न हो परन्तु मुसलमान् मित्रोंके साथ तो मित्रता होनी ही चाहिये ॥ २७ ॥

हिन्दुभिर्यदि देशेऽस्मिञ्शान्त्या वस्तुं समीह्यते ।
धर्मः संरक्षणीयस्तैः प्रतिवेशिजनोचितः ॥ २८ ॥

हिन्दूलोग यदि इस देशमें शान्तिसे रहना चाहते हैं तो उन्हें पड़ोसीका धर्म तो पालना ही पड़ेगा ॥ २८ ॥

आफ्रिकायां गतः कर्तुं कार्यं कौरानिकस्य यत् ।
असावेव मतिस्तत्राऽऽप्यासीच्छुद्धमतेर्मम ॥ २९ ॥

अफ्रिकामें मैं मुसलमान्का कार्य करने गया था उसमें भी मेरा यही विचार मूलकारण था ॥ २९ ॥

अभियुक्ताः श्रिता मां ये तेषां द्विष्टगणेऽपि मे ।
आसीन्मैत्री न वञ्च्यः स्यात्कोपीति प्रत्ययो मयि ॥ ३० ॥

जिन अभियुक्तोंका मैं वकील था उनके शत्रु पक्षमें भी मेरी मित्रता थी। लोगोंका मुझमें विश्वास था कि मैं किसी को ठगूँगा नहीं ॥ ३० ॥

मद्वियोगाश्रुभिः स्नातानथ तद्वान्कुरानिनः।
वैदिकान्पारसीकांश्च हित्वाऽऽफ्रीकात आगमम् ॥ ३१॥

मेरे वियोगसे अफ्रिकामें मुसलमानों, हिन्दुवों और पारसियोंको रोते हुए छोड़कर मैं यहाँ आया था ॥ ३१ ॥

प्रतिष्ठाप्रेमसद्रत्नराशिभिः कान्तकान्तिकः।
स्वदेशे न्यवृतं तस्मान्नावसन्नप्रतिष्ठकः ॥ ३२ ॥

प्रतिष्ठा और प्रेमके साथ मैं वहाँसे अपने देशमें लौटा था, प्रतिष्ठा खोकर नहीं आया था ॥ ३२ ॥

अत्राप्यागत्य यत्नेन साहाय्यं प्रापितं मया।
ख़िलाफ़तीयसमरे यावच्छक्यं ,कुरानिनाम् ॥ ३३ ॥

यहाँ आकर भी मैंने खिलाफत युद्धमें मुसलमानोंको यथाशक्ति सहायता दी थी ॥ ३३ ॥

अस्मदीये तदा देशेऽहं ,कुरानिसुहृद्वरैः।
कृतः प्रेममहारत्ननिधानं शुद्धमानसैः ॥ ३४ ॥

उस समय इस अपने देशमें पवित्रमनवाले मुसलमान् मित्रोंने अपने प्रेमरूप महारत्नका मुझे पात्र बनाया था ॥ ३४ ॥

श्रमं ख़िलाफ़तस्यार्थं कुर्वतो मम कश्चन।
गवां रक्षातिरिक्तोऽत्र नासीत्स्वार्थो मनोगतः ॥ ३५ ॥

खिलाफतके लिये जो मैं श्रम कर रहा था उसमें गौओंकी रक्षाके अतिरिक्त मेरा कोई स्वार्थ नहीं था ॥ ३५ ॥

अजनिष्मह्यहं गावश्चाप्येकस्मान्महेश्वरात्।
तेन तद्रक्षणायास्मि सज्जः प्राणैर्धनैरपि ॥ ३६ ॥

मैं और गायें एक ही भगवान्‌से पैदा हुए हैं इसीलिये मैं प्राणों और धर्मसे उनकी रक्षाके लिये उद्यत हूँ ॥ ३६ ॥

**एतल्लोभपरीतोऽपि तदानीं न त्वचीकरम्।**
**कौरानैः समयं कश्चिन्नाकृषि स्वयमप्यथ ॥ ३७ ॥**

इस लोभमें पड़े हुए भी मैंने मुसलमानोंसे कोई शर्त नहीं करायी थी और स्वयं भी मैंने कोई शर्त नहीं की थी ॥ ३७ ॥

**मदीयो धर्म इत्येवातनवं तां सहायताम्।**
**साक्ष्यमत्राथ चेदिष्टं श्वेबः ख़ाजा च दास्यतः ॥ ३८ ॥**

मेरा धर्म है, इतना ही समझ कर मैंने उनकी सहायताकी थी। यदि इस विषयमें गवाहीकी आवश्यकता हो तो श्री० श्वेब और ख़ाजा··· देंगे ॥ ३८ ॥

**शौकतस्तस्य च भ्राता जीवन्तावभविष्यताम्।**
**सत्यामेतां गिरं मेऽद्य गतशङ्कं व्यधास्यताम् ॥ ३९ ॥**

यदि आज शौकत अली और मुहम्मद अली जीते होते तो वह मेरी इस बात को सत्य साबित कर देते ॥ ३९ ॥

**बारी महाशयश्चापि यद्यजीविष्यदञ्जसा।**
**धन्यं मां साक्ष्यदानेन सपद्येवाकरिष्यत ॥ ४० ॥**

जो अब्दुलबारी साहेब आज जीते होते तो वह भी गवाही देकर मेरा समर्थन करते ॥ ४० ॥

**सत्यनिष्ठो भवेयं चेत्प्रतिवेश्योऽपि सत्यतः।**
**सत्यः सखापि तत्कार्या मयाऽवश्यं सहायता ॥ ४१ ॥**

यदि मैं सत्यनिष्ठ होऊँ, सच्चा पड़ोसी होऊँ, मित्र सच्चा होऊँ तो मुझे अवश्य सहायता करनी ही चाहिये ॥ ४१ ॥

**मुसल्मानजनैः सार्धमेकासनगतोऽभयम्।**
**अश्नामि सर्वदा भोज्यं हिन्दुभ्यस्तन्न रोचते ॥ ४२ ॥**

मैं हमेशा एक आसनपर बैठकर मुसलमानोंके साथ भोजन करता हूँ। हिन्दुओंको यह अच्छा नहीं लगता है ॥ ४२ ॥

वरिष्ठो विदुषां बारी स्वालये मां न कर्हिचित्।
आशिशङ्कोजनं कोपि तं नोपालभतामिति ॥ ४३ ॥

अब्दुलबारी साहेबने मुझे अपने घरमें कभी भोजन नहीं कराया जिससे कि कोई उन्हें उलाहना न दे ॥ ४३ ॥

फिरङ्गीमहले स्वीये सर्वदा मामवासयत्।
अभोजयद्द्विजैर्भोज्यं पाचयित्वैव मामसौ ॥ ४४ ॥

वह मुझे हमेशा फिरङ्गीमहलमें रखते थे और ब्राह्मणसे भोजन बनवा कर मुझे भोजन कराते थे ॥ ४४ ॥

निकाय्येऽस्य लघावेव सौकर्यं समपीपदत्।
दुःखानि स विषह्यापि मां सुखाकर्तुमैहत ॥ ४५ ॥

वह अपने छोटेसे घरमें भी मेरेलिये सब सुविधाएँ कर देते थे। अपने कष्ट उठाकर भी मुझे सुखी रखनेकी चेष्टा किया करते थे ॥ ४५ ॥

कालः क्वासौ गतो याता क्व च तादृगुदारता।
कौलीनं क्व गतं हन्त नष्टमेकपदे शिवम् ॥ ४६ ॥

वह समय कहाँ चला गया ? वह उदारता कहाँ गयी ? वह कुलीनता कहाँ चली गयी ? अच्छी चीजें सब एकदम नष्ट हो गयीं ॥ ४६ ॥

सर्वानेव मुसल्मानान्सजिन्नाञ्शर्मगर्भिताम्।
श्रावयितुं समिच्छामि मदीयां गिरमुत्तमाम् ॥ ४७ ॥

जिन्ना सहित सब मुसलमानोंको मैं अपनी शुभेच्छापूर्ण वाणी सुनाना चाहता हूँ ॥ ४७ ॥

जिन्नामहाशयोऽप्यासीत्सभ्यो राष्ट्रियसंसदः।
शिरःशङ्कुकमिस्तोमैर्दृष्टो रुष्टोऽद्य सोऽभवत् ॥ ४८ ॥

महाशय जिन्ना भी महासभाके सदस्य थे। उनके मनमें शंका उत्पन्न हुई और वह आज रुष्ट हैं ॥ ४८ ॥

भूमौ वर्षगणं जीवन्नसौ नूनं स्मरिष्यति ।
मयि पञ्चत्वमापन्ने ममाऽमायत्वमन्वहम् ॥ ४९ ॥

वह सौ वर्ष तक जीवें। जब मैं यहाँ नहीं रहूँगा तब वह मेरी सादगी-निश्छलताका स्मरण करेंगे ॥ ४९ ॥

मुसल्मानान्प्रतार्याहं गमिष्यामि तु कां दिशम् ।
कण्ठो मे तत्समीपेऽस्ति यथेच्छं कृत्यतां स तैः ॥ ५० ॥

मुसलमानोंको ठग करके मैं कहाँ जाऊँगा। मेरा गला उनके पास है। वह चाहें तो उसे काट डालें ॥ ५० ॥

अद्य यावत्सकुशलस्तिष्ठामि दयया प्रभोः ।
मय्याक्रामक आधौतमन्युभावः खिदां गतः ॥ ५१ ॥

आज तक मैं प्रभुकृपासे सुरक्षित हूँ। मुझ पर आक्रमण करनेवालेका जब क्रोध धुल जाता-शान्त होता तब वह पश्चात्ताप करता था ॥ ५१ ॥

शठो गान्धीति संचिन्त्य गोलिकां प्रहरन्मयि ।
कल्पितं तं शठत्वेन घातयेन्मां न चाशठम् ॥ ५२ ॥

"गांधी दुष्ट है" ऐसा विचार कर मुझपर गोली छोड़नेवाला "शठरूपसे कल्पित गांधीको" मारेगा, मुझ निर्दोष गाँधीको नहीं ॥ ५२ ॥

मह्यं गालिप्रदानेषु मुसलमानान्नतानिति ।
नम्रो ब्रवीमि वः पन्था युष्मत्कीर्तिविदूषकः ॥ ५३ ॥

मुझे रातदिन गाली देनेवाले मुसलमानोंको मैं कहता हूँ कि तुम्हारा मार्ग तुम्हारी कीर्तिके लिये कलङ्करूप है ॥ ५३ ॥

श्रीमन्मुहम्मदोऽध्रुक्षदरिभ्योऽपि न जात्विति ।
ऐतिह्यमेतदखिले ख्यातं जगति सर्वथा ॥ ५४ ॥

मुहम्मदसाहेबने अपने शत्रुओंसे कभी भी द्रोह नहीं किया, यह बात संसारमें प्रख्यात है ॥ ५४ ॥

औदार्येणोपकारेण शत्रवः स्ववशीकृताः ।
तेनाद्यास्ति च युष्माकं का दशेति विचिन्त्यताम् ॥ ५५ ॥

उन्होंने अपनी उदारतासे और उपकारभावसे शत्रुओंको वशमें कर लिया था । आज आप विचार करें कि आपकी क्या दशा है ॥ ५५ ॥

प्रियङ्करस्य वो नित्यं सरलस्य वचस्सु मे ।
मित्त्रश्रेष्ठस्य शोभेत कथं शङ्काङ्कुरोद्गमः ॥ ५६ ॥

मैं तो आपका हितेच्छु हूँ । सीधा सादा मनुष्य हूँ । आपका सबसे अधिक मित्र हूँ । मेरे वचनमें आपको शंका क्यों होती है ? ॥ ५६ ॥

रीढा युष्मत्कृता मेऽद्य यस्मिन्काले मनोऽत्र वः ।
तापयिष्यति सोऽवश्यं समुपैष्यति बन्धवः ॥ ॥ ५७ ॥

मुसलमान् भाइयो, वह समय अवश्य आवेगा जब आपको, आपने जो मेरा अपमान किया है—उससे भारी दुःख होगा ॥ ५७ ॥

राष्ट्रनाथस्तथाऽहं वो विनयावो यथा यथा ।
अभिक्रोशस्तु युष्माकं वृद्धिमेति तथा तथा ॥ ५८ ॥

राष्ट्रपति और मैं ज्यों ज्यों आपसे विनय करता हूँ त्यों त्यों आपका क्षोभ बढ़ता जाता है ॥ ५८ ॥

दुरुक्तयोऽद्य युष्माकं सपत्त्राकुरुते मम ।
अन्तस्तत्त्वं ततो मे स्यादुदर्को वध उत्तमः ॥ ५९ ॥

आपके कटुवचन मेरे हृदयको बींधते हैं । इससे अच्छा तो यह है कि आप मेरा वध कर डालें ॥ ५९ ॥

मरणं मम युष्माकं रचयेत्कां सहायताम् ।
चिरजीभूय सम्पाद्यं प्रश्नस्यास्य सदुत्तरम् ॥ ६० ॥

मेरी मृति आपकी क्या सहायता कर सकेगी, शान्त हो कर इसका विचार करें ॥ ६० ॥

अनिष्टापादने यूयं मम केनापि वर्त्मना ।
नेशिषिध्वे कदाप्येव स्वधर्मं लज्जयिष्यथ ॥ ६१ ॥

आप किसी प्रकारसे मेरा अनिष्ट नहीं कर सकेंगे परन्तु अपने धर्मको लज्जित करेंगे ॥ ६१ ॥

अबुल्कलाम आज़ादः सखा मम भवन्नपि ।
न मां प्रेरयितुं शक्तो युष्मदिष्टेषु कर्मसु ॥ ६२ ॥

मौलाना अबुलकलाम आजाद मेरे मित्र हैं परन्तु वह कभी भी आपके अभिलषित कर्ममें मुझे प्रेरित नहीं करते ॥ ६२ ॥

तस्मादेव महाविद्वान्धर्मात्मा स उदारधीः ।
युष्माभिर्गोलिदानेन धिक्क्रियतेऽथ धिग्विधिम् ॥ ६३ ॥

और इसी लिये यद्यपि वह बड़े भारी विद्वान् हैं, धर्मात्मा और उदार हैं तो भी आपलोग उन्हें धिक्कारते हैं । प्रारब्धको धिक्कार है ॥६३॥

असत्यं वस्तु सदिति धारयितुं बलादिव ।
प्रयत्नः शोभते नैव सखित्वस्य कथञ्चन ॥ ६४ ॥

असत्यको बलात्कारसे सत्य मनवानेका प्रयत्न मित्रताको शोभा नहीं देता है ॥ ६४ ॥

पाकिस्तानेऽस्ति सत्यांशो यस्तद्धस्तगतोऽस्ति सः ।
अवशिष्टो न कस्यापि वशे जिन्नेति वेत्त्वियत् ॥ ६५ ॥

पाकिस्तानके विषयमें जितना सत्यांश है वह तो आपको मिल ही चुका है । बाकी जो है वह किसीके वशमें नहीं है, श्रीजिन्नाको इतना ही जान लेना चाहिये ॥ ६५ ॥

अतथ्यं न भवेत्पथ्यं गर्वः प्रीणाति नो हरिम् ।
मदोन्मत्तान्मदाच्चापि हरिर्दूरे वितिष्ठते ॥ ६६ ॥

असत्य कभी हितकर नहीं होता है। अभिमानसे ईश्वर कभी प्रसन्न नहीं होता है। अभिमान और अभिमानीसे ईश्वर सदा दूर ही रहता है ॥ ६६ ॥

अङ्गीकारयितुं कोपि बलात्सत्येतरद्यदि ।
कस्मैचित्प्रेरणां दत्ते सहते स विभुर्न तत् ॥ ६७ ॥

यदि कोई आदमी किसीको जबर्दस्तीसे असत्य मनवाना चाहता है तो ईश्वर उसे कभी सहन नहीं करता ॥ ६७ ॥

कटूवीमपि जिना वाचं भाषते स्वमनोगताम् ।
विवृतेन गलेनेदं स्वीकरोति स्वयं ह्यसौ ॥ ६८ ॥

श्री जिन्ना अवश्य ही कटुवचन बोलते हैं, इसे वह भी पुकार पुकार कर स्वीकार करते हैं ॥ ६८ ॥

मुसल्मानजनानां च सखाऽहं शुद्धभावनः ।
ततो मयापि वक्तव्यं तथ्यं पथ्यं च तत्कृते ॥ ६९ ॥

मैं मुसलमानोंका पवित्र मित्र हूँ। अतः उनकेलिये जो हितकी बात हो मुझे भी कहनी ही चाहिये ॥ ६९ ॥

गोपनीयं न हृदयं न जात्वपि मया मम ।
इच्छतः शिवमेतेषां भीतिर्मे न मनागपि ॥ ७० ॥

मेरा हृदय मुझे कभी भी नहीं छिपाना चाहिये। मैं उनका हित चाहता हूँ अतः मुझे जरा भी डरना नहीं चाहिये ॥ ७० ॥

महासभापथे यान्तं मुसल्मानगणं कथम् ।
आक्रोशसि सदेत्येव जिन्नां पृच्छामि सन्मनाः ॥ ७१ ॥

मैं जिन्नासाहेबको प्रेमसे पूछता हूँ कि कांग्रेसकी नीतिको मानने वाले मुसलमानोंको वह गाली क्यों देते हैं ? ॥ ७१ ॥

मतिहीना भवेयुस्ते मतिमन्तोऽपि वा परम् ।
गालिकर्दमनिक्षेपस्तेषु स्यादुचितः कथम् ॥ ७२ ॥

वह चाहे मूर्ख हों, चाहे समझदार हों, परन्तु उन्हें गाली देना उचित कैसे माना जा सकता है ? ।। ७२ ।।

त्वयोपस्थापिते वस्तुन्यविश्वासपरम्पराम् ।
पुष्णतस्तान्कथं गालिदानैर्योजयसे सदा ।। ७३ ।।

आप जिस वस्तुको उपस्थित किये हैं, उसमें जिनका विश्वास नहीं है उनको आप रोज गालियाँ क्यों देते हैं ? ।। ७३ ।।

जनप्राचुर्यमाधत्से यदि त्वं केन हेतुना ।
ऊनसंख्याबलेभ्योऽसि तेभ्यो भीतिपराहतः ।। ७४ ।।

यदि आपके पास बल अधिक है तो अल्पसंख्यक समाजसे आपको डर क्यों लगता है ? ।। ७४ ।।

सुहृद्भिः कोटिभिर्युक्तो यदि सत्यं महीयसे ।
अत्यल्पेभ्यः कथं भीतिस्तुदत्यथ मनस्तव ।। ७५ ।।

जो सचमुच ही करोड़ों मित्रोंसे आप घिरे हुए हैं तो थोड़े लोगोंके भयसे आपका मन क्यों दुःखित है ? ।। ७५ ।।

अल्पैरपि जनैः सार्धं स्वमतं श्रीमुहम्मदः ।
सदा प्राचीचरद्धीमान्विपरीतमतेष्वपि ।। ७६ ।।

मुहम्मदसाहेब तो अपने थोड़े आदमियोंमें भी अपने मतका प्रचार करते थे ।। ७६ ।।

वीक्ष्य स्वधर्ममाहात्म्यं पादन्यासः सुवर्त्मनि ।
जिन्नामुहम्मदेनाद्य कर्तव्य इति कामये ।। ७७ ।।

मैं चाहता हूँ कि मुहम्मदअली जिन्ना अपने धर्मके माहात्म्यको जानकर सुमार्गमें पैर रखें ।। ७७ ।।

यस्मिन्महासभा धत्ते प्रत्ययं न मनागपि ।
वस्तुनस्तस्य स्वीकारे कथं त्वं तां नियोजयेः ।। ७८ ।।

जिस वस्तुमें महासभाको तनिक भी विश्वास नहीं है उसमें उसे जबर्दस्ती क्यों लगाते हैं ? ॥ ७८ ॥

**राजगोपाल आचार्यो मामब्रूत पुनः पुनः ।**
**पाकिस्तानप्रदाने त्वं कुरानिभ्यो मतिं कुरु ॥ ७९ ॥**

श्री राजगोपालाचार्यजीने मुझे बार बार कहा है कि मैं मुसलमानोंको पाकिस्तान देनेका विचार कर लूँ ॥ ७९ ॥

**पाकिस्तानमवाप्यैष जिन्ना हानिं निरीक्ष्य च ।**
**पश्चात्तप्स्यति संत्यक्ष्यत्यवश्यं स्वमतं पुनः ॥ ८० ॥**

श्रीजिन्ना जब पाकिस्तान पा लेंगे, पश्चात् हानि देखेंगे तब पश्चात्ताप करेंगे और तब अपने इस मतको छोड़ देंगे ॥ ८० ॥

**अहितं येन सर्वेषां भवेदेव कुरानिनाम् ।**
**ममाभीष्टं च यन्न स्यात्कथं देयं मया तु तत् ॥ ८१ ॥**

जो वस्तु न तो मुझे प्रिय है और जिससे न तो मुसलमानोंको कोई लाभ है उसे मैं किस प्रकारसे उन्हें दूँ ? ॥ ८१ ॥

**सत्यं यत्तदवश्यं स्याद्दत्तं तेभ्यो मयाऽचिरम् ।**
**जिन्नाप्रसादनायैव नासदङ्गीकृतं भवेत् ॥ ८२ ॥**

जो सत्य है, मैं उसे अवश्य ही विना किसी विलम्बके उन्हें दूँगा । परन्तु जिन्नाको खुश करनेके लिये मैं असत्यका अङ्गीकार नहीं करूँगा ॥ ८२ ॥

**पाकिस्तानीं कथां जिन्ना त्यजेदिति मनीषया ।**
**मया तदिष्टं स्वीकार्यमित्यन्ये ब्रवतेऽथ माम् ॥ ८३ ॥**

दूसरे लोग तो मुझे यह कहते हैं कि मैं पाकिस्तानको इसलिये स्वीकार करलूँ कि जिन्ना साहेब पाकिस्तानकी बात करना बन्द कर दें ॥ ८३ ॥

एषापि संमतिर्नो मे रोचते तद्धितैषिणे ।
सततं यदसत्यं स्यात्कथं सङ्गोऽस्तु तत्र मे ॥ ८४ ॥

मैं तो जिन्नाका मित्र हूँ। मुझे यह संमति भी नहीं पसन्द है। क्योंकि जो नितान्त असत्य है उसके साथ मेरा सम्बन्ध कैसे हो सकता है ॥ ८४ ॥

महासभा बलादस्या भागं कमपि नेच्छति ।
अनुसर्तुं तदीयाङ्घ्रिं लोकशासनशंसिनी ॥ ८५ ॥

लोकशासन चाहनेवाली महासभा चाहती है कि उसका कोई भी भाग जिन्नाका अनुसरण करे नहीं ॥ ८५ ॥

लोकशासनमत्र स्यात्स्थापितं केवलं तया ।
अहिंसयैव तत्सद्यो हिंसा हेयैव सज्जनैः ॥ ८६ ॥

महासभा केवल अहिंसासे ही लोकशासन स्थापित करना चाहती है। अतः सज्जनोंको हिंसा फौरन् छोड़ देनी चाहिये ॥ ८६ ॥

हिन्दूकुरानिनां न स्यात्कलिमूलापनोदनम् ।
हिंसयेति परित्यज्य तामहिंसैव सेव्यताम् ॥ ८७ ॥

हिंदू और मुसलमानोंका झगड़ा हिंसासे कभी नाबूद नहीं हो सकता। अतः हिंसाका त्याग करके अहिंसाका आश्रय लेना चाहिये ॥ ८७ ॥

अत्याचरेयुरथ चेद्धिन्दवोऽत्र कुरानिषु ।
केनाननेन तैः कार्या वार्ता सांघातिकी शिवा ॥ ८८ ॥

यदि हिन्दू मुसलमानोंपर अत्याचार करें तो वह कौन मुँह लेकर एकता की बात करेंगे ? ॥ ८८ ॥

हिंसयैव जगच्छान्तिः सेत्स्यतीति कथाऽवरा ।
रुज्वेल्टचर्चिलाभ्यां तु कृता मह्यं न रोचते ॥ ८९ ॥

रुजवेल्ट और चर्चिलने जो यह कहा है कि संसारमें शान्ति तो हिंसासे ही आवेगी, उनकी यह अधम बात मुझे पसन्द नहीं है ॥ ८९ ॥

हिन्दूकुरानिनां जाते मतभेदप्रयोजिते ।
विरोधे शान्तये तस्य पञ्चग्रन्थिर्भविष्यति ॥ ९० ॥

हिन्दु और मुसलमानोंमें मतभेदके कारण विरोध होनेपर, उसकी शान्तिके लिये पञ्चकी योजना होगी ॥ ९० ॥

अन्ताराष्ट्राश्रितं न्यायगृहं न्यायार्जनाय च ।
गमिष्यामो भवेदेव तेन शान्तिः शमैषिणाम् ॥ ९१ ॥

अन्तर्राष्ट्रिय न्यायालयमें हम न्यायके लिये जायँगे। शान्ति चाहने वालोंको वहाँ शान्ति होगी ही ॥ ९१ ॥

किंवा विवादनिर्णेतृसङ्घं शाश्वतिकं वयम् ।
आश्रयिष्यामहे तेन कलिः संकीलितो भवेत् ॥ ९२ ॥

अथवा तो विवादनिर्णय करनेके लिये जो स्थायी संघ है, उसके पास हम जायँगे। वहाँ झगड़ा समाप्त हो जायगा ॥ ९२ ॥

अध्वानश्चेदिमे न स्युः स्वीकृतास्तर्हि केवलम् ।
सकलैरेव मन्तव्यो बलात्कारो दुराग्रहः ॥ ९३ ॥

यदि यह सब मार्ग स्वीकृत न होंगे तो जानना चाहिये कि बलात्कार और दुराग्रह हो रहा है ॥ ९३ ॥

यदशक्यं कथं देयं कस्मैचन कुतो मया ।
विभागानुमतेरिच्छा बधतुल्योऽस्तु जीवतः ॥ ९४ ॥

जो वस्तु अशक्य है उसे मैं कहाँसे लेकर किसीको दूँ? देशके विभागमें अनुमति देनेकी इच्छा जीवितके मारनेके तुल्य है ॥ ९४ ॥

अशक्या प्रार्थनेयं स्यादाह्वानं समराङ्गणे ।
महासभा न तत्र स्याद्भागिनी सत्यसेविनी ॥ ९५ ॥

यह प्रार्थना अशक्य है। युद्धभूमिमें बुलाया जायगा तो सत्यपरायण महासभा उसमें भाग न लेगी ॥ ९५ ॥

असिर्येषां बलं तेषां हिन्दूनामधिनायकौ ।
मुञ्जे सावर्करश्चापि सुधन्वानौ महाबलौ ॥ ९६ ॥

जिनके हाथमें तलवार है उनके पास बल है। हिन्दुओंके नेता डाक्टर मुञ्जे और श्रीसावरकर बलवान् भी हैं और धनुषधारी भी हैं ॥ ९६ ॥

हिन्दुः सन्नपि नो तेभ्यः कदापि प्रति केवलम् ।
यस्याः सोऽस्मि सभायाः सा न धत्तेऽसिं न धनुष्करे ॥ ९७ ॥

हिन्दू होता हुआ भी मैं केवल हिन्दुओंका ही प्रतिनिधि नहीं हूँ। जिस महासभाका मैं प्रतिनिधि हूँ उसके हाथमें न धनुष है और न तलवार है ॥ ९७ ॥

शातकुम्भं प्रसुन्वानामण्डमाशाभिमण्डनम् ।
उज्जासयितुमीहां वो वर्धयध्वे पदायुधाम् ॥ ९८ ॥

जो मुर्गी सोनेका अण्डा देती है उसको मार डालनेकी इच्छा तुम्हारे मनमें बढ़ रही है ॥ ९८ ॥

युष्माकं प्रत्ययश्चित्ते नो चेदधिमहासभम् ।
हिन्दूमुस्लिमसौभाग्यभञ्जनस्य विधेर्जयः ॥ ९९ ॥

यदि आपके चित्तमें महासभामें विश्वास नहीं है तो, हिन्दु-मुसलमानोंके सौभाग्यको नष्ट करनेवाले विधाताका जय है ॥ ९९ ॥

आवयोः कलहो हेतुः सर्वस्य जगतः कलौ ।
विदांकुरुत तत्त्वज्ञा यूयमन्ये च पण्डिताः ॥ १०० ॥

इस बातको आप और अन्य विद्वान भी समझ लें कि हिन्दू-मुसलमानोंका झगड़ा सारे जगत्का झगड़ा है ॥ १०० ॥

वर्धिष्यमाणविद्वेषानलचण्डशिखामहम् ।
हन्त भारायितान्प्राणान्धारयिष्यामि नेक्षितुम् ॥ १०१ ॥

बढ़ती हुई विद्वेषरूप आगकी शिखाको देखनेके लिये मैं अपने भारभूत प्राणोंको धारण नहीं करूँगा ॥ १०१ ॥

ततो वदामि सत्यांशः पाकिस्तानस्य वः करे।
अस्त्येवेति विरुद्धांशो ग्राह्यो निस्त्रिंशवीर्यतः॥ १०२॥

इसलिये मैं कहता हूँ कि पाकिस्तानका जो सत्यांश है वह तो तुम्हारे हाथमें ही है। बाकीको तलवारके बलसे लेना होगा॥ १०२॥

कायोऽबलोऽबला शक्तिः प्रार्थनीयं च मे बहु।
कथङ्कारं मयाऽऽत्मस्थो भावो युष्मासु धीयताम्॥ १०३॥

मेरा शरीर निर्बल है। शक्ति भी निर्बल है। कहना बहुत है। मैं आत्माका भाव किस प्रकारसे आपके सामने रखूँ?॥ १०३॥

इदं वस्तु मयाऽऽरात्रि वीतनिद्रेण चिन्तितम्।
कथञ्चिदपि युष्मासु तदर्प्यमिति निश्चितम्॥ १०४॥

यह वस्तु मैंने सारी रात जागकर विचारी है। उसे तो आपके सामने कैसे भी रखना है॥ १०४॥

स्थापिता मयि या शक्तिरीश्वरेण कृपावशात्।
उपयुज्याखिलामेतां मनोभावं प्रकाशये॥ १०५॥

भगवान्ने मुझे जो शक्ति दी है उसका उपयोग करके मैं अपने समस्त मनोभावोंको प्रकट करता हूँ॥ १०५॥

शुद्धेनान्तरतत्त्वेन यदि मैत्री प्रतिष्ठिता।
हिन्दूकुरानिनां तन्मे जीवरक्षा भविष्यति॥ १०६॥

यदि हिन्दू-मुसलमानोंमें शुद्ध मनसे मित्रता हो तो मेरे प्राणोंकी रक्षा होगी॥ १०६॥

संगत्याथ च संहत्य सर्वयत्नैर्विदेशिनाम्।
हस्तादाच्छिद्य देशोऽसौ मुक्तबन्धो विधीयताम्॥ १०७॥

एक चित्तसे इकट्ठे होकर सर्व प्रयत्नोंसे विदेशियोंके हाथमेंसे छीनकर देशको मुक्त करो॥ १०७॥

पाकिस्तानो भवेन्नो चेद्भारतावयवस्तदा ।
कुतस्तत्प्राप्तये सर्वे आद्रणीयुः परिश्रमम् ॥ १०८ ॥

पाकिस्तान यदि भारतका ही अङ्ग होकर न रहे तो उसकी प्राप्तिके लिये सब लोग परिश्रम क्यों करें ? ॥ १०८ ॥

मनोभेदविभेदेन बन्धुतां समुपार्ज्य च ।
स्वातन्त्र्यप्राप्तये युद्धं ततो द्वाभ्यां विधीयताम् ॥ १०९ ॥

मनमें रहे हुए भेदको हटाकर बन्धुता पैदा करके पश्चात् स्वतन्त्रता प्राप्तिके लिये हिन्दू-मुसलमान् दोनों ही युद्ध करें ॥ १०९ ॥

विश्वयुद्धमुपक्रान्तं दीर्घकालं प्रवर्त्स्यति ।
इति जिन्नामतं नाहमनुमन्तुं समुत्सहे ॥ ११० ॥

"यदि विश्वयुद्ध शुरू होगा तो बहुत दिनोंतक चलेगा" जिन्नाके इस मतको मैं अनुमोदन नहीं दूँगा ॥ ११० ॥

षण्मासान्यदि वर्तेत युद्धमेतन्महाशनम् ।
कथमक्षतसौभाग्यचीनरक्षा भविष्यति ॥ १११ ॥

यदि छ महीने तक यह सर्वविनाशी युद्ध चलता रहे तो सम्पूर्णरीतिसे चीनकी रक्षा कैसे हो सकेगी ? ॥ १११ ॥

स्वाधीनता भवेदद्य प्राप्या चेदधुनैव ताम् ।
प्रभातादपि पूर्वं वा दिदृक्षेऽक्षय्यचारुताम् ॥ ११२ ॥

यदि आज स्वतन्त्रता मिलती हो तो अभी ही अथवा कल्ह प्रातः-कालसे भी पहले मैं उसे देखना चाहता हूँ जिसके सौन्दर्यका पुनः कभी नाश नहीं होगा ॥ ११२ ॥

जात्योर्द्वयोरनैक्येऽपि विघ्नेष्वपि विपत्स्वपि ।
यतः कुतोऽपि सम्पाद्यः स्वाधीनत्वमहानिधिः ॥ ११३ ॥

दोनों जातियोंकी एकता न होनेपर भी विघ्न और विपत्तियोंके आने

पर भी चाहे जिस प्रकारसे स्वाधीनतारूप महान् निधि तो प्राप्त करना ही है ॥ ११३ ॥

महासभा वरं सद्यो भेकनाशं विनश्यतु।
अदृश्या वा धरातः स्याद्रक्ष्यो देशस्तया परम् ॥ ११४ ॥

महासभा भले ही मेढ़कके समान नष्ट हो जाय, पृथिवीतलसे अदृश्य हो जाय परन्तु उसे देशकी रक्षा तो करनी ही है ॥ ११४ ॥

एषा स्वाधीनता प्राप्या सभायै सभया नहि।
भारतीयेभ्य एतेभ्यः समस्तेभ्यः शिवप्रदा ॥ ११५ ॥

महासभा यह स्वतन्त्रता अपने लिये नहीं किन्तु समस्त भारतवासीके लिये प्राप्त करेगी ॥ ११५ ॥

देश एष कुरानिभ्यः श्वेतकायैरगृह्यत।
तेभ्य एव प्रदातव्य इति जिन्नाऽस्ति साग्रहः ॥ ११६ ॥

श्री जिन्नाका आग्रह है कि अंग्रेजोंने इस देशको मुसलमानोंसे लिया है अतः मुसलमानोंको ही मिलना चाहिये ॥ ११६ ॥

एतेनेदं विभात्येव स्पष्टमल्पापि कर्हिचित्।
स्वातन्त्र्ये भारतक्षोण्याः पर्यवस्थास्ति तस्य नो ॥ ११७ ॥

इससे यह स्पष्ट मालूम होता है कि उनको भारतकी स्वाधीनताके लिये जरा भी इच्छा और आस्था नहीं है ॥ ११७ ॥

मुहम्मद अली जिन्ना स्वातन्त्र्यं वष्टि यादृशम्।
मुस्लिमराज्यमेव स्यात्तदवश्यं न संशयः ॥ ११८ ॥

मुहम्मदअली जिन्ना जिस प्रकारकी स्वतन्त्रता चाहते हैं वह तो निस्सन्देह मुस्लिमराज्य ही होगा ॥ ११८ ॥

अबुलूकलाम आजादो राष्ट्रनाथो विदांवरः।
न वाञ्छति तथा राज्यं रुचिस्तत्र ममापि नो ॥ ११९ ॥

राष्ट्रपति मौलाना अबुलकलाम आजाद वैसी स्वतन्त्रता नहीं चाहते हैं। मुझे भी वह पसन्द नहीं है ॥ ११९ ॥

लोकशासनमेवेष्टं सभायास्तत्र संगताः।
हिन्दुमुस्लिम्खिरिस्ताग्निदेवयाहूदकादयः ॥ १२० ॥

महासभाको लोकशासन ही इष्ट है। उसमें हिन्दू, मुसलमान, खिस्ती, पारसी, यहूदी आदि सब सम्मिलित रहें ॥ १२० ॥

भवेद्वात्र मुसल्मानराज्यं किन्तु कथं तदा।
अस्माभिः सम्मतिस्तत्र सम्प्रदीयेत दुःखकृत् ॥ १२१ ॥

अथवा मुसलमान्-राज्य ही स्थापित हो परन्तु उसमें हमलोग कैसे सम्मति दे सकते हैं? वह सम्मति तो दुःखदायिनी हो जायगी ॥ १२१ ॥

कुरानिनां प्रभूतानां मातरः पितरस्तथा।
अभवन्हिन्दवस्तेषां मातृभूमिस्तु काऽपरा ॥ १२२ ॥

बहुतसे मुसलमानोंके माता-पिता हिन्दू ही थे। उनकी मातृभूमि दूसरी कौन सी हो सकती है ॥ १२२ ॥

सर्वानेव मुसल्मानान्पृच्छामि विनयानतः।
तेषां कास्ति जनिक्षोणिर्भारतेन विनाऽपरा ॥ १२३ ॥

मैं नम्र होकर सब मुसलमानोंसे पूछता हूँ कि भारतके सिवाय उनकी जन्म-भूमि कौन सी है? ॥ १२३ ॥

हिन्दुधर्मं परित्यज्य हीरालालो मदङ्गजः।
मुसल्मानोऽभवत्तस्य जन्मभूमिः परास्ति का ॥ १२४ ॥

मेरा लड़का हीरालाल हिन्दू-धर्म छोड़कर मुसलमान् हो गया है। उसकी जन्मभूमि दूसरी कौन सी है? ॥ १२४ ॥

परेषामपि तस्यापि जन्मभूमिस्तु भारतम्।
तेन सर्वैर्मुसल्मानैः कर्तव्यं तस्य रक्षणम् ॥ १२५ ॥

दूसरे मुसलमानों और हीरालालकी भी जन्मभूमि भारत ही है। अतः सब मुसलमानोंको उसकी रक्षा करनी चाहिये ॥ १२५ ॥

**महासभा तु सर्वेषां भारतावनिवासिनाम्।**
**सेवकास्ति ततस्तस्याः साहाय्यं क्रियतां समैः ॥ १२६ ॥**

महासभा तो समस्त भारतवासियोंकी सेवका है, अतः सबको ही उसकी सहायता करनी चाहिये ॥ १२६ ॥

**महासभामिमां यूयं वशीकर्तुं यदीच्छथ।**
**संख्याबलेन तत्कर्तुं को हि बाधां समाचरेत् ॥ १२७ ॥**

यदि महासभाको आपलोग अपने अधिकारमें लेना चाहते हैं तो संख्याबलसे वैसा करनेसे आपको कौन रोक सकता है ॥ १२७ ॥

**सम्परायः प्रवृत्तोऽसौ हिन्दून्योजयितुं परम्।**
**श्रेयसेति न जानीत सर्वश्रेयोऽस्ति वाञ्छितम् ॥ १२८ ॥**

हिन्दुओंके ही हितके लिये यह युद्ध प्रवृत्त हुआ है, ऐसा आप न समझें। सबका कल्याण इष्ट है ॥ १२८ ॥

**महासभासदस्योऽत्र कोपि कस्यापि हिंसनम्।**
**मुस्लिमस्य व्यधत्तेति श्रोतुं नेच्छामि कर्हिचित् ॥ १२९ ॥**

महासभाके किसी सदस्यने किसी मुसलमान्को मार डाला है, ऐसी बात मैं कभी सुनना नहीं चाहता हूँ ॥ १२९ ॥

**क्रान्तिकाले यदा कश्चिद्धिन्दुः कंचित्प्रहारयेत्।**
**मुसल्मानं तदा तस्य रक्षा कार्या सभाजनैः ॥ १३० ॥**

यदि क्रान्तिके समय कभी कोई हिन्दू किसी मुसलमान्को मारे या मरावे तो महासभावादियोंको चाहिये कि उसकी रक्षा करें ॥ १३० ॥

**रक्षणं कस्यचिद्भागोऽपिञ्जनस्य महान्मतः।**
**मिथोरक्षणमाधेयं तदानीं धृतिपूर्वकम् ॥ १३१ ॥**

किसीका रक्षण करना अहिंसाका एक बड़ा भारी भाग है। उस समय धैर्यपूर्वक दोनों परस्पर रक्षण करें ॥ १३१ ॥

महासभानुगाः केऽपि मुसल्मानाश्च हिन्दवः।
सकला एव सत्कार्यमनुतिष्ठन्त्विदं परम् ॥ १३२ ॥

महासभावादी हिन्दू और मुसलमान दोनोंको ही वह सत्कर्म करना चाहिये ॥ १३२ ॥

सत्कृत्यमेतदह्नाय यो मुसल्मान आचरेत्।
अवश्यं तेन सत्सेवा स्वधर्मस्य कृता भवेत् ॥ १३३ ॥

जो मुसलमान् यह सत्कर्म करेगा इसका अर्थ यह होगा कि उसने अपने धर्मकी एक अच्छी सेवा की है ॥ १३३ ॥

सर्वेषां प्रत्ययः सर्वैः सेव्यो विगतमत्सरैः।
प्रवर्त्स्यदेतदायुद्धं न प्रतीतिं विना चलेत् ॥ १३४ ॥

सबको सबका विश्वास करना चाहिये। मत्सरका त्याग कर देना चाहिये। आरम्भ होनेवाला यह युद्ध विश्वास विना नहीं चल सकेगा ॥ १३४ ॥

मौहम्मदाः सिताङ्गाश्च सर्वे सन्ति विरोधिनः।
तस्मादेव महांस्त्यागो युध्यस्यां समुपेक्षितः ॥ १३५ ॥

मुसलमान् और अंग्रेज सब इस युद्धके विरोधी हैं। इसलिये इसमें बड़े भारी त्यागकी आवश्यकता है ॥ १३५ ॥

परिपत्रं महागुप्तं पकलेन प्रवर्तितम्।
तथा कृत्वा स्वयं तेन स्वस्य कण्ठो विकर्तितः ॥ १३६ ॥

श्रीपकलने गुप्त परिपत्र चारों ओर भेजा है। उन्होंने ऐसा करके अपना ही गला काटा है ॥ १३६ ॥

अन्यथासिद्धसंस्थानां परिगृह्य सहायताम्।
सितवर्ष्मा पकलू योद्धुमीहते सभया सह ॥ १३७ ॥

निरर्थक संस्थाओंकी सहायता लेकर पकलू महासभाके साथ युद्ध करना चाहते हैं ॥ १३७ ॥

राजशक्त्या कुटिलया योद्धव्यं भारतैरिह।
पन्थाः कण्टकितस्तस्याः सद्घण्टापथ एष नः ॥ १३८ ॥

भारतीयोंको कुटिल राजनीतिके विरुद्ध युद्ध करना है। सर्कारके मार्गमें काँटे हैं। हमारा मार्ग राजमार्ग है ॥ १३८ ॥

सत्याग्रहपथः श्रीमानृजिष्ठो धर्मपालकः।
रागो द्वेषश्च कापट्यं लभन्ते नात्र संस्थितिम् ॥ १३९ ॥

सत्याग्रहका मार्ग सीधा और धर्मरक्षक है। इसमें राग, द्वेष, कपटके लिये स्थान नहीं है ॥ १३९ ॥

समस्ते जगतीदानीं मिथ्याचारः प्रवर्तितः।
कथमस्य भवन्साक्षी मूकस्तिष्ठामि निष्क्रियः ॥ १४० ॥

इस समय समस्त जगत्में मिथ्याचार चल रहा है। मैं इसका मूक और निष्क्रिय साक्षी बनकर कैसे बैठा रहूँ ? ॥ १४० ॥

एतेनैव विचारेण विषण्णो विवशो भवन्।
एतदायोधनं शुद्धमारभे रभसा शिवम् ॥ १४१ ॥

इसी विचारसे दुःखी और लाचार होकर इस पवित्र युद्धका मैं आरम्भ करता हूँ ॥ १४१ ॥

अखिलं भारतं वर्षं प्रायेण भ्रमितं मया।
कोटिभिर्मनुजैः सार्धं सुसम्पर्कमो न्यषेवि च ॥ १४२ ॥

मैं सम्पूर्ण भारतमें भ्रमणकर चुका हूँ। करोड़ों मनुष्योंके सम्पर्कमें मैं आया हूँ ॥ १४२ ॥

तदानीमतिविश्वासं चक्षुष्षु समवैक्षिषि।
सर्वेषां तेन युद्धाय महतेऽहं समुद्यतः ॥ १४३ ॥

उस समय मैंने सबकी आँखोंमें अत्यन्त विश्वास देखा था इसीलिये मैं इस महान् युद्धके लिये उद्यत हुआ हूँ ॥ १४३ ॥

हिंसाऽसत्याश्रितेनैव राज्येनाद्याऽस्तु योधनम् ।
सर्वशक्तिमतोऽप्यस्य दास्यान्मुक्तिस्तु वाञ्छिता ॥ १४४ ॥

हिंसा और असत्यकी सहायता लेनेवाले राज्यके साथ आज युद्ध होना है । यह सर्कार सर्वशक्तिमान् है तो भी इसकी दासतासे छूट ही जाना इष्ट है ॥ १४४ ॥

सत्यं चेत्सर्वसामर्थ्यमहिंसा यदि निर्मला ।
रत्नद्वयवतो मेऽद्य शोभते नैडमूकता ॥ १४५ ॥

सर्वसामर्थ्ययुक्त सत्य और निर्मल अहिंसा यह दो रत्न यदि मेरे पास हैं तो चुप बैठना शोभा नहीं देता है ॥ १४५ ॥

क्षणं तिष्ठेति जापानः कथं वाच्यो भवेन्मया ।
तथा सम्पाद्य सम्पाद्यं परमेशापराधनम् ॥ १४६ ॥

मैं जापानको कैसे कह सकता हूँ कि "तुम जरा ठहरो" । यदि मैं ऐसा करूँ तो वह ईश्वरका अपराध होगा ॥ १४६ ॥

किं न त्वया निरोधाय हिंसायाः शक्तिरात्मनः ।
व्यापारितेति पृष्टः किं तस्मै दास्ये सदुत्तरम् ॥ १४७ ॥

तुमने हिंसाको रोकनेके लिये अपनी शक्तिका उपयोग क्यों नहीं किया ? यदि ईश्वर मुझे यह पूछेगा तो मैं क्या उत्तर दूँगा ? ॥ १४७ ॥

हिन्दून्न केवलानेतच्छ्रावयामि महाव्यथः ।
हिन्दूकौरानिकख्रिस्तिपारसीकानपि प्रियान् ॥ १४८ ॥

मैं यह सब दुःखित होकर केवल हिन्दुओंको नहीं सुना रहा हूँ । मुसल्मान्, ख्रिस्ती, पारसी आदि प्रिय भाइयोंको भी सुनाता हूँ ॥ १४८ ॥

सम्बद्धं दास्यमेतत्स्यात्केवलैर्हिन्दुभिर्यदि ।
मौनमादाय व स्थातुं प्रार्थयेय सभागतान् ॥ १४९ ॥

यदि यह दासता केवल हिन्दुओंसे ही सम्बन्ध रखती होती तो मैं आपसे प्रार्थना करता कि आप चुप बैठे रहें ॥ १४९ ॥

दासतेयं प्रजाः सर्वाः स्पृशतीति निवेदये।
दुष्टयाऽदुष्टया वापि योद्धव्यं सभयाऽभिया ॥ १५० ॥

परन्तु यह समस्या तो समस्त भारतीय प्रजाकी है इसीलिये प्रार्थना कर रहा हूँ। महासभा दुष्ट हो अथवा अदुष्ट हो, उसे निर्भय होकर युद्ध करना तो पड़ेगा ॥ १५०॥

अस्य स्वातन्त्र्ययुद्धस्य जराजीर्णकलेवरे।
युष्माभिरर्पिता गुर्वी धूरूढा मे भविष्यति ॥ १५१ ॥

इस स्वतन्त्रताके युद्धका भार वृद्धावस्थासे जीर्णशरीरपर आपने रखा है, मैं उसका वहन करूँगा ॥ १५१ ॥

प्रक्रम्यते तदद्यैव समरो न मरावहः।
शैघ्र्यं नैव विधातव्यं केषुचित्कर्मसु क्वचित् ॥ १५२ ॥

अस्तु, इस युद्धका, जिसमें मृत्युके लिये स्थान है ही, आज ही मैं आरम्भ नहीं करता हूँ। किसी भी कार्यमें शीघ्रता नहीं करनी चाहिये ॥ १५२ ॥

वाइस्रायान्तिके पत्रं लेखनीयं मयाऽधुना।
शान्तये सर्वयत्नैस्तं प्रार्थयिष्ये पुनः पुनः ॥ १५३ ॥

अभी मुझे वाइसरायके पास पत्र लिखना होगा। शान्तिके लिये मैं सब प्रयत्नोंसे प्रार्थना करूँगा ॥ १५३ ॥

दिनानां विंशतिः प्रायः कार्येऽस्मिन्क्षपिता भवेत्।
सूत्रचक्राणि युष्माभिः सेव्यन्तां तावता समैः ॥ १५४ ॥

इस कार्यमें प्रायः २० दिन बीत जायँगे। तब तक आप लोग चर्खा कातें ॥ १५४ ॥

अबुल्कलाम-आजाद-राष्ट्रनाथाय रोचते।
समयेऽस्मिन्कथञ्चिन्नो सूत्रचक्रनिषेवणम् ॥ १५५ ॥

राष्ट्रपति मौलाना अबुलकलाम आजादको इस समय चर्खा चलाना किसी प्रकार भी नहीं पसन्द है ॥ १५५ ॥

न प्रभावः पतेत्तस्य कोऽपि राज्येऽतिनिष्ठुरे ।
राष्ट्रनाथो दृढेनैव मनसेति विचिन्त्यते ॥ १५६ ॥

राष्ट्रपतिका यह दृढ़ विचार है कि इस अतिनिर्दय सर्कारपर इसका कोई प्रभाव नहीं पड़ेगा ॥ १५६ ॥

त्रयोदशविधान्यत्र कार्याण्यद्यापि वः पुरः ।
वितिष्ठन्ते ततो भक्त्या कर्तव्यान्येव तानि तु ॥ १५७ ॥

आपके सामने तेरह प्रकारके कार्य आज भी पड़े हुए हैं, श्रद्धा भक्तिके साथ उन्हें ही करने चाहिये ॥ १५७ ॥

कर्तव्यपुञ्ज एतस्मिन्राष्ट्रनाथोऽस्ति संमतः ।
ततः सुश्रद्धमाराध्यं सभासभ्यैर्धृताभयैः ॥ १५८ ॥

इन कार्योंके लिये राष्ट्रपति सहमत हैं । अतः निर्भय हो कर महासभावादियोंको श्रद्धाके साथ उन्हें करना चाहिये ॥ १५८ ॥

अद्यप्रभृति मुक्तोऽस्मि सिताङ्गकृतबन्धनात् ।
इति ध्यातव्यमखिलैर्महाविश्वासपूर्वकम् ॥ १५९ ॥

आपको महाविश्वासके साथ यह मान लेना चाहिये कि आप आजसे ही अंग्रेजोंकी दासतासे मुक्त हैं ॥ १५९ ॥

केवलं कल्पनापक्षबलेनैव विहायसि ।
नोड्डयितुं कथयामि तत्त्वं बोधयामि च ॥ १६० ॥

केवल कल्पनाके बलपर ही मैं आकाशमें उड़नेके लिये नहीं कह रहा हूँ । तत्त्वका उपदेश भी करता हूँ ॥ १६० ॥

निश्चिनोति यदा कोपि पाशबद्धो न मत्कृते ।
पाशोऽयमिति तत्कालं पाशस्त्रुट्यति स स्वयम् ॥ १६१ ॥

जालमें फँसा हुआ कोई भी जब यह निश्चय कर लेता है कि यह जाल मेरे लिये नहीं है तो वह जाल उसी समय अपने आप टूट जाता है ॥ १६१ ॥

मनसा खण्डशश्छिन्ने तस्मिन्पाशे तु कर्मणा ।
भूमिसात्कर्तुमुद्युङ्क्ते स्वातन्त्र्यं याति स ध्रुवम् ॥ १६२ ॥

मनसे ही उस जालके टुकड़े कर देनेपर और कर्मसे उसे भूमिमें गाड़ देनेके लिये जो तैयारी करता है वह अवश्य स्वाधीनता प्राप्त करता है ॥ १६२ ॥

अतः परं न दासोऽस्मि तवेति प्रकटाक्षरम् ।
स्वामिनं वक्ष्यतीदं यः सोभयो निर्गतव्यथः ॥ १६३ ॥

जो आदमी स्वामीको स्पष्ट कह देता है कि आजसे मैं आपका दास नहीं हूँ वह निर्भय हो जाता है और उसके सभी दुःख दूर हो जाते हैं ॥ १६३ ॥

जिघांसा हृदये ते चेद्धन्तुं शक्नोषि मां परम् ।
जीवितं रक्षितुं वाञ्छा तच्छृणिवति वचो मम ॥ १६४ ॥

यदि आप मुझे मार डालना चाहते हों तो मार सकते हैं । यदि मुझे जीता रखनेकी इच्छा हो तो मेरी बात सुनें ॥ १६४ ॥

बन्धमुक्तं स्वयं चेत्त्वं स्वेच्छया मां करिष्यसि ।
याचिष्ये त्वामहं नैव किञ्चिदप्यथ कर्हिचित् ॥ १६५ ॥

यदि आप स्वेच्छासे मुझे दासतामेंसे छुड़ा देते हों तो मैं आपसे कभी कुछ और नहीं माँगूंगा ॥ १६५ ॥

अन्नवस्त्रार्जने शक्तमपि मां त्वमितोऽवधि ।
अबूभुजस्तथाऽदत्था वस्त्रे परवशाय मे ॥ १६६ ॥

मैं अपने लिये अन्न और वस्त्र पैदा करनेमें समर्थ था तो भी

आपने मुझे पराधीन बना रखा था अतः आजतक आपने मुझे खिलाया और वस्त्र दिये ।। १६६ ।।

ईश्वरं सम्परित्यज्य त्वामाधारं विधाय मे ।
मदीयं जीवनं सर्वं हस्ते तेऽज्ञानतो न्यधाम् ।। १६७ ।।

मैंने अज्ञानसे ही ईश्वरको छोड़कर, तुम्हें आधार बनाकर अपना समस्त जीवन आपको अर्पण कर दिया था ।। १६७ ।।

आलिङ्गितुं स्वतन्त्रत्वं प्रैरिरन्मां महाप्रभुः ।
ततो जातः स्वतन्त्रोऽस्मि नाधारं विचिनोमि ते ।। १६८ ।।

ईश्वरने मुझे स्वतन्त्र बननेकी प्रेरणा की है। अतः मैं स्वतन्त्र बना हूँ। तुम्हारा आधार नहीं ढूँढूंगा ।। १६८ ।।

अथ प्रतिनिधिं राज्ञः संप्राप्याहं न जातुचित् ।
स्वातन्त्र्यादपरं किञ्चिद्याचिष्येऽद्य कथञ्चन ।।१६९।।

मैं वाइसरायसे मिलकर स्वतन्त्रताके अतिरिक्त उनसे और कुछ नहीं माँगूंगा ।। १६९ ।।

देशं स्वतन्त्रतादेव्या योजयिष्यामहे वयम् ।
अथवा स्वीकरिष्यामः प्रियं मृत्युं सनातनम् ।।१७०।।

हम या तो देशको स्वतन्त्रता दिलायेंगे अथवा सनातन मृत्युका आलिङ्गन करेंगे ।। १७० ।।

मन्त्रोऽयं सर्वदा जाप्यो युष्माभिर्गतभीतिभिः ।
प्रतिक्षणं प्रतिश्वासं विस्मार्यो न कदाचन ।।१७१।।

इस मन्त्रको निर्भय होकर आप हर समय हर श्वासके साथ जपें। कभी भूलें नहीं ।। १७१ ।।

पारतन्त्र्यावलोकाय मा बिभर्तु कदाचन ।
जिजीविषां मनः कस्याप्यद्याऽज्ञानविडम्बितम् ।। १७२ ।।

परतन्त्रताके दर्शनके लिये अब किसीके मन में इच्छा नहीं होनी चाहिये ॥ १७२ ॥

महासभापथं शुद्धमनुगन्तुमुदारता ।
यस्मिन्नजायताऽसौ नो जीवितं निन्द्यमिच्छतु ॥१७३॥

महासभाके पवित्र मार्ग में चलनेकी उदारता जिसमें आ गयी है वह निन्दित जीवन जीना नहीं चाहेगा ॥ १७३ ॥

मन्यतामद्य युष्माकं समयोऽसौ निरामयः ।
भज्यतां न स युष्माभिर्भज्यतां शतधापि चेत् ॥१७४॥

आप आज यह मान लें कि आपकी यह प्रतिज्ञा निर्दोष और पवित्र है । आप टुकड़े-टुकड़े टूट जावें परन्तु इसे न टूटने दें ॥ १७४ ॥

गन्तुं कारागृहं नायं कालो मम मतौ मतः ।
मुक्तस्तिष्ठामि चेन्नो वो गमयिष्यामि बन्दिताम् ॥१७५॥

मेरी समझमें यह समय जेल जानेका नहीं है । यदि मैं छूटा रहा तो आपको जेल नहीं जाने दूँगा ॥ १७५ ॥

ब्रैटिशैर्दुःखदावाग्निसन्तप्तैः कथमद्य तैः ।
एतावतां भवेत्कार्यः प्रबन्धो बन्दिनामिह ॥१७६॥

अंग्रेज बेचारे स्वयं दुःखाग्निमें जल रहे हैं । वह आज इतने कैदियों-का प्रबन्ध कैसे कर सकते हैं ? ॥ १७६ ॥

भ्रातृभिर्भगिनीभिश्च भुज्यतां पीयतामथ ।
जीव्यतां केवलं प्राप्तुं स्वातन्त्र्यं श्वेतबन्धनात् ॥१७७॥

हमारे भाई, बहिन सभी आज भोजन करें तो स्वतन्त्रताके लिये, पीवें तो स्वतन्त्रताके लिये और जीवें तो भी स्वतन्त्रताके लिये ॥ १७७ ॥

प्रातरारभ्य सायान्तं जाग्रतां स्वपतां निशि ।
चिन्तैका हृदये तिष्ठेत्स्वातन्त्र्यस्याप्तयेऽद्य वः ॥१७८॥

प्रातःसे सायङ्काल तक जागते और रातमें सोते भी हृदयमें स्वतन्त्रता-प्राप्तिकी ही आपको चिन्ता होनी चाहिये ॥ १७८ ॥

शपथं कुरुताद्यैव परमेश्वरसाक्षिकम् ।
स्वातन्त्र्यं भारतस्यास्ति प्राप्तव्यमिति बन्धवः ॥१७९॥

भाइयो, परमेश्वरको साक्षी बनाकर आप प्रतिज्ञा करें कि भारतकी स्वतन्त्रता आपको प्राप्त करनी है ॥ १७९ ॥

तदभावे वरं गन्तुं मरणं शरणं परम् ।
इति यूयं विनिश्चित्यास्वजध्वं तत्प्रवृत्तिषु ॥१८०॥

स्वतन्त्रताके विना जीना नहीं परन्तु मरना हमें अच्छा लगेगा । ऐसा निश्चय करके आप उसकी प्रवृत्तिमें लग जायँ ॥ १८० ॥

स्वातन्त्र्यं जीवनं प्रोक्तं पारतन्त्र्यं मृतिस्तथा ।
कदाचिन्नैव जीवन्ति भीतिरीतिपराहताः ॥१८१॥

स्वतन्त्रता ही जीवन है । परतन्त्रता मृत्यु है । जो भयसे हार जाते हैं वह कभी जीते नहीं हैं ॥ १८१ ॥

मृत्युमालिङ्गितुं शक्तः समवाप्तुं कलां पराम् ।
जीवितस्य विजानाति व्यपेताघलवस्य हि ॥१८२॥

जो मृत्युका आलिङ्गन करनेमें समर्थ है वही मरनेकी सुन्दर कलाको जानता है ॥ १८२ ॥

प्रभवो वृत्तपत्त्राणां ये सभायामुपस्थिताः ।
लक्ष्यीकृत्य च तान् किञ्चिदिदानीं वक्तुमुत्सहे ॥१८३॥

समाचारपत्रोंके जो स्वामी इस सभामें उपस्थित हैं उनको उद्देश्य करके अब मैं कुछ स्पष्ट कहना चाहता हूँ ॥ १८३ ॥

द्वौ पन्थानौ हि विद्येते स्पष्टमेवाद्य तत्कृते ।
समर्थनं प्रजानां च राजपक्षसमर्थनम् ॥१८४॥

उनके लिये आज दो ही मार्ग हैं: या तो वह प्रजाका समर्थन करें या राजाका ॥ १८४ ॥

यद्यप्यद्य प्रजापक्षं द्रढयन्ति यथाबलम् ।
एते तथापि दृश्यन्ते शिथिलायितजिह्वकाः ॥१८५॥

यद्यपि आज यह प्रजापक्षका ही समर्थन करते हैं परन्तु इनके समर्थन-में शिथिलता दीख पड़ती है ॥ १८५ ॥

प्रजापक्षे निपत्यैते व्यतन्वन्यां सहायताम् ।
तदर्थं स्नेहभावेन तेभ्योऽहं बहु धारये ॥१८६॥

प्रजापक्षमें रहकर उन्होंने जो सहायता की है उसके लिये हम बहुत ऋणी हैं ॥ १८६ ॥

सुगुप्तपरिपत्त्रेणाऽजिगीषत्पकलत्र माम् ।
स्रस्तच्छलप्रबन्धोऽयं स्वयमेव पराजितः ॥१८७॥

श्री पकल् गुप्तपरिपत्रके द्वारा मुझे जीतना चाहते थे परन्तु उनका कपट प्रबन्ध टूट गया और वह स्वयं हार गये ॥ १८७ ॥

स्वार्थिनां वञ्चकानां च वागुरासु पतन्तु नो ।
वृत्तपत्रमहास्त्राढ्या भारतीया विवेकिनः ॥१८८॥

समाचारपत्र तो देशके महान् हथियार हैं । अतः स्वार्थियों और वञ्चकोंके जालमें उन्हें नहीं पड़ना चाहिये ॥ १८८ ॥

प्रथमोऽत्राधिकारोऽस्ति देशरक्षणकर्मसु ।
तेषामेव ततस्ते स्युः सर्वत्यागपरायणाः ॥१८९॥

देशरक्षाके कार्यमें उन्हींका प्रथम अधिकार है । अतः उन्हें सब त्याग करना पड़ेगा ॥ १८९ ॥

विद्यते सविधे तेषां लेखनी स्पष्टवादिनी ।
अनम्या निर्विकल्पा चाऽपराजेया च शासनैः ॥१९०॥

उनके पास जो स्पष्ट बोलनेवाली कलम है उसे ऐसे ही अनम्य और निर्विकल्प रहना चाहिये। सर्कारके सामने उसे हारना नहीं चाहिये ॥१९०॥

मुद्रणालयसम्पत्तीर्मा हरेच्छासनं यतः ।
ततोद्य वृत्तपत्राणां मुद्रणं तेऽवरुन्धताम् ॥१९१॥

सर्कार प्रेसकी सम्पत्तिको हर न ले, इस आशय से वह आज समाचारपत्रोंका प्रकाशन बन्द कर दें ॥ १९१ ॥

शासनं दुष्टभावाढ्यं मुद्रायन्त्रं हरेन्मम ।
तथापि स्वां न रुन्धीय लेखनीं सत्यलेखिनीम् ॥१९२॥

यह दुष्ट सर्कार हमारे प्रेसको लूट सकती है तथापि मैं अपने कलमको नहीं रोकूँगा ॥ १९२ ॥

एतेन व्यवहारेण पूर्वं मे मुद्रणालयम् ।
हृत्वाऽथ राजसात्कृत्वा पश्चान्मह्यं समार्पिपत् ॥१९३॥

इस व्यवहारसे, पहले मेरे प्रेसको सर्कारने लेकर अपने अधीन कर लिया था; परन्तु पीछेसे मुझे ही सौंप दिया ॥ १९३ ॥

परं न चरमं वस्तु युष्मान्याचेऽहमद्य तत् ।
मध्यमं मार्गमेकं वः सुकरं बोधयाम्यहम् ॥१९४॥

यह तो अन्तिम मार्ग है। मैं आपसे इस अन्तिम बात की याञ्चा नहीं करता हूँ। एक सुगम मध्यम मार्ग है। उसकी सूचना देता हूँ ॥ १९४ ॥

नियन्तुं वृत्तपत्राणि समज्यां समतिष्ठिपत् ।
राज्यं यां तां तिरस्कृत्य स्वतन्त्रा भवताऽधुना ॥१९५॥

समाचारपत्रोंको नियममें रखनेके लिये सर्कारने एक सभा बनायी है। उसका अपमान करके आप स्वतन्त्र हो जायँगे ॥ १९५ ॥

स्पष्टस्वरेण वक्तव्यं युष्माभिः सितशासनम् ।
वृत्तपत्रावरोधाय वयं स्मः कृतनिश्चयाः ॥१९६॥

आप स्पष्ट शब्दोंमें सर्कारको कह दें कि हम समाचारपत्रोंको बन्द करनेके लिये निश्चय करके बैठे हैं ॥ १९६ ॥

नास्माभिर्लेखनी स्वीया तवाधीना कृता क्वचित् ।
करिष्यते न साद्यापि मिथ्यावाचं निषेविणः ॥१९७॥

सर्कारको कहें कि तुम झूठी हो। हमने अपनी लेखनी न तो कभी तुम्हारे अधीन की और न आज भी करेंगे ॥ १९७ ॥

यदा स्वराज्यमार्तण्डो भारतध्वान्तधूननः ।
उदेष्यति तदास्माकं लेखनी प्रचलिष्यति ॥१९८॥

अंधकारको दूर करनेवाला जब भारतका स्वातन्त्र्य-सूर्य उदित होगा तब हमारी लेखनी चलेगी ॥ १९८ ॥

पकलं स्पष्टसंभाषा निर्भीका बोधयेत यत् ।
न स्मस्तव वयं स्मश्च सर्वदा राष्ट्रसंसदः ॥१९९॥

स्पष्टवादी और निर्भीक होकर आप पकलको कह दें कि हम महासभाके पक्षपाती हैं, तुम्हारे नहीं ॥ १९९ ॥

मिथ्यात्वदम्भपूर्णास्ते वार्ताः पत्रेषु नो वयम् ।
प्राकाश्यं क्वापि नेष्यामो महेशार्पितचेतसः ॥२००॥

हमने भगवान्‌के चरणोंमें अपने मनको अर्पित किया है अतः अपने पत्रोंमें तुम्हारी झूठ और दम्भपूर्ण बातोंको नहीं छापेंगे ॥ २०० ॥

इत्युक्त्वा चेति कृत्वा च स्वातन्त्र्याहवकर्मणि ।
यूयं सम्पादयिष्यध्वं साहाय्यं विगतोपमम् ॥२०१॥

ऐसा कहकर और करके आप स्वातन्त्र्ययुद्धमें अनुपम सहायता करेंगे ॥ २०१ ॥

स्वाधीनतायुगाहर्तुराहवात्पूर्वमेव तु ।
मनोदशा प्रजानां स्याद्युष्माभिः परिवर्तिता ॥२०२॥

स्वाधीनताके युगको लानेवाले युद्धसे पहले ही आप प्रजाकी मनोदशा बदल सकते हैं ।। २०२ ।।

ब्रुवे समादरेणाहं भारतीयमहीपतीन् ।
उद्दिश्य तेन शृण्वन्तु दत्तध्याना वचो मम ।।२०३।।

मैं भारतीय राजाओं को आदरके साथ कहता हूँ । वह ध्यान देकर मेरी बात सुनें ।। २०३ ।।

देशीयराज्यजातस्य देशिभूपहितैषिणः ।
भविष्यद्धितमालक्ष्य ते शृण्वन्तु वचो मम ।।२०४।।

मैं देशीय राज्यमें पैदा हुआ हूँ और देशीय राजाओंका हितैषी हूँ । अतः वे लोग मेरी बात सुनें ।। २०४ ।।

तैः प्रदत्तान्नपानाद्यैर्देहो मे समवर्ध्यत ।
ततः कृतज्ञभावेन याचेऽद्याऽत्यल्पमेव तान् ।।२०५।।

उन्हीं लोगोंके दिये हुए अन्न जलसे मेरा शरीर पालित हुआ है । अतः कृतज्ञभावसे मैं बहुत थोड़ी माँग पेश करता हूँ ।। २०५ ।।

मयि जीवति चेत्किञ्चिदुत्तमं संविधास्यथ ।
मानपूर्णं पदं यूयं लप्स्यध्वेऽत्र प्रजास्विति ।।२०६।।

मेरे जीते आप कुछ भी उत्तम कार्य कर लेंगे तो प्रजामें आपको मानपूर्ण स्थान मिल जायगा ।। २०६ ।।

जवाहिरो महाप्रज्ञो वल्लभो नरदुर्लभः ।
मानयेतां न तौ युष्मान्प्रजाहितकराविति ।।२०७।।

पण्डित जवाहिरलाल और नरोत्तम वल्लभभाई यह दोनों प्रजाके हितैषी हैं । यह आपको नहीं मानेंगे ।। २०७ ।।

भूपानामल्पभूपानां धनिनां च कृते तयोः ।
महामनसि स प्रेम गौरवं नापि विद्यते ।।२०८।।

राजाओं, छोटे-छोटे राजाओं और धनिकोंके लिये इनके उदार मनमें न गौरव है और न प्रेम है ॥ २०८ ॥

अधिकारेषु यत्किञ्चिद्भूपानां वस्तु विद्यते ।
प्रजानामेव तत्सर्वमिति ब्रूते जवाहिरः ॥ २०९ ॥

राजाओंके अधिकार में जो कुछ भी है वह सब प्रजाकी वस्तु है, ऐसा पण्डित जवाहिरलालजी कहते हैं ॥ २०९ ॥

आर्थिकीं योजनां काञ्चिद्वष्टीहाऽसौ व्यवस्थिताम् ।
तयैव भारतं कृत्स्नं युयोजयिषते सदा ॥ २१० ॥

वह कोई व्यवस्थित आर्थिक योजना चाहते हैं और उसी योजनासे सम्पूर्ण भारतको वह युक्त करनेकी इच्छा करते हैं ॥ २१० ॥

गगने वायुवेगेन धावत्येव जवाहरः ।
अनुसर्तुं न शक्नोमि युवानं तं गलद्वयाः ॥ २११ ॥

पण्डित जवाहिरलालजी जवान हैं । वह वायुवेगसे आकाशमें दौड़ते हैं । मैं वृद्ध हूँ । उनका अनुसरण नहीं कर सकता ॥ २११ ॥

निर्मिमीषेऽद्य यद्वस्तु तत्र भूपालपभूभुजाम् ।
विद्यते स्थानमित्यस्मान्मास्तु मे गीरुपेक्षिता ॥ २१२ ॥

मैं आज जो वस्तु बनाता हूँ उसमें राजाओं और सर्दारोंकेलिये स्थान है अतः मेरे वचनकी आप अवहेलना न करें ॥ २१२ ॥

राजकं सर्वमेवाहमाग्रहेण ब्रवीम्यदः ।
भोक्तव्यं वस्तु भुञ्जीथाः केवलं त्यागपूर्वकम् ॥ २१३ ॥

मैं समस्त राजाओंको आग्रहके साथ यह कहता हूँ कि वह भोग किये जानेवाली वस्तुका भोग करें परन्तु केवल त्यागपूर्वक ॥ २१३ ॥

आत्माधीनं विधातव्यं वस्तु यद्राजवंशजैः ।
रक्षकैस्तस्य तैर्भाव्यमीश्वरार्पणपूर्वकम् ॥ २१४ ॥

राजा लोग जिस वस्तुको अपने अधीन बनावें उसको वह ईश्वरको अर्पण करके स्वयं उसके रक्षक बन जावें ॥ २१४ ॥

वदेयुः सर्वदा नम्रा राजानः स्वाः प्रियाः प्रजाः ।
युष्माकमेव सर्वाणि सन्ति वस्तूनि नोऽत्र नः ॥ २१५ ॥

अपनी प्रिय प्रजाको वह सदा नम्र होकर कहें कि राज्यमें सब वस्तु प्रजाकी ही है, मेरी नहीं ॥ २१५ ॥

युष्मदायत्तममलं नृपत्वमपि नस्ततः ।
सेव्या यूयं वयं नित्यं सेवका वः सदेति च ॥ २१६ ॥

हमारा राजत्व भी आपके ही अधीन है । अतः हम आपके सेवक हैं और आप हमारे सेव्य हैं ॥ २१६ ॥

का युष्माभिः कृता सेवा प्रजानामिति संततम् ।
भजध्वं बोधयित्वैव द्युम्नेषु समभागिताम् ॥ २१७ ॥

आप लोगोंने प्रजाकी क्या सेवा की है, इसे समझकर ही आप राज्यधनमें समभागी बनें ॥ २१७ ॥

युष्मत्कृतप्रजासेवापुरस्कारोऽतिनिर्मलः ।
सिताङ्गशासनेनापि सर्वथा देय एव वः ॥ २१८ ॥

आपने जो प्रजाकी सेवाकी उसका अतिसुन्दर पुरस्कर आपके-लिये अंग्रेजी राज्यको भी देना चाहिये ॥ २१८ ॥

परन्तु स्वप्रजापादनतिं हित्वा विदेशिनाम् ।
पादावनतिराधेया किमर्थेति विचार्यताम् ॥ २१९ ॥

परन्तु अपनी प्रजाके चरणोंमें झुकनेके बदले विदेशियोंके पगमें क्यों झुकना चाहिये ? इसका आप विचार करें ॥ २१९ ॥

तथा भवत राजानो यथेच्छन्ति प्रजा हि वः ।
अश्नीतैश्वर्यमखिलं भूत्वैव स्वप्रजाप्रियाः ॥ २२० ॥

हे राजाओ! आपकी प्रजा जैसा चाहे वैसा आप बन जायँ। अपनी प्रजाका प्रिय बन कर ही सब ऐश्वर्यका भोग करें ॥ २२० ॥

कामये न कदापीति भारतीयाः क्षितीश्वराः ।
दुर्गतिं प्राप्य तिष्ठन्तु भुवि भिक्षापरायणाः ॥ २२१ ॥

मैं यह तो कभी भी नहीं चाहता हूँ कि भारतीय राजा दुःखी होकर भीख माँग कर जगत्में जीवें ॥ २२१ ॥

इच्छामि केवलं न स्युर्भारतक्षितिपालकाः ।
दासाः कस्यापि राज्यस्य विदेशीयस्य ते त्विति ॥ २२२ ॥

मैं तो इतना ही चाहता हूँ कि भारतीय नरेश किसी भी विदेशीय राज्यके दास न बनें ॥ २२२ ॥

पृच्छन्तु क्षितिपाः सर्वे राजनीतिसभापतिम् ।
जागरितासु क स्थानं प्रजासु स्यान्न इत्यलम् ॥ २२३ ॥

किसी राजनीतिविशारदसे राजाओंको पूछना चाहिये कि जो प्रजा सजग हो गयी है उसके बीचमें हमारा क्या स्थान है ? ॥ २२३ ॥

न स्याद्यस्यामवस्थायां गणनीयः कथञ्चन ।
चक्रवर्तिगणोऽपीति का कथाऽस्माकमीदृशाम् ॥ २२४ ॥

पूछें कि, जिस दशामें चक्रवर्ती राजाओंकी भी कोई गणना नहीं है तो हमारे जैसोंकी तो बात ही क्या है ? ॥ २२४ ॥

ब्रुवतामद्य भूपालास्तं वयं स्वप्रजानुगाः ।
अतः प्रभृति नातस्त्वामनुसर्तुं वयं क्षमाः ॥ २२५ ॥

राजा लोग अब विदेशीय सर्कारको कह दें कि अब हम अपनी प्रजाके अनुगामी बने हैं अतः आपका अनुसरण करनेमें अबसे हम लोग समर्थ नहीं हैं ॥ २२५ ॥

सुखभाजः प्रजा अस्मांञ्जिजीवयिषवो यदि ।
जीविष्यामो मरिष्यामस्तदिच्छामन्विति ध्रुवम् ॥ २२६ ॥

हमारी सुखी प्रजा यदि हमें जिलाना चाहेगी तो हम जीवेंगे और यदि वह मारना चाहेगी तो उसकी इच्छाके अनुसार हम मरेंगे ॥ २२६ ॥

**राजनीतिविरुद्धा नो वृत्तिरेषा भविष्यति ।**
**समयः कोऽपि विच्छिन्नो न भवत्येव तत्कृतः ॥ २२७ ॥**

राजनीतिके विरुद्ध हम बर्ताव नहीं करेंगे। उनके लिये की गयी कोई भी प्रतिज्ञा नहीं टूटेगी ॥ २२७ ॥

**प्रजाभिरपि वाच्यास्ते राजानः स्मो वयं प्रजाः ।**
**युष्माकं प्रथमं किन्तु भारतीयाः स्म इत्यथ ॥ २२८ ॥**

प्रजाओंको भी राजाओंसे कहना चाहिये कि हम आपकी प्रजा हैं परन्तु पहिले हम भारतीय हैं ॥ २२८ ॥

**अस्मानङ्गीकुरुध्वं चेत्सत्येन मनसा तदा ।**
**सत्येन मनसा युष्मत्स्वाम्यमङ्गीकरिष्यते ॥ २२९ ॥**

आप यदि सच्चे मनसे हमारा स्वीकार करेंगे तो हम भी आपका स्वामित्व सच्चे मनसे स्वीकार करेंगे ॥ २२९ ॥

**न्याय्यस्याप्यस्य वचसो वचनेन नृपा यदि ।**
**जिघांसन्तु प्रजाः सर्वा म्रियन्तां सुखशान्तिभिः ॥ २३० ॥**

इस योग्य वचनके कहनेसे भी यदि राजा प्रजाओंको मारना चाहें तो प्रजाको सुख-शान्तिसे मर जाना चाहिये ॥ २३० ॥

**अथात्रत्याश्च ये सन्ति श्वेतराजस्य सेवकाः ।**
**अनुकुर्वन्तु रानाडेगोविन्दं सर्वथाऽद्य ते ॥ २३१ ॥**

यहाँ पर अंग्रेजी राज्यके जो नौकर हैं उन्हें चाहिये कि गोविन्द रानाडेका अनुकरण करें ॥ २३१ ॥

**न्यायाधीशः स रानाडे त्यागपत्त्रं न संददे ।**
**समाचष्ट परं राष्ट्रसंसदोऽस्म्यनुगस्त्विवति ॥ २३२ ॥**

रानाडे न्यायाधीश थे। उन्होंने नौकरी नहीं छोड़ी और स्पष्ट कह दिया कि मैं कांग्रेसका अनुयायी हूँ ॥ २३२ ॥

गमिष्यामि भयान्मुक्तो न्यायाधीशो भवन्नपि।
अधिराष्ट्रसभं नित्यमित्यवोचत्स शासनम् ॥ २३३ ॥

मैं न्यायाधीश होकर भी निर्भयरूपसे कांग्रेसमें हमेशा जाऊँगा, इस प्रकारसे उन्होंने सर्कारको कह दिया था ॥ २३३ ॥

तदेकमपि कर्माहं नाचरिष्यामि यन्नहि ।
शोभिष्यते ममेत्येवमप्यवादीत्स शासनम् ॥ २३४ ॥

उन्होंने यह भी सर्कारको कह दिया कि मैं ऐसा एक भी काम नहीं करूँगा जो मुझे शोभा नहीं देगा ॥ २३४ ॥

राज्येऽत्र नियताः सन्ति भारता येऽधिकारिणः।
ब्रुवन्तु पकलं राष्ट्रसंसदः स्मो वयं त्विति ॥ २३५ ॥

इस राज्यमें जो भारतीय अधिकारी नियत हैं उन्हें चाहिये कि वह पकलको कह दें कि "हम कांग्रेसके हैं" ॥ २३५ ॥

एतदेवास्ति कर्तव्यं तैरिदानीं न चाधिकम्।
कैङ्कर्याद्भूपतेरद्य त्यागपत्त्रं न वाञ्छितम् ॥ २३६ ॥

आज उन्हें इतना ही करना है, अधिक नहीं। सर्कारकी नौकरीसे त्यागपत्र देना इष्ट नहीं है ॥ २३६ ॥

पत्त्रं प्रतिनिधौ श्वेतभूपतेः प्रेषयिष्यते ।
यावच्छक्यं विनम्रेण मयाऽसौ प्रार्थयिष्यते ॥ २३७ ॥

अंग्रेजीसर्कारके प्रतिनिधिके पास मैं पत्र भेजूँगा और उसमें यथाशक्य नम्रतासे मैं उनसे प्रार्थना करूँगा ॥ २३७ ॥

पत्त्रं पत्त्राणि वा तानि युष्माभिरवलोकितुम्।
शक्यन्ते सर्वथा तस्य नान्तरेणानुमोदनम् ॥ २३८ ॥

मेरे उस पत्र या उन पत्रोंको आप देख सकते हैं परन्तु आज्ञा या अनुमति बिना नहीं ॥ २३८ ॥

युष्माभिश्च तदा वाच्यं पत्त्रराशौ प्रकाशिते ।
सर्वथाऽनुमता नस्ते पत्त्रस्था विषया इति ॥ २३९ ॥

जब वह पत्र प्रकाशित होंगे तब आप कह दें कि पत्रमें लिखे गये विषय सब प्रकारसे हमें स्वीकृत हैं ॥ २३९ ॥

कश्चिन्न्यायाधिपः प्राप्य मामिहाब्रूत शङ्कितः ।
गुप्तपत्त्रै राष्ट्रसंसद्द्रोहिणोऽद्य क्रियामहे ॥ २४० ॥

एक न्यायाधीश शङ्कित होकर मेरे पास आकर बोले कि उन लोगोंको गुप्तपत्र भेज भेजकर कांग्रेसका विरोधी बननेको कहा जाता है ॥२४०॥

एवं बलविधानेन शासनेन नियन्त्रितैः ।
किमस्माभिरिहाचर्यमित्यपृच्छदसौ तु माम् ॥ २४१ ॥

उन्होंने मुझसे पूछा कि सर्कार इस प्रकारसे बलके द्वारा हमें नियन्त्रणमें रखती है । हम लोगोंको क्या करना चाहिये ॥ २४१ ॥

अब्रवं वः पदेऽहं चेत्स्यां पदं स्वं न संत्यजन् ।
तृणाय मत्वा पकलं न त्यजेयं सभामपि ॥ २४२ ॥

मैंने कहा कि, यदि आपके स्थानपर मैं होऊँ तो अपने पदका त्याग किये विना ही, पकलकी परवा किये विना, काँग्रेसको भी न छोडूँ ॥ २४२ ॥

युष्माभिरपि वक्तव्यं जीविकायै हि दासता ।
स्वीकृता तेन गुप्ताज्ञा न भवेत्प्रतिपालिता ॥ २४३ ॥

मैंने कहा कि, आप लोगोंको भी कह देना चाहिये कि जीविकाके लिये हम नौकरी करते हैं अतः आपकी किसी गुप्त आज्ञाका पालन हमसे न हो सकेगा ॥ २४३ ॥

न्याय्यं स्यात्तु नम्रेण शिरसा विधृतं भवेत् ।
इत्यपि प्रतिवाच्यं स्यादित्यसौ ज्ञापितो मया ॥ २४४ ॥

मैंने कहा कि, आप यह भी कह दें कि, जो उचित होगा उसे तो सिर झुकाकर मानेंगे ॥ २४४ ॥

अथ दण्डधरा ग्राम्या नागराश्चापि सैनिकाः ।
निभृतं मां समायन्ति तथाऽऽज़ादं जवाहिरम् ॥ २४५ ॥

ऐसे ही गाँव और नगरके भी सर्कारी पुलिस और लश्करी लोग चुपचाप मेरे पास, मौलाना आजादके पास और पण्डित जवाहिरलालके पास आते रहते हैं ॥ २४५ ॥

हृदयेन वयं सर्वे युष्माकमिति सर्वदा ।
ते ब्रुवन्ति महादुष्टशासनेन विमर्दिताः ॥ २४६ ॥

महादुष्ट सर्कारसे पीड़ित होकर वह कहते हैं कि हृदयसे तो हम आपके ही हैं ॥ २४६ ॥

प्रहातुं जीविकां सद्यो दीनांस्तानपि न ब्रुवे ।
इदानीं कुर्वतां किं ते परित्यज्य स्वजीविकाम् ॥ २४७ ॥

उन गरीबोंको भी मैं नौकरी छोड़नेको नहीं कहता हूँ । वह नौकरी छोड़कर आज करेंगे क्या ? ॥ २४७ ॥

एतैरपि परं वाच्यं शासनं स्पष्टया गिरा ।
अस्माकं हृदयं राष्ट्रसंसदीत्यद्य निर्भयम् ॥ २४८ ॥

परन्तु उन्हें भी स्पष्ट शब्दोंमें सर्कारको कह देना चाहिये कि हमारा हृदय तो हमने महासभाको दे दिया है ॥ २४८ ॥

अपराधविहीनेषु निरस्त्रेषु जनेष्वपि ।
प्रहारमस्त्रशस्त्राणां करिष्यामो नहीति च ॥ २४९ ॥

उन्हें यह भी सर्कारसे कह देना चाहिये कि निरपराधी और निरस्त्र लोगों पर हम शस्त्रप्रहार नहीं करेंगे ॥ २४९ ॥

वेतनानि ग्रहीष्यामः करिष्यामोऽनुशासनम् ।
धर्म्यमेव तवेत्येवं वक्तव्यं तैरभीहतैः ॥ २५० ॥

उन्हें निर्भय होकर यह भी कहना चाहिये कि हम आपसे वेतन लेंगे और धर्मयुक्त आपकी आज्ञा मानेंगे ॥ २५० ॥

अत्यल्पमपि सत्कर्म कर्तव्यत्वेन बोधितम् ।
कर्तुं न शक्यते तेषु वाच्यं किमपि नास्ति मे ॥ २५१ ॥

जो लोग थोड़ा भी अपना कर्तव्य पालन नहीं कर सकते उनके लिये कहनेको मेरे पास कुछ नहीं है ॥ २५१ ॥

परं ये कष्टमासह्याऽविषह्यमपि सन्ततम् ।
करिष्यन्ति मया प्रोक्तं सन्तरिष्यन्ति ते भयम् ॥ २५२ ॥

परन्तु जो असह्य कष्टको भी सहन करके मेरी बात मानेंगे वह भयसे पार हो जायँगे ॥ २५२ ॥

आकाशरथमारुह्य पावकावर्षणैरपि ।
दास्यपाशेन संबद्धुं युष्मान्कोपि क्षमो नहि ॥ २५३ ॥

विमानमें चढ़कर अग्निवर्षा करके भी आपको गुलामीके बन्धनमें बाँधनेको कोई समर्थ नहीं है ॥ २५३ ॥

विद्याग्रहणसक्तानां छात्राणां निचयानपि ।
वक्तुं कतिपयाञ्छब्दानुत्सहे तत्प्रणोदितः ॥ २५४ ॥

जो विद्यार्थी पढ़ रहे हैं उनके लिये भी उनके कहनेसे ही, मैं कुछ शब्द कहना चाहता हूँ ॥ २५४ ॥

समरेऽस्मिन्यदि स्थित्वा दिनानि कतिचित्पुनः ।
विद्याशालैव गन्तव्या तत्रैव स्थीयतां सुखम् ॥ २५५ ॥

यदि कुछ दिनों तक इस युद्धमें पड़कर पुनः स्कूल, कालेजमें ही जाना हो तो वहाँ ही आप लोग रहें ॥ २५५ ॥

कायेन मनसा वाचा स्वकीयं निखिलं यदि।
होतुं युद्धाध्वरे सज्जा आयान्त्वधिमहासभम् ॥ २५६ ॥

परन्तु यदि तन, मन और वाणी से आप अपना सब कुछ युद्धरूप अग्निमें होमनेके लिये तैयार हों तो महासभामें आ जावें ॥ २५६ ॥

छात्रा अध्यापकान्स्वीयान्प्रार्थयन्तां पुनः पुनः ।
स्वातन्त्र्यावाप्तिसन्मार्गं नेतुं शिष्याननल्पकान् ॥ २५७ ॥

विद्यार्थी अपने अध्यापकोंसे पुनः पुनः प्रार्थना करें कि वह अपने शिष्योंको स्वतन्त्रताकी प्राप्तिके मार्गमें ले जायँ ॥ २५७ ॥

आस्माका यदि यूयं स्थ कुरुध्वं सफलेहितान्।
अस्मानित्यखिलाश्छात्रा ब्रुवन्त्वध्यापकान्प्रति ॥ २५८ ॥

तथा यह भी कहें कि, यदि आप भी हमारे ही हैं तो हम सबको पूर्णमनोरथ बनावें ॥ २५८ ॥

गणैर्विद्यार्थिनां सर्वदेशेष्वेव स्वतन्त्रताम् ।
समवाप्तुं महान्यत्नः साधितः कर्मठैः परैः ॥ २५९ ॥

सभी देशोंमें कर्मवीर विद्यार्थियोंने अपने देशकी स्वतन्त्रता प्राप्त करनेके लिये बड़े बड़े प्रयत्न किये हैं ॥ २५९ ॥

मया प्रोक्तमतीवाल्पं भारतच्छात्रसंघकः ।
यदि कार्यं प्रकुर्वीत साफल्यं स्यात्तदद्भुतम् ॥ २६० ॥

भारतके विद्यार्थी मेरे बताये हुए थोड़े कार्यको भी यदि करेंगे तो अद्भुत सफलता प्राप्त करेंगे ॥ २६० ॥

युद्धेऽस्मिन्नास्ति कर्तव्यं प्रगुप्तं कर्म किञ्चन।
गोपयित्वा कृतं कर्म पापायात्र भवेदलम् ॥ २६१ ॥

इस युद्धमें छिपकर गुप्तरूपसे कुछ भी नहीं करना है। गुप्त रूपसे किये हुए कर्मसे पाप ही लगता है ॥ २६१ ॥

राजद्रोहाभिधं युद्धमेतत्तु प्रचलिष्यति ।
अनावृतं भवेदत्र कृतं सर्वं सुबुद्धिभिः ॥ २६२ ॥

यह राजद्रोहका युद्ध जब शुरू होगा तो इसमें छिपा हुआ कुछ भी नहीं रहेगा। सबको सब कुछ कह देना पड़ेगा ॥ २६२ ॥

स्वतन्त्रैस्सज्जनैः कैश्चित्कर्म गुप्तं न किञ्चन।
क्रियेताथ क्रियेतापि पश्चात्तापेन दह्यते ॥ २६३ ॥

स्वतन्त्र और सज्जन कुछ भी गुप्त कार्य नहीं करते और यदि करें भी तो पश्चात्तापसे जलते रहते हैं ॥ २६३ ॥

प्राप्तस्वातन्त्र्यका यूयं गुप्तदूतादिरक्षणे ।
मनो धास्यथ तत्काल इति जानाम्यनिश्चितम् ॥ २६४ ॥

स्वतन्त्रता प्राप्त करनेके पश्चात् आप लोग गुप्तचर आदि रखनेकी इच्छा करेंगे इसे मैं निश्चित रूपमें नहीं जानता हूँ ॥ २६४ ॥

तस्मिन्काले प्रमोदाढ्या न श्रोष्यथ वचो मम।
गुप्तेषु व्यवहारेषु रता वेद्म्यहमित्यपि ॥ २६५ ॥

उस समय तो आप आनन्दमें मग्न होंगे। मेरी बात नहीं सुनेंगे। क्योंकि उस समय आप गुप्त व्यवहारमें लगे होंगे, मैं इसे जानता हूँ ॥२६५॥

परं प्रक्रान्त एतस्मिन्विक्रान्ते निर्भयैर्भवेत् ।
अग्न्यस्त्रक्षिप्तगुलिकाप्रहार उरसि श्रितः ॥ २६६ ॥

परन्तु इस युद्धके शुरू होनेपर, निर्भय होकर अपनी छातीमें बन्दूककी गोलीको स्वीकार कर लेना पड़ेगा ॥ २६६ ॥

अतो गुप्तः समाचारो जन्येऽस्मिञ्ज्ञायतां परम्।
पापायेति विनिश्चित्य पादन्यासोऽत्र धीयताम् ॥ २६७ ॥

अतः इस युद्धमें गुप्तरूपसे कुछ भी करना पाप होगा, ऐसा निश्चय करके ही इसमें आप पग रखेंगे ॥ २६७ ॥

अध्यापकपदं याता विद्वांसोपि च मद्वचः ।
करिष्यन्ति स्वहृदये ममाशंसेति सर्वदा ॥ २६८ ॥

मुझे सदा ही यह आशा है कि विद्वान् अध्यापक भी मेरे इस वचनको अपने हृदयमें स्थान देंगे ॥ २६८ ॥

विद्यते हृदये मेऽत्र वक्तव्यं बहुधा बहु ।
कालाभावेन तस्मात्स्यादेतेनैव समापनम् ॥२६९॥

मेरे हृदयमें तो अभी तो बहुत प्रकारसे बहुत कहनेको बाकी ही है। परन्तु समय नहीं है। अतः इतनेसे ही समाप्त करता हूँ ॥ २६९ ॥

हिन्दीभाषानभिज्ञानां परिबोधाय भाषणम् ।
आङ्ग्लभाषाश्रयेणापि कर्तव्यमवशिष्यते ॥२७०॥

जो लोग हिन्दी भाषा नहीं जानते हैं उनको समझानेके लिये अंग्रेजी भाषामें भाषण करना अवशिष्ट है ॥ २७० ॥

रात्रिर्जाताऽथ संजातं कालातिक्रमणं महत् ।
शान्त्या तथापि तिष्ठद्भ्यो युष्मभ्यं बहु धारये ॥२७१॥

रात्रि हो गयी है। समय बहुत बीत गया है। तो भी आप शान्तिसे बैठे हैं, इसके लिये आपका आभार मानता हूँ ॥ २७१ ॥

वर्षाणां विंशतिं यावद्द्व्यधिकामहमार्जयम् ।
संयमं परमं वाचि लेखनेऽपि महाद्भुतम् ॥२७२॥

२२ वर्षोंसे मैंने अपनी वाणी और अपने लेखमें अद्भुत संयम पैदा किया है ॥ २७२ ॥

यावच्छक्यं निजां शक्तिमवियन्ब्रह्मचारिषु ।
लभते नियतं सोऽत्र पवित्रं परमं पदम् ॥२७३॥

जो मनुष्य अपनी शक्तिको यथाशक्ति व्यय होनेसे बचाता है वह ब्रह्मचारियोंके पवित्र पदको पाता है ॥ २७३ ॥

परमः संयमी वर्णी मन्देनैन स्वरेण च।
सर्वदा कुरुते योगी भाषणप्रतिभाषणे ॥२७४॥

जो खूब संयमी ब्रह्मचारी होगा वह मन्दस्वरसे ही सवाल जवाब भी करेगा ॥ २७४ ॥

अद्यावधि मया सम्यक्प्रयत्नः परिषेवितः।
अस्यां दिशि तथाप्यद्य संयमस्त्रुटितोऽभवत् ॥२७५॥

इस दिशामें मैंने आजतक सम्यक् प्रयत्न किया है। परन्तु आज वह संयम टूट गया है ॥ २७५

एतावन्तं जनौघं समितमिह चिरं यस्य कस्यापि लाभा-
द्दीर्घं कालं निरोध्याहमपि बहुगुणं लाभमेवात्र लब्धुम्।
आसीद्यद्यन्मदीये हृदयपटल उद्घाट्य तत्सर्वमद्य,
युष्मान्द्वारीविधायाखिलभरतधराजान्मानवान्बोधयामि ॥२७६॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
ऽष्टादशः सर्गः

इतने मनुष्योंको लम्बे समय तक जिस किसी भी लाभकेलिये रोककर स्वयं भी बहुत लाभ प्राप्त करनेकेलिये मेरे हृदयमें जो कुछ था, मैंने उघाड़कर कह दिया है और आपको द्वार बनाकर समस्त भारतवासियों को उससे अवगत कर रहा हूँ ॥ २७६ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
अष्टादशः सर्गः



# एकोनविंशः सर्गः

ततः परं कृपारत्नराशिरेष महामतिः।
आङ्ग्ल्या गिरा स्ववक्तव्यं वक्तुमारब्ध तन्निशि ॥ १ ॥

उसके पश्चात् उसी रात्रिमें परमदयालु श्री महात्माजी अंग्रेजीमें भाषण देने लगे ॥ १ ॥

येषां स्वप्रियबन्धूनामुपदेशे नियोजितः।
आसं तेषां पुरोऽत्यन्तं कणेहत्याहमब्रवम् ॥ २ ॥

जिन भाइयोंको उपदेश करनेके लिये मुझे कहा गया था उनके आगे मैं पेटभर बोला हूँ ॥ २ ॥

तेषां नेतेति पृतनापतिरित्यपि भूरिशः।
शब्दालङ्कारझङ्कारैर्लोको मामभ्यवर्धयत् ॥ ३ ॥

लोगोंने मुझे अपना नेता कहकर, अपना सेनापति कहकर मेरा मान बढ़ाया है ॥ ३ ॥

परमात्मानमीक्षेऽहं तन्नेतेति दृशा नहि।
सेनानीतिदृशा चापि मोहयामि न तत्त्वदृक् ॥ ४ ॥

परन्तु मैं अपनेको उनके नेताकी दृष्टिसे अथवा सेनापतिकी दृष्टिसे नहीं देखता हूँ। मैं तत्त्व समझता हूँ, अपनेको मोहित नहीं कर सकता ॥ ४ ॥

शासनायात्र केषांचिद्यत्सत्त्वं या च योग्यता।
अपेक्ष्यते न तत्राहं धात्रास्म्यधिकृतो मनाक् ॥ ५ ॥

लोगोंके ऊपर शासन करनेके लिये जो बल और योग्यता चाहिये, भगवान्ने मुझे वह नहीं दिये हैं ॥ ५ ॥

प्रेमातिरिक्तं नो रिक्थं पश्यामि मम संनिधौ।
प्रेमसत्त्वातिरिक्तं नो सत्त्वं तत्त्वेन मे स्थितम्॥ ६ ॥

प्रेमके अतिरिक्त मेरे पास कोई धन नहीं है। प्रेमके अतिरिक्त मैं किसी अन्य धनको तात्त्विक धन भी नहीं समझता ॥ ६ ॥

मम हस्ते च या यष्टिः सुदृष्टिरिव वीक्ष्यते।
विस्रसाशीर्णदेहस्य साहाय्यायैव मन्यताम् ॥ ७ ॥

मेरे हाथमें जो यह सुन्दर लकड़ी दीख रही है वह भी वृद्धतासे जीर्ण-शीर्ण शरीरकी सहायताके लिये ही है ॥ ७ ॥

अत्रापि नाधिकारो मे स्वेच्छया कोऽपि वः प्रभुः।
द्विधाकृत्य त्रिधाकृत्य भङ्क्तुमेतां तपस्विनीम्॥ ८ ॥

इसपर भी मेरा कोई अधिकार नहीं है। आपमेंसे कोई भी इस बेचारीको दो-तीन टुकड़े कर सकता है ॥ ८ ॥

कथमेतादृशः पङ्गुर्व्यङ्गो गर्वं निषेवताम्।
महाविश्वासभारेण युष्मद्दत्तभरो भृशम् ॥ ९ ॥

इस प्रकारका पङ्गु और अङ्गहीन मैं कैसे गर्व करूँ? आपने मुझपर बहुत बड़ा विश्वास करके अत्यन्तभार मुझपर रखा है ॥ ९ ॥

पृतनापतितावेषो लघयेन्न शिरोभरम्।
सेवाधर्माधिपूतोऽहं भवेयमनुकम्पितः ॥ १० ॥

सेनापतित्वका भार मेरे सिरके भारको हलका नहीं बनाता है। सेवाधर्मसे पवित्र हो कर मैं सबका कृपापात्र बनूँ, यह इच्छा है ॥ १० ॥

मदीयहृदयाकाशे प्रेमसम्मदपूरिते ।
स्थितैर्विचारसद्रत्नैर्युष्मत्सेवा सुखावहा ॥ ११ ॥

प्रेम और आनन्दसे पूर्ण मेरे हृदय-आकाशमें जो विचार भरे पड़े हैं उनसे मैं आपकी सेवा करके सुख मानूँगा ॥ ११ ॥

इति विज्ञाय युष्माकं विद्याबुद्धिमतामपि।
गरीयसां पुरो हार्दं मृदुं भावं प्रकाशये ॥ १२ ॥

ऐसा समझकर ही विद्वान्, बुद्धिमान् और श्रेष्ठ आपके समक्ष मैं अपने हृदयके नम्र भावको प्रकाशित करता हूँ ॥ १२ ॥

स्वतन्त्रतामहारत्नमधिगन्तुं यशस्विनः।
वस्तुतो नाधुना युद्धसंरम्भोऽयं विरच्यते ॥ १३ ॥

हे यशस्वी बन्धुओ ! स्वतन्त्रतारूप महारत्नको प्राप्त करनेके लिये वस्तुतः अभी ही यह युद्ध शुरू नहीं हो रहा है ॥ १३ ॥

आधीन्व्याधीन्निराकर्तुं कर्तुं मार्गं विकण्टकम्।
विधयो बहवः सन्ति पालनीया मया पुनः ॥ १४ ॥

आधि ( मानसिक पीड़ा ), व्याधि ( शारीरिक पीड़ा ) को दूर करनेके लिये तथा मार्ग निष्कण्टक बनानेके लिये मुझे बहुतसे विधि-विधान करने हैं ॥ १४ ॥

नितरां दुर्वहो भारो मयि वृद्धे न्यधीयत।
युष्माभिः सोऽस्ति निर्वाह्यो मया केनापि यत्नतः ॥ १५ ॥

मुझ बूढ़ेके ऊपर दुर्वह भार आपने रखा है। अब तो उसे मुझे किसी प्रकारसे निभाना ही पड़ेगा ॥ १५ ॥

येषां चाहमविश्वास्यः सुहृदामभिवाञ्छताम्।
देशश्रेयः पुरस्तेषां प्रस्तोतव्यास्ति तर्कभूः ॥ १६ ॥

देशहित चाहनेवाले जिन मित्रोंको मेरा विश्वास नहीं है उनके आगे तो मुझे थोड़ी सी दलीलें रखनी पड़ेंगी ॥ १६ ॥

सप्ताहेषु ममाल्पेषु मित्त्राणां सुमनोभुवः।
प्रच्युतिर्निश्चितं जाता मर्मावित्तन्ममाभवत् ॥ १७ ॥

थोड़े ही सप्ताहोंमें मेरे मित्रोंके मनसे मैं च्युत हो गया हूँ। इससे मेरे मनको बहुत आघात लगा है ॥ १७ ॥

नाहं परं मतिभ्रष्टस्तेषां दृशि सुमेधसाम् ।
जातः किन्तु मयाऽच्योति प्रामाण्यादपि सर्वथा ॥ १८ ॥

उनकी दृष्टिमें केवल मेरी बुद्धि ही भ्रष्ट नहीं हुई है किन्तु मैं प्रामाणिकता से भी पतित हो गया हूँ ॥ १८ ॥

यदि नश्यति मे बुद्धिर्नश्यत्वत्र न मे खिदा ।
प्रामाण्यं तु कथं प्राणनिधायं निहितं व्रजेत् ॥ १९ ॥

यदि मेरी बुद्धि नष्ट होती हो तो भले ही हो जाय, इसका मुझे दुःख नहीं है । परन्तु प्राणके समान जिस प्रामाणिकताको मैंने बचाये रखा है, वह कैसे चली जाय ? ॥ १९ ॥

प्रामाण्यं निर्गतं नोवेत्यत्र ते सुहृदो मम ।
प्रमाणं केवलं तत्राधिक्रियेऽहं न जातुचित् ॥ २० ॥

मेरी प्रामाणिकता चली गयी है या नहीं, इसमें तो मेरे वह मित्र ही प्रमाण हैं । इस विषयमें बोलने का मुझे कोई अधिकार नहीं है ॥२०॥

सत्यस्य मार्गणे येऽत्र व्यापृताः स्युरनारतम् ।
दम्भस्तम्भमनादृत्य सेवासद्मविनायकाः ॥ २१ ॥
यथामति यथाशक्ति प्रजासेवनतत्पराः ।
सन्ति ये जीवने तेषामायात्येवैषिका स्थितिः ॥ २२ ॥

जो दयाको छोड़कर सेवाभावसे सत्यकी शोधमें रातदिन अपनी बुद्धि और शक्तिके अनुसार लगे रहते हैं उनके जीवनमें यह स्थिति आती ही है ॥ २१-२२ ॥

ज्ञातिपङ्क्तिविभेदादिबलवद्विषवर्जितः ।
पञ्चाशता शरद्भिस्तु प्रसितो जनसेवने ॥ २३ ॥

ज्ञाति-पंक्तिके भेदसे अलग रहकर ५० वर्षोंसे जनसेवामें लगा हुआ हूँ ॥ २३ ॥

साम्राज्यस्यापि शुश्रूषामकार्षमसकृत्पुरा ।
अनपेक्ष्य प्रतिष्ठाया लाभं चानुग्रहस्य वा ॥ २४ ॥

पहले मैंने साम्राज्यकी भी अनेक बार सेवा की है। उसमें प्रतिष्ठा, लाभ और दया की मैंने परवा नहीं की थी ॥ २४ ॥

श्रीमल्लिन्‌लिथगो जातः सौभाग्येन सुहृन्मम ।
तस्य मैत्रीसुखास्वादं स्वदेऽद्यापि समुज्ज्वलम् ॥ २५ ॥

श्रीमान् वाइसराय लिन्‌लिथगो सौभाग्यसे मेरे मित्र बने हैं। उनकी मैत्रीके सुखका आज भी मैं सुन्दर स्वाद ले रहा हूँ ॥ २५ ॥

तेन सत्रैषिका मैत्री राज्यतन्त्रनियन्त्रिताम् ।
मर्यादां कामपि क्वापि कथञ्चिन्नावलोकते ॥ २६ ॥

उनके साथकी यह मित्रता उनके किसी सर्कारी ओहदेको नहीं देखती है ॥ २६ ॥

सोऽनुमन्येत नो वेति तत्त्वं तन्नाद्य तत्त्वतः ।
जानामि किन्तु गाढिष्ठः सम्बन्धो विद्यतेऽद्य नौ ॥ २७ ॥

यह तो मैं वस्तुतः नहीं जानता हूँ कि इस बातको वह स्वीकार करेंगे या नहीं। परन्तु मैं जानता हूँ कि आज हम दोनोंका गाढ़ सम्बन्ध है ॥ २७ ॥

तेनैकदा स्वपुत्र्याहं पर्यचायि शुभे दिने ।
जामातापि च तस्यासीत्स्निग्धो मयि विवेकवान् ॥ २८ ॥

उन्होंने एक दिन अपनी पुत्रीके साथ मेरा परिचय कराया। उनके दामाद भी मुझपर प्रेम रखते थे ॥ २८ ॥

मत्तोऽपि बहुलं प्रेम महादेवे न्यधादसौ ।
स च सा च समायातौ मम पार्श्वे मुदान्वितौ ॥२९॥

मुझसे भी अधिक प्रेम वह महादेव देसाई पर रखती है। एक दिन वाइसरायकी पुत्री पतिके साथ मेरे यहाँ आयी ॥ २९ ॥

पितुरादेशवर्तिन्याः संमतायाः पितुस्तथा ।
तस्याः क्षेमं सदा ज्ञातुं क्षम एव भवाम्यहम् ॥३०॥

वह पिताकी आज्ञाकारिणी है। पिताका उसपर प्रेम भी बहुत है। उसका कुशलसमाचार मुझे मिल ही जाया करता है ॥ ३० ॥

रहस्यमेतदत्यर्थं गोपनीयमपीह यत् ।
प्रसङ्गादेव तद्वोऽग्रे विवृणोमि निसर्गतः ॥३१॥

यह बात सबके सामने कहनेकी नहीं है। परन्तु प्रसंगवश मैं स्वाभाविक ही इसे कहता हूँ ॥ ३१ ॥

प्रवर्त्स्यमान आयुद्धे राजनीत्या विरोधने ।
अयं वैयक्तिकः स्नेहो नान्तरायं विधास्यति ॥३२॥

राजनीतिके विरोधमें मैं जिस युद्धका आरम्भ करनेवाला हूँ उसमें यह वैयक्तिक स्नेह-विघ्न नहीं पैदा करेगा ॥ ३२ ॥

साम्राज्यामितशक्त्या चेदवतिष्ठेत योधनम् ।
राज्यतन्त्रविरक्ताभिः प्रजाभिः प्रतिरोत्स्यते ॥३३॥

यदि साम्राज्यकी अपरिमित शक्तिके साथ युद्ध होगा तो राज्यतन्त्रसे जो लोग विरक्त हैं वह सभी उस युद्धका प्रतिरोध करेंगे ॥ ३३ ॥

तदानीं तासु सर्वासु प्रजासु प्रतिबन्धनम् ।
अक्रथनातिरिक्तं स्यान्नान्यत्किञ्चिन्मया कृतम् ॥३४॥

उस समय उन सब लोगोंके ऊपर अहिंसाके अतिरिक्त मेरा कोई बन्धन नहीं होगा ॥ ३४ ॥

अहिंसापि परा साऽत्र नीतिरूपा भविष्यति ।
प्रजानां सकलानां तद्युद्धभाजां नियन्त्रिता ॥३५॥

वह अहिंसा भी युद्धमें लगी हुई प्रजाके लिये ही नीतिरूपमें नियन्त्रित रहेगी ॥ ३५ ॥

मधुमन्तं च सम्बन्धं सह तेनाद्य बिभ्रतः।
युध्यमानस्य तेन स्यान्मम कार्यमनुल्वणम् ॥३६॥

वाइसरायके साथ आज भी मधुर सम्बन्ध बना हुआ है। जब उनके साथ मैं युद्ध करूँगा तो मेरा कार्य कठिन हो जायगा ॥ ३६ ॥

बहुशस्तेन विश्वासो मयि साधु न्यधीयत।
लोककल्याणदृष्ट्यैव तच्च तस्यैव शोभते ॥३७॥

उन्होंने मुझपर बहुत विश्वास रखा है। लोककल्याणकी दृष्टिसे यह उन्हें ही शोभा देता है ॥ ३७ ॥

तस्य स्वभावविज्ञानात्सकृदप्यधुनाप्यहम्।
प्रत्ययं तं प्रतीच्छामि श्रेयस्तस्यैव तद्भवेत् ॥३८॥

उनके स्वभावको मैं जानता हूँ अतः अभी भी, एकबार भी उस विश्वासकी मैं आशा रखता हूँ। उससे उन्हींका कल्याण होगा ॥ ३८ ॥

प्रतीतिं मयि नाकार्षीत्साम्राज्यं ब्रैटिशं यदा।
तदापि तद्धिताकाङ्क्षा मय्यासीदिति वेत्ति सः ॥३९॥

जिस समय ब्रिटिश साम्राज्यने मुझपर विश्वास नहीं रखा था तब भी मैंने उसके हितकी ही इच्छा की थी, इसे वह जानते हैं ॥ ३९ ॥

वस्तु प्रस्तुवतश्चेदं भवतां सन्निधौ मम।
संतृप्तिः परमानन्दो हृदयेनानुभूयते ॥४०॥

इस वस्तुको आपके सामने उपस्थित करते हुए मेरे हृदयमें तृप्ति और महान् आनन्दकी प्रतीति हो रही है ॥ ४० ॥

स्मृतिस्फूर्तिरहो चार्ली ऐन्ड्रूजस्य मनोहरा।
मदीये मनसि स्निग्ध इदानीं समजायत ॥४१॥

आज मेरे प्रेमपूर्ण हृदयमें चार्ली एन्ड्रूजकी याद आ रही है ॥४१॥

तस्य धर्मावतारस्य स्वादर्शस्याङ्गलसंस्कृतेः।
भ्राम्यतीव शिवं रूपं परितो मामिहाधुना ॥४२॥

वह धर्मावतार थे। आङ्ग्लसंस्कृतिके वह सुन्दर आदर्श थे। उनका वह आनन्दी रूप मेरे चारों ओर घूम रहा है ॥ ४२ ॥

बहुभ्यो भारतीयेभ्यो बहुलां प्रेमसङ्गतिम्।
अपुषं तेन तस्यासं विश्वास्योऽहं विशेषतः ॥४३॥

मैंने बहुतसे भारतीयोंकी अपेक्षा उनसे अधिक प्रेम किया। इसलिये मैं उनका विशिष्ट रूपसे विश्वासपात्र था ॥ ४३ ॥

आवां परस्परं नित्यं रहस्यं मनसि स्थितम्।
प्राचकाशावहि श्रद्धा यतोऽनन्तोदपद्यत ॥४४॥

हम दोनों अपने मनकी गुप्त बातोंको परस्पर प्रकट करते थे जिससे कि अनन्त श्रद्धा पैदा हो गयी ॥ ४४ ॥

विवरीतुं पुरस्तान्मे भावं कमपि मानसम्।
कदापि न मनस्तस्य संकोचं समशिश्रियत् ॥४५॥

मेरे सामने किसी भी मानसिक भावको प्रकट करनेमें उन्हें कभी संकोच नहीं होता था ॥ ४५ ॥

गुरुदेवरवीन्द्रस्य विनम्रो भक्तिमांश्च सः।
मया सह विशुद्धेन मित्त्रभावेन यन्त्रितः ॥४६॥

गुरुदेव श्रीरवीन्द्र बाबूके वह अत्यन्त नम्र भक्त थे। मेरे साथ उनका विशुद्ध प्रेम था ॥ ४६ ॥

गोपालगोखलेपत्त्रमादाय मम संनिधौ।
पूर्वं स शरदां पूगादागतः शुद्धशेमुषिः ॥४७॥

बहुत वर्षों पूर्व वह श्री० गोपालकृष्ण गोखलेजीका एक पत्र लेकर मेरे पास आये थे ॥ ४७ ॥

पियर्सनस्तथैण्ड्रूज़् आङ्ग्लभूमिसुतेषु तौ।
उदारौ विमलप्रज्ञा आस्तां च पुरुषोत्तमौ ॥४८॥

श्री० ग्रियर्सन और श्री० एन्ड्रूज यह दोनों सब अंग्रेजोंकी अपेक्षा अधिक उदार, निर्मल और श्रेष्ठ पुरुष थे ॥ ४८ ॥

कलिकातानगर्यां श्रीयीशुधर्मभृतां महान्।
धर्माध्यक्षः परेशीयो विधत्ते स्थितिमात्मनः ॥४९॥

कलकत्तेमें खिस्ती धर्मके परम-भगवदीय एक महान् धर्माध्यक्ष हैं ॥ ४९ ॥

अभ्यनन्दयदेवातः पूर्वं पत्रेण मामसौ।
तेनाप्यद्य ममार्यस्य विरोधे धीरधीयत ॥५०॥

पहले तो उन्होंने मुझे पत्रद्वारा अभिनन्दन दिया था। परन्तु आज वह भी मेरे विरोधी बन गये हैं ॥ ५० ॥

घटनाभिरमूभिस्तद्बोधयाम्यखिलं जगत्।
ऊर्ध्वबाहुरहं तारस्वरैः सर्वैर्निशम्यताम् ॥५१॥

इन सब घटनाओंसे मैं समस्त जगत्को हाथ उठाकर एक बात बताता हूँ, सब सुनें ॥ ५१ ॥

पाश्चात्येषु बहूनां सन्मित्त्राणामादरो महान्।
मय्यासीद्यो मयैवासौ सर्वथा विनिवारितः ॥५२॥

पश्चिममें मेरे बहुतसे उत्तमोत्तम मित्रोंको मेरे लिये बहुत बड़ा आदर था। उसे तो मैंने ही दूर किया ॥ ५२ ॥

स्यादिदं लाघवायैव मित्त्राणां परिवर्जनम्।
न न्यक्कर्तुं समर्थोऽस्मि स्वान्तरात्मध्वनिं परम् ॥५३॥

मित्रोंका त्याग यह बहुत क्षुद्र कार्य है। परन्तु मैं अपने अन्तरात्माके आवाजका अपमान नहीं कर सकता ॥ ५३ ॥

मूलभूतस्वभावेन प्रेरणा याधिगम्यते।
मया सोऽत्र समाख्यातः स्वान्तरात्मगतध्वनिः ॥५४॥

मेरा जो मूलभूत स्वभाव है उससे मुझे जो प्रेरणा मिलती है उसीको मैं अन्तरात्माकी आवाज कहता हूँ ॥ ५४ ॥

**मदीयमान्तरं दुःखं रोदितुं कोऽपि मां दृढम् ।**
**बलात्प्रेरयतीवात्र ततस्तत्क्रियतेऽधुना ॥५५॥**

मेरे हृदयके दुःखको रोनेके लिये मुझे कोई बलपूर्वक प्रेरणा करता है, उसीसे मैं आज भी अपना दुःख रो रहा हूँ ॥ ५५ ॥

**मानवीयस्वभावेन जातः परिचयो मम ।**
**शास्त्रस्य मानसस्यापि कृतमध्ययनं मया ॥५६॥**

मनुष्यके स्वभावके साथ मेरा परिचय है । मानसशास्त्रका भी मैंने अध्ययन किया है ॥ ५६ ॥

**मादृशः शास्त्रशीलो ना स्वान्तरात्मस्थितध्वनिम् ।**
**स्वरूपेण स्वभावेन जानात्येवात्र निर्भ्रमम् ॥५७॥**

मेरे जैसा मानसशास्त्री मनुष्य अपने अन्तरात्माकी आवाजको यथार्थ रूपमें जानता ही है, इसमें भ्रम नहीं है ॥ ५७ ॥

**यूयं ममान्तरं शब्दं प्रस्तुवीत यथा तथा ।**
**मया स श्रूयते यादृक्तादृगेव विधीयते ॥५८॥**

आप मेरे आन्तरिक शब्दको चाहे जैसे उपस्थित करें, परन्तु मैं तो जैसा सुनता हूँ वैसा ही करता हूँ ॥ ५८ ॥

**समग्रस्य भवस्याग्रे स्थातव्यं स्यात्त्वया स्वयम् ।**
**एकाकिनापि वा मित्त्रैः सहेति श्रूयते मया ॥५९॥**

मैं यह आवाज सुनता हूँ कि, मुझे समस्त जगत्के आगे अकेला अथवा मित्रोंके साथ खड़ा रहना है ॥ ५९ ॥

**प्रकोपानलसन्तप्तशोणितायतचक्षुषाम् ।**
**पुरः शान्तमनास्तिष्ठ त्वमिति श्रूयते मया ॥६०॥**

मैं यह भी सुनता हूँ कि, क्रोधके मारे जिनकी आँखें लाल-लाल हो गयी हैं उनके सामने मुझे शान्त हो कर खड़ा रहना है ॥ ६० ॥

नो बिभीहि प्रकुप्यद्भ्यो न च कम्पं समाश्रय।
आन्तरात्मध्वनावेव प्रतीहीति निशम्यते ॥६१॥

मैं सुनता हूँ कि, तू क्रोध करनेवालोंसे मत डर, मत काँप और अपने अन्तरात्माके शब्दोंमें विश्वास रख ॥ ६१ ॥

मित्राण्यपि जहाहि त्वं पत्नीमपि जहीहि च।
स्वकार्ये चित्तमाधत्स्व त्वमिति श्रूयते मया ॥६२॥

मैं सुनता हूँ कि, तू मित्रोंको भी छोड़ दे, अपनी पत्नीको भी छोड़ दे और अपने काममें लगा रह ॥ ६२ ॥

सर्वधर्मान्परित्यज्य यदर्थं प्राणिषीह वा।
मर्तव्यं च यदर्थं तत्कुरुष्वेति निशम्यते ॥६३॥

मैं सुनता हूँ कि, दूसरे सब कार्योंको छोड़कर जिसके लिये मैं जी रहा हूँ और जिसके लिये मुझे मरना है, उसे मैं करूँ ॥ ६३ ॥

नाहं मृत्युं प्रतीक्षेऽद्य प्रतीत वचने मम।
पुरुषायुषमेवाप्तुं कामयेऽहं निरन्तरम् ॥६४॥

मैं मृत्युकी राह नहीं देखता हूँ। आप मेरे वचन पर विश्वास करें। मैं तो सौ वर्ष तक ( जितना मनुष्य जी सकता है ) जीनेकी इच्छा रखता हूँ ॥ ६४ ॥

विंशत्याधिकमेवाब्दान्निरचैषमहं शतम्।
प्राणान्धारयितुं द्रष्टुं भारतं नष्टश्रृङ्खलम् ॥६५॥

मैंने तो निश्चय किया है कि मैं १२० वर्षों तक जीऊँ और भारतको स्वतन्त्र देखूँ ॥ ६५ ॥

सन्द्रक्ष्यामि ध्रुवं जीवन्स्वतन्त्रं सकलं जगत्।
अमेरिका तथेङ्गलैण्डं स्वातन्त्र्यं समवाप्स्यतः ॥६६॥

मैं जीता हुआ अवश्य सारे जगत्को स्वतन्त्र देखूँगा। अमेरिका और इंगलैंड भी स्वतन्त्र होंगे ॥ ६६ ॥

अन्यदेशस्वतन्त्रत्वपरिहारे स्वतन्त्रताम्।
दधाते तावुभौ देशौ स्वतन्त्रौ स्तो न वस्तुतः ॥६७॥

अन्य देशकी स्वतन्त्रताको लूटनेके लिये स्वतन्त्रता रखते हैं अत एव अमेरिका और इंगलैंड वस्तुतः स्वतन्त्र नहीं हैं ॥ ६७ ॥

नेमौ देशौ समस्तानां प्रजानां परिरक्षितुम्।
स्वातन्त्र्यं सम्प्रयुध्येते लुण्ठितुं तद्धि वाञ्छतः ॥६८॥

यह दोनों देश समस्त प्रजाकी स्वतन्त्रताकी रक्षाके लिये युद्ध नहीं कर रहे हैं प्रत्युत उसे लूट लेना चाहते हैं ॥ ६८ ॥

आयुद्धान्तं न मां ब्रूत प्रतीक्षितुमनेहसम्।
स्वातन्त्र्यकल्पना नेया न सीमानं हि मामिकी ॥६९॥

मुझे आप युद्धकी समाप्ति तक प्रतीक्षा करनेके लिये न कहें। मेरी स्वतन्त्रताकी कल्पना सीमित नहीं है ॥ ६९ ॥

श्वेतचर्माश्रितानां च पीतचर्मभृतामपि।
आचार्या इतिहासाश्च सन्ति काव्यानि सन्ति च ॥७०॥

सफेद और पीली प्रजाके भी आचार्य हैं, इतिहास हैं, और सुन्दर-सुन्दर काव्य हैं ॥ ७० ॥

स्वातन्त्र्यकल्पनाराज्यसीमभागविवर्धनम्।
नावारोधि न्यषेध्येतैर्न कदापि महागुणैः ॥७१॥

स्वतन्त्रताकी कल्पनाकी जो राज्यसीमा है उसे बढ़ानेको इन्होंने कभी न तो रोका और न निषेध किया ॥ ७१ ॥

यच्च स्वतन्त्रतारूपं चित्रितं तैर्विचक्षणैः।
तस्मादेतौ वितिष्ठाते देशौ दूरे समन्ततः ॥७२॥

उन विद्वानोंने स्वतन्त्रताके रूपका जो चित्र चित्रित किया है उससे यह दोनों देश बहुत दूर हैं ॥ ७२ ॥

जिज्ञास्यते स्वरूपं चेत्स्वातन्त्र्यस्याथ वस्तुतः।
विनयेन समायातां भारते सत्यसंरते ॥७३॥

यदि स्वतन्त्रके स्वरूपको वस्तुतः जानना चाहते हैं तो सत्यपूर्ण भारतमें उन्हें नम्र होकर आना चाहिये ॥ ७३ ॥

सत्यमेव स्वरूपं तत्स्वातन्त्र्यस्य च तावुभौ।
देशावत्र समागत्य वेत्स्यतोऽद्भुतदर्शनम् ॥७४॥

स्वतन्त्रताके सत्य और अद्भुत् स्वरूपको वह दोनों देश यहाँ आकर ही जानेंगे ॥ ७४ ॥

भारतं परमं सत्यमन्वेष्टुं यतते चिरात्।
विंशत्या हायनैर्नित्यं यत्नस्तत्र प्रवर्तते ॥७५॥

भारत चिरकालसे सत्यको ढूँढनेका प्रयास कर रहा है। २० वर्षोंसे नित्य ही प्रयत्न जारी है ॥ ७५ ॥

जातं महासभायास्तज्जन्म यस्मिन्क्षणे शुभे।
भानतोऽभानतोऽप्येषाऽऽश्रयतेऽहिंसनं सदा ॥७६॥

जिस पवित्र पलमें महासभाका जन्म हुआ है तभीसे यह सभा ज्ञानपूर्वक अथवा अज्ञानपूर्वक अहिंसाका ही आश्रय लेती आयी है ॥७६॥

पदं महासभायास्तद्भारतस्यानुगच्छतः।
नेतृत्वं सुखमासीनं दादा—फीरोजशाहयोः ॥७७॥

महासभाके पीछे पीछे चलनेवाले भारतका नेतृत्व पहले श्री दादा भाई नौरोजी और श्री फीरोजशाहके हाथोंमें रहा है ॥ ७७ ॥

राजद्रोहे मनस्तौ द्रावकाष्ठौ तत्प्रभू अपि।
भक्तौ वा सेवकावापि हिंसास्तेयद्रुहावपि ॥७८॥

वह दोनों ही चाहे स्वामी थे, चाहे सेवक थे, चाहे भक्त थे तथा हिंसा और चोरीके विरोधी थे तो भी उन्होंने विद्रोह किया था ॥ ७८ ॥

अस्यां राष्ट्रसमज्यायां भवेयुश्छद्मवेषिणः ।
स्वीक्रियते मयेत्यत्र विस्मयः क्रियते च न ॥७९॥

कांग्रेसमें छद्मवेषधारी भी होंगे, इसे मैं स्वीकार करता हूँ। इसमें मैं आश्चर्य नहीं करता ॥ ७९ ॥

तथापि भारतं सर्वं मनः प्रत्येति मामकम् ।
सर्वथाऽहिंसकं युद्धं प्रारब्धुं दधते बलम् ॥८०॥

तो भी मेरा मन विश्वास करता है कि भारतवर्ष अहिंसक युद्ध शुरू करनेके लिये समर्थ है ॥ ८० ॥

काले विसङ्कटापन्ने मनुष्यप्रकृतौ स्थिता ।
सत्यं निरीक्षितुं शक्ता भद्रता भवति ध्रुवम् ॥८१॥

सङ्कटके समयमें, मनुष्य स्वभावमें रही हुई भद्रता सत्यके दर्शनके लिये अवश्य समर्थ होती है ॥ ८१ ॥

सत्यमाश्रित्य जातेषु युद्धेषु विजयश्रिया ।
युध्यमाना महावीरा भूष्यन्ते जयमालया ॥८२॥

सत्यके सहारे जो युद्ध होते हैं उनमें लड़नेवाले महावीरोंको ही विजयलक्ष्मी विजयमालासे सुशोभित करती हैं ॥ ८२ ॥

नैसर्गिकी ममात्रास्ति प्रतीतिः प्रत्ययस्ततः ।
जायते मामके चित्ते तादृशो व्याजवर्जितः ॥८३॥

इस विषयमें मेरा स्वाभाविक ही विश्वास है। इसलिये मेरे हृदयमें वैसा विश्वास स्वाभाविक ही उत्पन्न होता है ॥ ८३ ॥

प्रतारितो भवेयं चेच्छुद्धभावसमन्वितः ।
तथापि भविता मेऽस्मिन्पथ्यप्रतिहता गतिः ॥८४॥

यदि इस विषयमें मैं ठगा भी जाऊँ तो भी मैं इसी मार्गमें बिना रुके चलता रहूँगा ॥ ८४ ॥

सभया जन्मतः स्वस्या नीतिः शान्तिपथे स्थिता।
अकारि च स्वराज्यस्य लाभस्तद्विषयीकृतः ॥८५॥

महासभाने अपने जन्मकालसे ही शान्तिकी नीतिको स्वीकार किया है। और उस नीतिका उद्देश्य स्वराज्यप्राप्ति बनाया है ॥ ८५ ॥

ततस्तद्वंशजैस्तस्यां सभायां सर्वमोहिनी।
अहिंसा दिव्यरूपाढ्या स्थापिता चारुलोचना ॥८६॥

उसके बाद उनके वंशजोंने उस सभामें सर्वमोहिनी अहिंसाकी स्थापना की ॥ ८६ ॥

दादाभाई बुधः श्वेतदेहमन्त्रणसंसदि।
अर्थितां भवितुं सभ्यः समार्थयत सर्वथा ॥८७॥

अंग्रेजोंकी विचारपरिषद् ( पार्लामेन्ट ) में सभ्य बननेके लिये दादा भाई नौरोजीसे प्रार्थनाकी गयी थी उसका उन्होंने समर्थन किया अर्थात् स्वीकार किया ॥ ८७ ॥

तस्मै सेलिसबरी क्रोधात्कृष्णचर्मेति संब्रुवन्।
आसूयिष्ट निकृष्टेहो दादाभाईमहात्मने ॥८८॥

सेल्सबरीने उन्हें, क्रोधसे, काला कहकर अपमानित किया ॥ ८८ ॥

श्वेतचर्ममतैरेव स्वीकृतोऽभूदसौ यदा।
सभ्यस्तत्र तदाऽखण्डं भारतं हर्षमावहत् ॥८९॥

जब अंग्रेजोंके ही मतसे वह सभ्य चुन लिये गये तो भारतको महान् हर्ष हुआ था ॥ ८९ ॥

तथारूपपदावाप्तेर्मोहो भारतचेतसः।
गत एव तदानाप्तेः शोको नाभिभवत्यदः ॥९०॥

ऐसे पदोंकी प्राप्तिका मोह भारतके मनसे चला गया है। अतः उसके न मिलनेपर उसे शोक नहीं होता है ॥ ९० ॥

इतिवृत्तमिदं सर्वमविस्मृत्य करोम्यहम् ।
अङ्ग्रेजांश्च युरोपीयान्दत्तध्यानान्मदर्थने ॥९१॥

इन सब इतिहासोंको भूले बिना मैं अंग्रेजों और यूरोपियनोंको मेरी प्रार्थनापर ध्यान देनेकेलिये कहता हूँ ॥ ९१ ॥

मित्त्रभूता महीपालाः स्वातन्त्र्यं याचतो निजम् ।
भारतस्यापराधं कं पश्यन्तीति ब्रुवन्तु ते ॥९२॥

अपनी स्वतन्त्रता मांगनेवाले भारतका क्या अपराध मित्रराजाओंकी दृष्टिमें प्रतीत हो रहा है, उसे वह कहें तो ! ॥ ९२ ॥

परम्परात आयातमितिहासं निरीक्ष्य च ।
अप्रत्ययो न शोभेत कस्याप्यधिमहासभम् ॥९३॥

परम्परासे चले आते हुए इतिहासको देखकर महासभाके ऊपर विश्वास न करना किसीको शोभा नहीं देता है ॥ ९३ ॥

महासभीययत्नानां परिवर्त्य सुरूपताम् ।
प्रचारो लोकनिन्दायै सतः कस्य विशोभते ॥९४॥

महासभाके प्रयत्नोंमें जो सौन्दर्य रहा हुआ है उसे बदलकर लोकमें निन्दाकी दृष्टिसे प्रचार करना किस सत्पुरुषको शोभा देता है ? ॥ ९४ ॥

परदेशिसमाचारपत्त्रसाहाय्यमेत्य ते ।
निन्दाकार्ये प्रवर्तन्त आभिजात्यं हतं ननु ॥९५॥

विदेशीय समाचारपत्रोंकी सहायता लेकर वह निन्दा कार्यमें प्रवृत्त है। अहो, कुलीनता नष्ट ही हो गयी ! ॥ ९५ ॥

साधनीकृत्य रुज्वेल्टं चीनसेनापतिं तथा ।
अन्यैश्च साधनैस्तस्याः प्रातिकूल्यं प्रतन्यते ॥९६॥

रूज़वेल्ट और चीनके सेनापति ( च्यांगकाई शेक ) को साधन बनाकर तथा दूसरे साधनोंसे भी वह लोग महासभाका विरोध करते हैं ॥ ९६ ॥

दृष्टवानस्मि च्याङ्काईशेकं चैनचमूपतिम् ।
पर्यचैषमहं तस्य पत्नीद्वारैव तं तथा ॥९७॥

चीन सेनापति च्यांग काई शेकको उनकी पत्नीके द्वारा ही मैं पहचानता हूँ ॥ ९७ ॥

परीप्सितप्रतिष्ठोऽयं चीनीयानीकिनीपतिः ।
अगम्य इव मे भाति न तथास्ति तदङ्गना ॥९८॥

उन्हें प्रतिष्ठाका बहुत लोभ है । वह अगम्य जैसे मालूम होते हैं । परन्तु उनकी पत्नी ऐसी नहीं हैं ॥ ९८ ॥

चीनीभाषां ब्रुवाणस्य तस्य मर्मार्थदीपिकाः ।
भार्या भाग्यवती तस्य मदर्थमुपकल्पिताः ॥९९॥

वह स्वयं तो केवल चीनी भाषा ही बोलते थे । परन्तु उनकी श्रीमती पत्नीने उसका भाव मुझे समझाया था ॥ ९९ ॥

तद्द्वारा तन्मनोभावमधिगन्तुमशक्नवम् ।
तस्यागम्यत्वमेवाहं साक्षादकरवं तदा ॥१००॥

उनके द्वारा ही मैं च्यांगकाई शेकके मनोभावको समझ सका था । उस समय तो वह मुझे अगम्य ही प्रतीत हुए थे ॥ १०० ॥

असूयन्ति प्रकुप्यन्ति तत्त्वसत्त्ववियोगिनः ।
अस्मभ्यं गतदोषेभ्यो लोकाः सर्वे समन्तत ॥१०१॥

जो लोग सत्यवस्तुको नहीं समझ रहे हैं वह सब हमपर क्रोध भी करते हैं और असूया भी ॥ १०१ ॥

ब्रुवते ते वयं काममभ्राम्याम दिशामिति ।
अकाले पादविन्यासमतन्म पथि भीषणे ॥१०२॥

वह हमें कहते हैं कि तुम लोग दिशा भूल गये हो। और असमयमें भयङ्कर मार्गमें तुमने कूच किया है ॥ १०२ ॥

चिरं साम्राज्यरक्षित्रीं नीतिमाङ्ग्लभुवां नृणाम्।
वीक्ष्य प्रशंसतो मेऽद्य मनो ग्लायति केवलम् ॥१०३॥

अंग्रेजोंकी साम्राज्यरक्षाकी नीतिकी प्रशंसा करनेवालोंको देखकर मेरे मनमें बहुत ग्लानि पैदा होती है ॥ १०३ ॥

अङ्ग्रेजाः साधनैरेतैः स्वपक्षे निखिलं जगत्।
स्थापयितुं समर्थाः स्युर्यावत्सत्यं न भासते ॥१०४॥

जब तक सत्यका प्रकाश न होगा तबतक अंग्रेज लोग इन साधनोंसे सारे जगत्को अपने पक्षमें लेनेको समर्थ रहेंगे ॥ १०४ ॥

परन्तु भारतं वर्षं दुःखदग्धं निरन्तरम्।
अभिप्रायं समस्तस्य जगतोऽत्येष्यति स्वयम् ॥१०५॥

परन्तु दुःखसे जला हुआ भारत सारी दुनियाके अभिप्रायका स्वयं उल्लंघन करेगा—उसकी परवा नहीं करेगा ॥ १०५ ॥

मिथ्याप्रचारकरणे प्रचितस्वार्थिनां दृढम्।
विरोधाय महारावं भारतं सन्तनिष्यते ॥१०६॥

मिथ्या प्रचार करनेमें लगे हुए स्वार्थियोंका विरोध करनेके लिये भारतवर्ष आवाज उठावेगा ॥ १०६ ॥

मित्त्रराष्ट्रप्रजाः सर्वा मां विरोत्स्यन्त्यनर्गलम्।
यद्वा तद्वा भवेदद्य मम पन्थास्तु निश्चितः ॥१०७॥

मित्रराज्योंकी प्रजा मेरा विरोध करेगी। चाहे जो हो, आज तो मेरा मार्ग निश्चित है ॥ १०७ ॥

निखिलं भारतं मां चेद्विरुन्धीत तथाप्यहम्।
एकाकी सम्प्रवक्ष्यामि वितथाभाषिणो हि वः ॥१०८॥

यदि समस्त भारत भी मेरा विरोध करे तो मैं अकेला ही कहता रहूँगा कि तुमलोग मिथ्याभाषी हो ॥ १०८ ॥

**स्वातन्त्र्यं च बलाद्धृत्वा प्रत्यर्पयितुमद्य ये ।**
**नाभिलष्यन्ति हस्तेभ्यस्तेषामाच्छिद्य भोक्ष्यते ॥१०९॥**

बलात्कारसे स्वतन्त्रता लेकर जो उसे पीछे लौटाना नहीं चाहते उनके हाथोंसे उसे छीन कर हम उसका उपयोग करेंगे ॥ १०९ ॥

**अहिंसाशस्त्रमादाय परवत्तानिवारणम् ।**
**अवश्यं भारतं वर्षं करिष्यति करिष्यति ॥११०॥**

अहिंसारूप शस्त्रको लेकर भारतवर्ष अवश्य ही पराधीनताका नाश करेगा ॥ ११० ॥

**न केवलं स्वकीयानि बन्धनानि विधक्ष्यति ।**
**सर्वस्य जगतो नूनं श्रेयस्तत्संविधास्यति ॥१११॥**

वह केवल अपने ही बन्धनोंको भस्म नहीं करेगा प्रत्युत सारे जगत्का कल्याण करेगा ॥ १११ ॥

**अवश्यं धार्मिकं युद्धं प्रणेतृ जनताहितम् ।**
**प्रारप्स्ये प्रणिधास्ये च पुरोगामि पदं शिवम् ॥११२॥**

अवश्य ही मैं जनताका उपकारक धार्मिक युद्ध शुरू करूँगा और भविष्य के मार्गका निश्चय करूँगा ॥ ११२ ॥

**स्वातन्त्र्यागमनात्पूर्वं कालधर्ममवाप्नुयाम् ।**
**अहं यदि तथाप्येतद्युद्धं नैव मरिष्यति ॥११३॥**

स्वतन्त्रता आनेसे पूर्व ही कदाचित् मेरा शरीर चला भी जाय तो भी यह युद्ध तो अमर ही रहेगा ॥ ११३ ॥

**अधमर्णत्वमापन्नानङ्ग्रेजान्भारतं चिरम् ।**
**मुक्त्यै प्रार्थयते नित्यं नैनत्कश्चिच्छृणोति च ॥११४॥**

ऋणी अंग्रेजोंको भारत मुक्तिके लिये रोज प्रार्थना करता है परन्तु उसे कोई सुनता नहीं है ॥ ११४ ॥

श्वेतत्वचोऽस्य संख्यस्य जनयेयुरुपद्रवम् ।
यदि तर्हि विधास्यन्ति रशियाचीनयोर्मृतिम् ॥११५॥

यदि अंग्रेज इस युद्धमें उपद्रव करेंगे तो अवश्य ही रशिया और चीनको भी मार डालेंगे ॥ ११५ ॥

छद्मना नहि केनापि भारतं श्वेतचर्मसु ।
प्रजिहीर्षेत तस्येति प्रतिज्ञा प्राणसम्मिता ॥११६॥

भारत किसी भी बहानेसे अंग्रेजोंपर प्रहार करना नहीं चाहता है यह उसकी प्राणतुल्य प्रिय प्रतिज्ञा है ॥ ११६ ॥

सर्वकामदुघाऽहिंसा रम्याऽमितबला तथा ।
अस्माभिः सत्कृता तेन च्छलं परिहृतं स्वतः ॥११७॥

हम लोगोंने सर्वमनोरथोंको पूर्ण करनेवाली अतिबलवती मनोहर अहिंसाका स्वीकार किया है। अतः छल-कपट तो स्वयं ही चले गये ॥११७॥

न कोपि धार्मिकः प्राज्ञः कार्याकार्यविवेकवान् ।
अमित्रेष्वपि संच्छन्नः प्रहारमभिवाञ्छति ॥११८॥

कोई कर्तव्य-अकर्तव्यका विवेक करनेवाला धार्मिक विद्वान् शत्रुओंपर भी छिपकर प्रहार करना नहीं चाहता है ॥ ११८ ॥

रिपौ प्रीतिरियं नीतिर्मत्त एव प्रवर्तिता ।
अहमेवाद्य विषमां गिरमेतां प्रभावये ॥११९॥

शत्रुओंपर प्रेम करनेकी रीति मैंने ही चलायी है। और मैं ही आज यह भयङ्कर वचन बोल रहा हूँ ॥ ११९ ॥

ग्रीवायां च गृहीत्वा मां सलिलेषु निमज्जयेत् ।
कश्चित्तदा करग्राहात्तस्य मोक्षः परीप्सितः ॥१२०॥

यदि कोई मेरी गर्दन पकड़कर मुझे जलमें डुबावे तो उसके हाथसे छूट जाना तो मैं चाहूँगा ही ॥ १२० ॥

तेनाखिलं मया प्रोक्तं स्वमानमनुगच्छति ।
नायुक्ताऽद्यतनी नीतिर्देशकालानुसारिणी ॥१२१॥

अतः जो कुछ मैंने कहा है वह स्वतः प्रमाण सिद्ध है । देशकालके अनुसार आजकी नीति अयुक्त नहीं है ॥ १२१ ॥

विदेशिवृत्तपत्राणां मां श्रोतुमिह तिष्ठताम् ।
गणः प्रतिनिधीनां सद्विदुषामत्र शोभते ॥१२२॥

मुझे सुननेकेलिये यहाँपर विदेशी समाचार पत्रोंके विद्वान् प्रतिनिधि उपस्थित हैं ॥ १२२ ॥

एतान्सर्वान्प्रतिनिधीन्द्वारीकृत्याखिलं जगत् ।
प्रबोधयितुमिच्छामि सिध्यन्तु मे समीहितम् ॥१२३॥

इन सब प्रतिनिधियोंको द्वार बनाकर मैं सारे जगत्को उपदेश करना चाहता हूँ । मेरा मनोरथ सिद्ध हो ॥ १२३ ॥

मित्रराष्ट्राणि संगत्य येन केनापि हेतुना ।
वदन्ति भारते नास्ति तेषामर्थ इति स्फुटम् ॥१२४॥

मित्रराज्य मिलकर किसी गुप्त हेतुसे यह कहा करते हैं कि भारतमें उनका कोई स्वार्थ नहीं है ॥ १२४ ॥

वस्तुतश्चेत्प्रियाकर्तुं भारतस्य प्रियस्य नः ।
कामयन्ते समीहन्तां सद्योमुक्तिं हि तस्य ते ॥१२५॥

यदि वह वस्तुतः हमारे प्रिय भारतका प्रिय करना चाहते हों तो उन्हें अभी ही भारतको मुक्त करदेनेकी इच्छा करनी चाहिये ॥ १२५ ॥

स्वातन्त्र्यं भारतस्याद्य संघोष्य जगदङ्गने ।
सुखिनः सन्तु ते स्वीयां सम्प्रदर्श्याद्य सत्यताम् ॥१२६॥

जगत्‌में भारतकी स्वतन्त्रताकी घोषणा करके अपनी सत्यताको दिखा कर वह सुखी होवें ॥ १२६ ॥

औदार्यस्य प्रकाशायावसरोऽयं समागतः ।
तेषामभ्यर्थये तेन माऽद्य भूत्कालयापना ॥१२७॥

उनकी उदारता दिखानेके लिये यही उनके लिये समय है। इसी लिये मैं प्रार्थना करता हूँ। समय न बीत जावे, इसका ध्यान रहे ॥ १२७ ॥

अस्मिन्नपि महामूल्येऽवसरे स्वार्थभोगिना ।
दष्टाश्चेन्न विपश्येयुर्भवन्तो भारतं पुनः ॥१२८॥

इस अमूल्य अवसर पर भी स्वार्थरूप सर्पसे डँसे गये हुए यदि आप भारतकी ओर नहीं देखेंगे तो—॥ १२८ ॥

समये मित्रराष्ट्रैस्तैर्बुद्धिमत्ता न दर्शिता ।
पराजितास्ततश्चेदमितिहासो वदिष्यति ॥१२९॥

इतिहास कहेगा कि, समय था, परन्तु मित्रराजाओंने बुद्धिमत्ता दिखायी नहीं, इसीलिये वह हार गये ॥ १२९ ॥

अस्मिन्स्वातन्त्र्यसंग्रामे जगतो निखिलस्य नः ।
पौनःपुन्येन हार्दिक्यो व्यपेक्ष्यन्ते सदाशिषः ॥१३०॥

इस स्वतन्त्रताके संग्राममें हमें सम्पूर्ण जगत्‌का हार्दिक आशीर्वाद अपेक्षित है ॥ १३० ॥

विस्पष्टां धर्मनियतां मित्रभूपान्ब्रवीमि नो ।
अतिक्रम्यात्र मर्यादां विधातुमयथोचितम् ॥१३१॥

स्पष्ट और धार्मिक मर्यादाका उल्लंघन करके अनुचित कार्य करनेके-लिये मैं मित्रराजाओंको नहीं कह रहा हूँ ॥ १३१ ॥

अस्त्राणि चापि शस्त्राणि परित्यज्य दिगम्बराः ।
अहिंसाशस्त्रसन्नाश्च भवितुं न ब्रुवेऽद्य तान् ॥१३२॥

अस्त्र-शस्त्रोंका त्याग करके दिगम्बर होकर अहिंसक बननेके लिये भी मैं उन्हें आज नहीं कह रहा हूँ ॥ १३२ ॥

संहतिवादसाम्राज्यवादयोरन्तरं च यत्।
समग्रं तदहं नूनं विजानामि यथायथम् ॥१३३॥

समाजवाद और साम्राज्यवादमें जो अन्तर है उसे भी मैं ठीक ठीक जानता हूँ ॥ १३३ ॥

भारतेऽत्र यथाकामं प्राप्नुवन्ति कदाचन।
अङ्ग्रेजा न धनं दिव्यं न बलं नापि सद्यशः ॥१३४॥

अंग्रेज लोग इस भारतमेंसे अपनी इच्छाके अनुसार न धन पा सकते हैं, न बल पा सकते हैं और न अच्छा यश ही पा सकते हैं ॥१३४॥

यथा तथा वा तैरद्य यत्किञ्चिदिह लभ्यते।
पराधीनीकृतादस्माद्देशादेवेति मन्यताम् ॥१३५॥

जैसे-तैसे वह जो कुछ यहाँ से प्राप्त कर लेते हैं वह तो इसलिये कि इस देशको उन्होंने पराधीन कर रखा है ॥ १३५ ॥

स्वातन्त्र्येण भवेदद्य भारतं चेत्समर्थकम्।
तेषां पक्षस्य सा शोभा कथं तैर्न विचिन्त्यते ॥१३६॥

भारत स्वतन्त्रताके साथ उनके पक्षका समर्थक बने, ऐसा विचार उनके मनमें क्यों नहीं आता ? ॥ १३६ ॥

स्वातन्त्र्यमर्पणीयं तद्यदि वोऽभिमतं भवेत्।
अद्यैव तत्प्रदानीयं विलम्बो नेष्टसाधकः ॥१३७॥

यदि भारतको स्वतन्त्रता देना आपको इष्ट है तो वह आज ही देनी चाहिये। विलम्ब इष्ट नहीं है ॥ १३७ ॥

येषु येषु च विद्येत कापि शक्तिः शिवालया।
तद्दापयितुमद्यैव तैस्तैः सा सम्प्रयुज्यताम् ॥१३८॥

जिन जिनके पास कोई उत्तम शक्ति हो वह लोग उस शक्तिका उपयोग करके भारतको आज ही स्वाधीनता दिलावें ॥ १३८ ॥

समये यदि सा शक्तिः कार्यसाधनपाटवम् ।
प्रदर्शयति नो हन्त तस्या निष्फलता स्फुटा ॥१३९॥

यदि वह शक्ति समयपर कार्यसिद्ध करनेकी पटुता न दिखावे तो उसकी निरर्थकता स्पष्ट ही है ॥ १३९ ॥

शक्तिव्यापारतो वोऽद्य भारतं चेत्स्वतन्त्रताम् ।
लभेत शक्यमेव स्यादशक्यं यच्च वोऽधुना ॥१४०॥

यदि आपकी शक्तिके व्यापारसे आज भारत स्वतन्त्रता पा सके तो आज आप लोगोंको जो अशक्य मालूम होता है, वह शक्य बन जाय ॥१४०॥

अपराधीनमेवाद्य भारतं शक्नुयात्परम् ।
चीनस्वतन्त्रतादिव्यसम्पत्तिमुपकल्पितुम् ॥१४१॥

स्वतन्त्र भारत ही चीनको स्वतन्त्रता दिला सकता है ॥ १४१ ॥

तदानीमेव निर्विघ्नः पन्थाः स्याद्विवृताङ्गकः ।
अवश्यमेव सन्धातुं रशियायाः सहायताम् ॥१४२॥

भारतके स्वतन्त्र होनेपर ही रशियाकी सहायताके लिये निष्कण्टक मार्ग खुला हो सकता है ॥ १४२ ॥

मलाया ब्रह्मदेशश्च निर्गतः श्वेतचर्मणाम् ।
हस्तात्किं न तयोरर्थे प्राणत्यागं समाचरन् ॥१४३॥

क्या रशिया और चीनके लिये प्राणत्याग करते हुए मलाया और ब्रह्मदेश अंग्रेजोंके हाथसे नहीं चले गये ? ॥ १४३ ॥

त्रुटितं निखिलं वस्तु सन्धातुं कौषधिर्भवेत् ।
हन्ताहं क नु गच्छामि चतुर्विंशतिकोटिभिः ॥१४४॥

टूट गयी हुई किसी वस्तुको जोड़नेके लिये क्या उपाय हो सकता है ? मैं २४ करोड़ आदमियोंके साथ कहाँ जाऊँ ? ॥ १४४ ॥

असंस्पृष्टस्वतन्त्रत्वरसास्वादोऽद्य भावनाम् ।
मानवानामियान्भागः स्वातन्त्र्ये कां प्रदर्शयेत् ॥१४५॥

जिसको स्वतन्त्रताका रसास्वाद नहीं मिला है, वह मनुष्योंका इतना बड़ा भाग स्वतन्त्रताके लिये कौन सी भावना प्रकट कर सकता है? ॥१४५॥

नोत्साहो न बलं वीर्यं नो शक्तिर्नोपि भावना ।
भारतीयप्रजाचित्त आंशिकोप्यद्य विद्यते ॥१४६॥

आज तो भारतीय प्रजाके चित्तमें न उत्साह है, न बल है, न वीर्य है, न शक्ति और न भावना है ॥ १४६ ॥

सर्वाणीमानि तत्त्वानि बलात्कारेण सर्वथा ।
तच्चित्तेभ्य इयं जातिरचूषीदतिनिर्दयम् ॥१४७॥

इन सब तत्त्वों को इसी क्रूर अंग्रेज जातिने भारतीयोंके चित्तमेंसे निर्दयताके साथ चूस लिया है ॥ १४७ ॥

समर्थाः संगतार्थाश्च भारतीयाः प्रजाः पुनः ।
कर्तुं स्वतन्त्रता तासामद्यैव समुपैतु ताः ॥१४८॥

भारतीयप्रजाको समर्थ, संगतार्थ फिरसे बनानेके लिये उनकी स्वतन्त्रता उन्हें आज ही प्राप्त होनी चाहिये ॥ १४८ ॥

महासभा महाघोरे नियुक्ता किल कर्मणि ।
करिष्येऽथ मरिष्यामीत्येव मन्त्रेण संगता ॥१४९॥

महासभा अत्यन्त भयङ्कर कर्ममें आज लगी हुई है। करना या मर जाना, यही उसका आज मन्त्र है ॥ १४९ ॥

कालेन संनिहितमात्ममनोतिखेदं,
विद्राव्य सत्यवचनार्चनेन देवः ।

लोकांश्च सत्यपदवीमुपदर्श्य रम्यां,
रम्यान्तरः प्रतिययौ निजवासवेश्म ॥१५०॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
एकोनविंशः सर्गः

बहुत समयसे मनमें भरे हुए अत्यन्त खेदको सत्यवचनोंकी रचनाके द्वारा अर्थात् सत्योपदेशसे दूर करके, लोगोंको सत्यमार्ग दिखाकर रमणीय हृदयवाले श्रीमहात्माजी अपने वासस्थानमें चले गये ॥१५०॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
एकोनविंशः सर्गः



# अथ विंशः सर्गः

अथ समितिभुवोसौ वासभूमिं समेत्य,
जरठतनुमहात्मा निद्रयालिङ्गितोभूत्।
शयनमधिगतस्य श्रीयतेः श्वेतसैन्यं,
व्यपहरणमकार्षीत्पारिजातस्य तस्य ॥ १ ॥

सभामेंसे निवासस्थानमें जाकर वृद्ध शरीरवाले श्री महात्माजी सो गये। अंग्रेजी सेनाने निद्रित दशामें ही उन भारतपारिजातका अपहरण कर लिया ॥ १ ॥

अपरहृदयमस्य श्रीमहादेवमार्य्यं,
यतिपतिमतमीड्यं मर्मवित्प्यारलालम्।
परमकुशलवैद्यां श्रीसुशीलां सुशीलां,
सितभटपटवस्ते चाहरन् क्रीतदासाः ॥ २ ॥

श्री महात्माजीके दूसरे हृदयसमान श्री महादेवदेसाई, महात्माजीके प्रिय श्री प्यारेलाल भाई, श्रीमती डाक्टर सुशीला बहिन इन तीनोंको भी अंग्रेजोंके गुलामोंने पकड़ लिया ॥ २ ॥

यतिवरवरवामाङ्गी च कस्तूरिकां तां,
पतिपदपरिचर्यालीनचित्तां सतीशाम्।
दुरितसितभटास्ते निर्नरत्वं दधाना,
अपहृतमतयस्तेपाहरन्धर्ममूर्तिम् ॥ ३ ॥

पतिकी सेवामें ही जिनका चित्त रहता था, जो महती पतिव्रता थीं, उन धर्ममूर्तिसमान श्री कस्तूरबाको भी राक्षससमान अंग्रेजी सिपाहियोंने पकड़ लिया ॥ ३ ॥

सपदि विसृतमेतद्वृत्तमेकक्षणेन,
जगति निखिलदेशेष्वेव विद्युत्प्रभेव।

क्षतलवणमिवेदं भारतीयप्रजाना-
मभवदनतिसह्यं धिक्पराधीनवृत्तिम् ॥ ४ ॥

शीघ्र ही क्षणभरमें यह समाचार विद्युत-वेगसे पृथिवीके सारे देशोंमें फैल गया। जलेपर नमकके समान यह समाचार भारतीय प्रजाको अत्यन्त असह्य हुआ। पराधीन जीवनको धिक्कार है ॥ ४ ॥

निखिलभरतभूमे राष्ट्रसंसत्पतित्वे,
स्थितमबुलकलामं वल्लभं चापि शूरम्।
निबिडतिमिरदीपं रूपरानीतनूजं,
सिततनुभटकास्ते बन्दिनं चक्रिरेत्र ॥ ५ ॥

अखिल भारतवर्षीय राष्ट्रिय महासभाके सभापति मौलाना श्री अबुलकलाम आजाद, श्री सर्दार वल्लभभाई पटेल, और घोर अन्धकारमें प्रकाश समान श्रीमती रूपरानी देवी नेहरूके पुत्र पण्डित श्री जवाहिरलाल नेहरूको भी सिपाहियोंने पकड़कर जेलमें बन्द कर दिया ॥ ५ ॥

गुणिषु गणितराजेन्द्रप्रसादं सिताङ्गा,
अतिमतिकृपलानीं श्रीप्रफुल्लं च बाङ्गम्।
सकलविदितदेवं शङ्करं सर्वराष्ट्र-
समितिविदितसभ्यानाहरंस्ते सिताङ्गाः ॥ ६ ॥

गुणियोंमें परिगणित श्री० बाबू राजेन्द्रप्रसाद, बुद्धिमान् आचार्य कृपलानी, बङ्गवासी श्री प्रफुल्ल बाबू, श्री शङ्कररावदेव तथा महासभा-समितिके सभी प्रख्यात सभ्योंको अंग्रेजोंने पकड़ लिया ॥ ६ ॥

अधिरजनि च तस्यां सर्वे एते नरेन्द्रा,
निखिलभरतभूमावन्यनेतृप्रकृष्टाः ।
त्रिचतुरदिवसान्ते तैः सिताङ्गस्य दूतैः,
कुसुमितवनमालामालिनः संगृहीताः ॥ ७ ॥

यह सब नेता रातमें ही पकड़ लिये गये। तथा तीन चार दिनमें ही फूले हुए उद्यानके मालीके समान भारतके बड़े-बड़े नेता अंग्रेजों द्वारा पकड़ लिये गये ॥ ७ ॥

अथ यमिनि गते तद्बन्दिशालातिथित्वं,
हरिजनमितिपत्रं तेन सम्पाद्यमानम्।
व्रजतु विवशतामेत्यैव मा संनिरोध-
मितिविकलमनस्को भूतवन्मश्रुवाला ॥ ८ ॥

जब श्री महात्माजी जेलवासी कर दिये गये तब श्रीमान् किशोरलाल घनश्यामदास मशरूवालाको इस आशङ्कासे बहुत चिन्ता हुई कि महात्माजी जिस हरिजन पत्रका सम्पादन करते थे, वह लाचार होकर, बन्द न हो जाय ॥ ८ ॥

सपदि हरिजनाख्यं पत्रमात्माधिकारे,
व्यधित गुणगणानां सन्निधिः श्रीकिशोरः।
यतिवरविरहे किं किं प्रजाभिर्विधेयं,
सकलसकलवर्त्मादर्शयत्स स्वबन्धून् ॥ ९ ॥

अनेक गुणोंके भण्डार श्रीमान् किशोरलाल मशरूवालाजीने हरिजन पत्रको अपने हाथमें ले लिया और महात्माजीकी अनुपस्थितिमें प्रजाको क्या-क्या करना चाहिये वह सब कलायुक्त मार्ग अपने बन्धुओंको बता दिये ॥ ९ ॥

गलितमतिधनं तच्छासनं भाग्यदोषा-
ज्झटिति तमपि कारां प्रापयद्दुर्गणदेहम्।
तदनु विनिगृहीतः श्रीविनोबा समर्च्यः,
प्रखरमतितमः श्रीमद्यतेः पट्टशिष्यः ॥१०॥

अंग्रेजी राज्यका बुद्धिवैभव भाग्यदोषसे नष्ट हो चुका था अतः उसने शीघ्र ही श्री किशोरलालजीको भी जेलमें पहुँचा दिया। उनके बाद महात्माजीके पट्ट शिष्य अति बुद्धिशाली श्री विनोबाजी पकड़ लिये गये॥ १० ॥

तदनु विबुधदत्तात्रेयकालेल ऊढः,
दुरितजर्नानिशान्तं तेन दुःशासनेन।

जनशमनिरता ये ये च विद्वद्वरिष्ठाः,
सिततनुपतिना ते ते न्यगृह्यन्त शीघ्रम् ॥११॥

उसके पश्चात् विद्वान् दत्तात्रेय कालेलकर (श्री काका साहेब कालेलकर) को दुष्ट अंग्रेज राज्यने दुष्टोंके घरमें—अर्थात् जेलमें भेज दिया। पश्चात् जनकल्याणमें लगे हुए जितने भी विद्वज्जन थे, सर्कारने सबको शीघ्र ही पकड़ लिया ॥ ११ ॥

सकलनगरमध्ये ग्राममध्ये तथात्वे,
समजनि सकलेष्वेवात्र नारीनरेषु।
हृदयदहन इद्धः शोकसंवेगसिद्धः,
सितभटकृतपापस्पर्शनेनातिवृद्धः ॥१२॥

सब शहरोंमें और सब ग्रामोंमें अंग्रेजी सिपाहियोंके द्वारा किये गये इस पापसे अतिवृद्धिको प्राप्त हुआ तथा शोकावेगसे अतिप्रज्वलित हृदयाग्नि भभक उठा ॥ १२ ॥

अविकलभरतक्ष्मा व्यापृता क्रोधशोकै-
र्निखिलपठनशालाः संपरित्यज्य सर्वे।
निजजनिवसुधाया मानभङ्गेन तप्ताः,
पृथगभिभवतुन्नाः संस्थिताश्छात्रसंघाः ॥१३॥

सम्पूर्ण भारतवर्ष क्रोध और शोकसे भर गया। छात्र अपनी जन्मभूमिके अपमानसे तप्त होकर, तथा तिरस्कारसे पीड़ित होकर पाठशालाओंसे पृथक् हो गये ॥ १३ ॥

अधिभरतरसं संयन्त्रिता यन्त्रशालाः,
सिततनुविहितास्ता न्यायशाला निरुद्धाः।
निखिलभरतभूमिः शोभयासीद्विरिक्ता,
दिशि दिशि वितताসীच्छोकसन्तापधारा ॥१४॥

भारतमें सभी मिलें, अंग्रेजोंकी कचहरियाँ बन्दकर दी गयीं। सम्पूर्ण भारत शोभाहीन हो गया था। चारों ओर शोक-सन्ताप छाया हुआ था ॥१४॥

मम जनिपृथिवीं ते क्रूरकामा विहाय,
सपदि निजशुभाय श्वेतगात्राः प्रयान्तु।
इति वचनमवादीत्तत्र तारस्वरेण,
शिशुरपि तत एवाघातितश्चाहतश्च ॥१५॥

भारतमें उस समय छोटे-छोटे बच्चे भी जोर-जोरसे चिल्ला रहे थे कि निर्दय अंग्रेज अपना कल्याण चाहते हों तो शीघ्र ही भारतको छोड़कर चले जायँ। इसके लिये उन बच्चोंको घायल भी किया गया और मार भी डाला गया ॥ १५ ॥

शिशुगणविनिपाते नो दया शासनस्य,
स्त्रिय इह विनिहन्तुं शौर्यमासीन्नृपस्य।
युवगण इह नित्यं शासनस्याविवेकं,
निहत उदितपापैर्निर्दयैः श्वेतसैन्यैः ॥१६॥

बच्चोंको मार डालनेमें राज्यको दया नहीं आती थी, स्त्रियोंका वध करनेमें राज्यकी बहादुरी मानी जाती थी। सर्कारके पापी निर्दय सैनिक नित्य ही जवानोंको मारा करते थे ॥ १६ ॥

इह नहि कुलकन्या कापि संरक्षितासी-
दिह नहि कुलवध्वश्चाभवन्रक्षिता वा।
सततलगुडहस्ताः सैनिकाः शासनीया,
अबलसबललोके प्राहरन्यष्टिभिस्ते ॥१७॥

यहाँ कोई कुलकन्या अथवा कुलवधू सुरक्षित नहीं थीं। सर्कारके सैनिक हाथमें लाठी लिये हुए निर्बलों और बलवानों पर, सभी पर लाठी-प्रहार करते थे ॥ १७ ॥

क्वचिदिह नृपसैन्यैर्धूमवायुप्रतानैः,
क्वचिदपि च विगीतैर्गोलिकाक्षेपणैश्च।
प्रतिनगरमुदारा ज्ञानवृद्धाश्च वृद्धा,
विबुधजनसमज्यापूजिता घातितास्तैः ॥१८॥

अंग्रेजी सेनाने कभी तो धूमवायु-ग्यॉस फैलाकर, कभी गोलियोंकी वर्षा करके प्रत्येक नगरमें विद्वानोंसे पूजित अनेक ज्ञानवृद्ध और वृद्धलोकोंको मार डाला ॥ १८ ॥

बहुविधबहुपीडापीडिता भारतीयाः,
कथमपि बलियाया मण्डले स्वीयराज्यम् ।
यतननिरतलोकाश्छापरायामपीड्यं,
व्यधिषत सितदेहान्सर्वथा तेवमत्य ॥१९॥

अनेक प्रकारकी भारी पीड़ासे पीड़ित वह भारतीय किसी प्रकारसे बलिया जिलेमें और छपरामें भी अंग्रेजोंका अपमान करके अपना राज्य-स्थापन करनेमें सफल हो गये ॥ १९ ॥

अभवदिदमथान्येषु प्रदेशेषु वृत्तं,
सितनृपभवनाद्याः पत्रधामादिका वा ।
अनलबलमवाप्य प्रव्रजन्तो रथाद्या,
बहुषु नगरकेषु ध्वंसिता यत्र तत्र ॥२०॥

अन्य जिलोंमें भी ऐसा ही हुआ । तथा अंग्रेजोंके घर, पोष्ट आफिस तथा रेलगाड़ियाँ जहाँ तहाँ बहुतसे शहरोंमें नष्ट कर दी गयीं ॥ २० ॥

विकसितशमशिक्षेष्वेषु वा गुर्जरेषु,
सुपठितशमकेष्वासामदेशेषु वापि ।
अगणितविपदभ्रश्रीविहारेषु चापि,
व्यधित दहनवृष्टिं पावकास्त्रैः सितेन्द्रः ॥२१॥

शान्तिकी शिक्षासे शिक्षित इस गुजरातमें, आसाममें, तथा विपत्तिको विपत्ति न माननेवाले बिहारमें भी अंग्रेजोंने मशीनगनसे अग्निवर्षा की ॥२१॥

हननदहनबन्धच्छेदभेदस्वतन्त्राः,
कुटिलसितभटाद्या यत्र तत्रैव सर्वान् ।
अहितहितविवेकभ्रष्टबोधा निहन्तुं,
प्रतिपुरमधिरथ्यं प्रारभन्तास्त्रहीनान् ॥२२॥

हिताहितके विचारसे शून्य अंग्रेजीसेनाने जहाँ तहाँ सर्वत्र ही प्रत्येक गाँवमें, गलियोंमें निरस्त्रलोगोंको मारना शुरू कर दिया; क्योंकि मरने, जलादेने, पकड़ने, काटने, फाड़नेमें वह स्वतन्त्र थी ॥ २२ ॥

गुरुवृजिनविहारेणात्मनाशाय नद्धाः,
पतितसितभटास्ते चीमुरग्रामकेऽत्र ।
अकृषत बत पापा बालिकास्वप्यसह्यं,
कलितपलितकेशास्वप्यधर्मं दुरन्ताः ॥२३॥

बड़े बड़े पापों द्वारा आत्मनाशकेलिये तैयार उन पापियोंने चीमुर ग्राममें बालिकाओं और वृद्धस्त्रियों पर भी असह्य बलात्कार किये ॥ २३ ॥

अधमतमनरास्ते श्वेतसेनानिविष्टा,
अधिगृहमपि गत्वा धर्षिताः प्रौढगर्भाः ।
नृपतिभटकृतानां दुष्कृतानां निरीक्षां,
सितपतिरिह कर्तुं नाकरोत्तर्हि काङ्क्षाम् ॥२४॥

उन महाअधम अंग्रेज सैनिकोंने घरोंमें भी घुस घुसकर प्रौढ गर्भवाली स्त्रियोंके साथ भी बलात्कार किया । अंग्रेज सर्कारने अपने सैनिकोंके कुकर्मकी जांच कराना स्वीकार नहीं किया ॥ २४ ॥

तदनु कृतदनुस्पापूर्णचेता महौजा,
इतिविषमविपत्तिं सोढुमत्यक्षमोसौ ।
यतिपतिपदनिष्ठो वीतरागोतिविद्वान्,
व्यधित च जयकृष्णस्तत्र सत्याग्रहाजिम् ॥२५॥

उसके पश्चात् उन अबलाओंपर दया करनेवाले, श्री महात्माजीके अनन्य भक्त, वीतराग, प्रोफेसर श्रीजयकृष्ण भणसालीने उस विषम विपत्तिका सहन करनेकेलिये असमर्थ होकर सत्याग्रह कर दिया ॥ २५ ॥

आचार्यो जयकृष्ण आर्तमनसा तीव्रे तपस्यास्थितो,
द्वाषष्टिं दिवसान्निरन्नमनयन्निर्वारि च स्वं वपुः ।

अंग्रेजी सेनाने कभी तो धूमवायु-ग्यॉस फैलाकर, कभी गोलियोंकी वर्षा करके प्रत्येक नगरमें विद्वानोंसे पूजित अनेक ज्ञानवृद्ध और वृद्धलोकोंको मार डाला ॥ १८ ॥

बहुविधबहुपीडापीडिता भारतीयाः,
कथमपि बलियाया मण्डले स्वीयराज्यम् ।
यतननिरतलोकाश्छापरायामपीड्यं,
व्यधिषत सितदेहान्सर्वथा तेवमत्य ॥१९॥

अनेक प्रकारकी भारी पीड़ासे पीड़ित वह भारतीय किसी प्रकारसे बलिया जिलेमें और छपरामें भी अंग्रेजोंका अपमान करके अपना राज्य-स्थापन करनेमें सफल हो गये ॥ १९ ॥

अभवदिदमथान्येषु प्रदेशेषु वृत्तं,
सितनृपभवनाद्याः पत्रधामादिका वा ।
अनलबलमवाप्य प्रव्रजन्तो रथाद्या,
बहुषु नगरकेषु ध्वंसिता यत्र तत्र ॥२०॥

अन्य जिलोंमें भी ऐसा ही हुआ । तथा अंग्रेजोंके घर, पोष्ट आफिस तथा रेलगाड़ियाँ जहाँ तहाँ बहुतसे शहरोंमें नष्ट कर दी गयीं ॥ २० ॥

विकसितशमशिक्षेष्वेषु वा गुर्जरेषु,
सुपठितशमकेष्वासामदेशेषु वापि ।
अगणितविपदभ्रश्रीविहारेषु चापि,
व्यधित दहनवृष्टिं पावकास्त्रैः सितेन्द्रः ॥२१॥

शान्तिकी शिक्षासे शिक्षित इस गुजरातमें, आसाममें, तथा विपत्तिको विपत्ति न माननेवाले बिहारमें भी अंग्रेजोंने मशीनगनसे अग्निवर्षा की ॥२१॥

हननदहनबन्धच्छेदभेदस्वतन्त्राः,
कुटिलसितभटाद्या यत्र तत्रैव सर्वान् ।
अहितहितविवेकभ्रष्टबोधा निहन्तुं,
प्रतिपुरमधिरथ्यं प्रारभन्ताब्रहीनान् ॥२२॥

हिताहितके विचारसे शून्य अंग्रेजीसेनाने जहाँ तहाँ सर्वत्र ही प्रत्येक गाँवमें, गलियोंमें निरस्त्रलोगोंको मारना शुरू कर दिया; क्योंकि मरने, जलादेने, पकड़ने, काटने, फाड़नेमें वह स्वतन्त्र थी ॥ २२ ॥

गुरुवृजिनविहारेणात्मनाशाय नद्धाः,
पतितसितभटास्ते चीमुरग्रामकेऽत्र ।
अकृषत बत पापा बालिकास्वप्यसह्यं,
कलितपलितकेशास्वप्यधर्मं दुरन्ताः ॥२३॥

बड़े बड़े पापों द्वारा आत्मनाशकेलिये तैयार उन पापियोंने चीमुर ग्राममें बालिकाओं और वृद्धस्त्रियों पर भी असह्य बलात्कार किये ॥ २३ ॥

अधमतमनरास्ते श्वेतसेनानिविष्टा,
अधिगृहमपि गत्वा धर्षिताः प्रौढगर्भाः ।
नृपतिभटकृतानां दुष्कृतानां निरीक्षां,
सितपतिरिह कर्तुं नाकरोत्तर्हि काङ्क्षाम् ॥२४॥

उन महाअधम अंग्रेज सैनिकोंने घरोंमें भी घुस घुसकर प्रौढ गर्भवाली स्त्रियोंके साथ भी बलात्कार किया। अंग्रेज सर्कारने अपने सैनिकोंके कुकर्मकी जांच कराना स्वीकार नहीं किया ॥ २४ ॥

तदनु कतदनुस्पापूर्णचेता महौजा,
इतिविषमविपत्तिं सोढुमत्यक्तमोसौ ।
यतिपतिपदनिष्ठो वीतरागोतिविद्वान्,
व्यधित च जयकृष्णस्तत्र सत्याग्रहाजिम् ॥२५॥

उसके पश्चात् उन अबलाओंपर दया करनेवाले, श्री महात्माजीके अनन्य भक्त, वीतराग, प्रोफेसर श्रीजयकृष्ण भणसालीने उस विषम विपत्तिका सहन करनेकेलिये असमर्थ होकर सत्याग्रह कर दिया ॥ २५ ॥

आचार्यो जयकृष्ण आर्तमनसा तीव्रे तपस्यास्थितो,
द्वाषष्टिं दिवसान्निरन्नमनयन्निर्वारि च स्वं वपुः ।

व्याप्नोत्सर्वदिशासु शासननरैस्तत्तत्कृतं दुष्कृतं,
तत्तीव्रं च तपः समस्तभुवनं व्याशिष्ट पापान्तकम्॥२६॥

आचार्य श्रीजयकृष्ण भणसाली दुःखित मनसे तीव्र तपस्यामें बैठ गये। ६२ दिनों तक उन्होंने अन्न और जल दोनोंका ग्रहण नहीं किया। तब अंग्रेजी सैनिकों ने जो जो पाप किये थे उनकी चर्चा सर्वत्र फैल गयी। भणसालीजीकी तपस्या भी सर्वत्र व्याप्त हो गयी ॥ २६ ॥

निर्लज्जं सितशासनं गतमति प्रत्यश्रृणोत्तद्भटै-
र्दुष्कृत्यस्य कृतस्य वीक्षणमथो शान्तिं गतं तत्तपः।
युक्तप्रान्तविहारबङ्गगुजराताद्येषु देशेष्वपि,
श्वेतैराचरितं निरङ्कुशतया यत्तन्न वर्ण्यं गिरा ॥२७॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
विंशः सर्गः

निर्लज्ज, निर्बुद्धि सर्कारने जब अपने सैनिकोंके पापोंकी जाँचकी प्रतिज्ञाकी तब श्रीभणसालीजीका तप समाप्त हुआ। युक्तप्रान्त (उत्तर प्रान्त), बिहार, बङ्गाल, गुजरात आदि प्रदेशोंमें अंग्रेजोंने जो अत्याचार निरङ्कुश होकर किये वह वाणीसे नहीं कहे जा सकते ॥ २७ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
विंशः सर्गः।



# एकविंशः सर्गः

बाणब्रह्मग्रहब्रह्ममिते यैशववत्सरे ।
चतुर्थे मासि सुभगे पूर्णे वासन्तशोभया ॥ १ ॥
अह्मदाबादनगरे सर्वकल्याणसंयुते ।
ग्रामेकोचरबे श्रीमाञ्जगन्मोहनमोहनः ॥ २ ॥
सत्याग्रहाश्रमं शुभ्रं स्थापयित्वा यथातथा ।
अध्यवात्सीत्तमपरैः सहायैरीश्वराश्रयः ॥ ३ ॥

ईसवी सन् १९१५ के अप्रैल मासमें जब कि वसन्त ऋतु वर्तमान था ॥ १ ॥ सर्वकल्याण युक्त अहमदाबाद शहरमें कोचरब गाँवमें जगत्को अपने गुणोंसे मुग्ध बनानेवाले श्रीमोहन-महात्मा श्रीगांधीजी ॥ २ ॥ पवित्र सत्याग्रह आश्रमकी जैसे तैसे स्थापना करके अपने अन्य साथियोंके साथ भगवान्के भरोसे रहने लग गये ॥ ३ ॥

कल्याणं भारतस्यापि जगतोपि च सापदः ।
कथंकारं भवेदेतच्चिन्तासन्तप्तमानसः ॥ ४ ॥

दुःखी भारतका भी और दुःखी जगत्का भी कल्याण किस प्रकारसे हो, इस चिन्तासे उनका मन सन्तप्त रहता था ॥ ४ ॥

महादेवं पुरः कृत्वा परीखो नरहरिस्तदा ।
दर्शनाय यतीन्द्रस्य कर्हिचिन्नक्तमीयिवान् ॥ ५ ॥

कभी एक समय रात्रिमें श्रीमहात्माजीके दर्शनके लिये श्री नरहरिभाई परिख श्रीमहादेवभाई देसाईके साथ वहाँ ( आश्रममें ) गये ॥ ५ ॥

वार्तालापप्रसङ्गेन नयन्तौ कालमात्मनोः ।
सुहृदौ सुहृदौ तौ च चिरं तेन सह स्थितौ ॥ ६ ॥

पवित्र हृदयवाले उन दोनों मित्र श्रीमहात्माजीके साथ वार्तालापमें बहुत देर तक वहाँ रहे ॥ ६ ॥

**सर्वशान्तिप्रदः काल आसीत्सजलदागमः ।**
**मेघश्यामलिता रात्रिर्वर्षाबिन्दुचयार्चिता ॥ ७ ॥**

अत्यन्त शान्ति देनेवाला वर्षा ऋतु का समय था । मेघोंसे घिरी हुई काली रात थी और बर्सातकी बूँदें पड़ रही थीं ॥ ७ ॥

**आश्रमात्स्वगृहं यन्तौ चिन्तयन्तौ मनोन्तरे ।**
**यतिभावप्रभावाभां नोचाते तौ परस्परम् ॥ ८ ॥**

आश्रमसे ( रात्रिमें ) घर जाते समय वह दोनों मित्र महात्माजीके भाव और प्रभावकी सुन्दरताको विचारते हुए चुप चाप जा रहे थे । कोई किसीसे बोलता नहीं था ॥ ८ ॥

**तदानीं मौनमुद्रां स्वां महादेवः समापयत् ।**
**द्वितीयं स्वं हि तन्मित्रमूचे नरहरिं प्रियम् ॥ ९ ॥**

उस समय श्रीमहादेव भाईने अपना मौन छोड़ दिया और अपने ही दूसरे आत्माके समान प्रिय सन्मित्र श्रीनरहरिभाईसे कहा ॥ ९ ॥

**महापुरुषधौरेयस्यैतस्याङ्घ्रिसरोजयोः ।**
**यावज्जीवं निवासाय स्पृहयत्येव मे मनः ॥१०॥**

इस सर्वश्रेष्ठ महापुरुषके चरण कमलोंमें जीवनपर्यन्त निवास करनेके लिये मेरा मन ललचा रहा है ॥ १० ॥

**ऋषिब्रह्मग्रहब्रह्ममिते यैशववत्सरे ।**
**सोयं नरहरिः श्रीमानाश्रमे दीक्षितोभवत् ॥११॥**

सन् १९१७ ई० में श्रीमान् नरहरिभाईने आश्रममें रहनेकी दीक्षा ले ली ॥ ११ ॥

**इच्छन्नपि महादेवो नाभवत्फलितार्थकः ।**
**मनोरथो न पङ्गुत्वं तस्याभजत कर्हिचित् ॥१२॥**

आश्रममें महात्माजीके पास रहनेकी इच्छा करने पर भी श्रीमहादेव भाई की इच्छा सफल नहीं हुई। परन्तु उनका मनोरथ कभी पङ्गु नहीं हुआ—चलता ही रहा ॥ १२ ॥

यावत्सोहमदाबाद आसीत्तावन्निरन्तरम् ।
दर्शनायास्य देवस्य परया श्रद्धया ययौ ॥१३॥

श्री महादेव भाई जब तक अहमदाबादमें थे तब तक प्रतिदिन इन देवताके—श्री महात्माजीके दर्शनके लिये महती श्रद्धाके साथ जाते थे ॥ १३ ॥

एकस्मिन्नह्नि हृष्टात्मा तं जगाद यतीश्वरः ।
केनचित्कारणेन त्वमिहागन्तुं मयोद्यसे ॥१४॥

एक दिन श्री महात्माजीने प्रसन्न होकर—श्रीमहादेवभाईको कहा कि किसी कारणसे मैं कहता हूँ कि तुम यहाँ आकर रहो ॥ १४ ॥

सन्निकाशो निकाशस्त्वं वत्स वत्स्यसि मे चिरम् ।
न संशेते मनो मेत्र फलिष्यति मनोरथः ॥१५॥

हे वत्स ! तुम प्रकाशित होकर यशस्वी होकर चिरकाल तक मेरे पास निवास करोगे, इसमें मुझे तनिक भी शङ्का नहीं है। यह मेरी इच्छा फलेगी ही ॥ १५ ॥

त्रिष्वेतेषु प्रयातेषु दिनेषु तव हृच्छयम् ।
अन्वभावि मया सत्त्वं यच्चिरेणास्ति कामितम् ॥१६॥

श्रीमहात्माजीने कहा कि इन तीन दिनोंमें ही मैंने तुम्हारे हृदयके सत्त्वको = शक्तिको पहचान लिया है। इसी शक्तिकी मुझे बहुत समयसे इच्छा थी ॥ १६ ॥

द्वाभ्यां संवत्सराभ्यां मे प्रेप्सितो यादृशो जनः ।
प्राप्तो मयासि ताताद्य गतशोकोधुनास्म्यहम् ॥१७॥

दो वर्षोंसे मैं जिस प्रकारका आदमी प्राप्त करना चाहता था, तुम वैसे ही मुझे मिल गये हो। हे तात, अब मेरी चिन्ता दूर हो गयी ॥ १७ ॥

यस्मिन्समर्प्य मे सर्वं कार्यभारं भराकुलः।
शयिष्ये निर्भरं चाद्य स त्वमाप्तोसि मेधुना ॥१८॥

अपना समस्त कार्यभार मैं जिसको सौंपकर सुखकी निद्रा आज सोऊँगा, वह तुम आज मुझे मिल गये हो ॥ १८ ॥

सर्वधर्मान्परित्यज्य मामेव शरणं कुरु।
आवां परस्परं वृद्धिं सुखं लप्स्यावहे ध्रुवम् ॥१९॥

सब विचारोंको छोड़कर तुम मेरे पास आ जावो। हम दोनों परस्पर सुख और वृद्धिको अवश्य प्राप्त करेंगे ॥ १९ ॥

एतान्छब्दाननल्पेभ्यो जनेभ्यो नाहमब्रवि।
यत्र सत्त्वं निरीक्षेहं तत्रैवैतान्प्रयोजये ॥२०॥

"तुम मेरे पास रहो" इन शब्दोंको मैंने बहुत लोगोंके सामने नहीं कहा है। जहाँ मैं शक्ति देखता हूँ, वहाँ ही इनका प्रयोग करता हूँ ॥२०॥

पोलाकः श्रीमती श्लेशिन् मगनलाल इति त्रयः।
एतादृशैर्मया शब्दैरद्य यावदुपस्कृताः ॥२१॥

श्रीमान् पोलाक, श्रीमती श्लेशिन और मगनलाल गांधी, इन तीनको ही आजतक मैंने यह शब्द कहे हैं॥ २१ ॥

कृतज्ञता च चातुर्यं तथा विश्वसनीयता।
त्वत्स्थैरेतैर्गुणै रत्नैरहं मुग्धोस्मि सर्वथा ॥२२॥

कृतज्ञता, कुशलता और विश्वासपात्रता, तुममें रहे हुए इन तीन गुणरूप रत्नोंसे मैं अत्यन्त मुग्ध हूँ ॥ २२ ॥

ममानेकेषु कार्येषु तव स्यादुपयोगिता।
परीक्षाकुशलस्याद्य प्रतीता ते सुपात्रता ॥२३॥

मेरे अनेक कार्योंमें तुम्हारी उपयोगिता होगी। मैं परीक्षा करनेमें बहुत निपुण हूँ। तुम्हारी सुपात्रता मैं समझ सका हूँ ॥ २३ ॥

अत्यल्पेनैव कालेन मनुष्याणां परीक्षणम्।
कर्तुं शक्नोम्यहं तेन त्वं जातोसि परीक्षितः ॥२४॥

बहुत ही थोड़े समयमें मैं मनुष्योंकी परीक्षा कर सकता हूँ। तुम्हारी परीक्षा मैंने कर ली है ॥ २४ ॥

होराभिः पञ्चभिर्जातः श्रीपोलाकः परीक्षितः।
क्षणेनैव स संजातो ममाहं तस्य चाभवम् ॥२५॥

श्री० पोलाककी परीक्षा तो मैंने पाँच घंटोंमें ही कर ली थी। क्षण भरमें वह मेरे हो गये और मैं उनका हो गया ॥ २५ ॥

प्रयाहि हैदराबादं यदि त्वं प्रयियाससि।
आवर्षं षट् च वा मासाँस्तत्र स्थित्वैहि मां पुनः ॥२६॥

यदि तुम जाना चाहते हो तो हैदराबाद ( दक्षिण ) जावो। वहाँ वर्षभर या छ महीने रहकर फिर मेरे पास चले आवो ॥ २६ ॥

क्वचिद्दूरे महादेवः कियन्तं कालमास्थितः।
गोधरानगरे भूयो महात्मानमवाप सः ॥२७॥

कितने ही समय तक श्रीमहादेवभाई अन्यत्र कुछदूरी पर रहते थे और फिर गोधरा ( गुजरात ) में श्रीमहात्माजीसे वह मिले ॥ २७ ॥

चम्पारण्ये विहारे स्वपत्न्या श्रीदुर्गया सह।
महादेवो महादेवमनुवव्राज सोत्सुकः ॥२८॥

श्रीमहात्माजीके साथ साथ वह अपनी पत्नी श्रीमती दुर्गा देवीके सहित बिहार प्रान्तमें चम्पारन गये ॥ २८ ॥

स्वपितुः श्रीहरेराज्ञां ग्रहीतुं पितृदेवतः।
दुर्गाजानिर्गतः सार्धं दुर्गया सरसं पुरम् ॥२९॥

वह पिताको देवसमान पूजते थे। श्री महात्मजीके साथ रहनेकेलिये उन्होंने अपने पिता श्री हरिभाईसे आज्ञा नहीं ली थी। आज्ञा लेनेके लिये श्रीदुर्गाबहिनके साथ वह सरसपुर गये ॥ २९ ॥

पित्रा पुत्रप्रियेणासौ परवान्पितुरादरात्।
यतिना सह वासाय समाज्ञप्तः कथंचन ॥३०॥

पुत्र—श्री महादेव भाई अपने पिताको बहुत प्रिय थे। पिताके प्रति आदरभावके कारण वह अपनेको परतन्त्र मानते थे। पिताने किसी किसी प्रकारसे श्रीमहात्माजीके साथ रहनेकी उन्हें आज्ञा दे दी ॥ ३० ॥

श्रीमत्या दुर्गया सार्धं चम्पारण्ये पुनर्यतेः।
पादयोर्वस्तुकामोसा निर्गतो गृहतः पितुः ॥३१॥

श्रीमहात्माजीके चरणोंमें निवास करनेकी इच्छासे वह श्रीदुर्गा बहिनके साथ पुनः चम्पारण जानेके लिये पिताके घरसे चले ॥ ३१ ॥

ततः प्रभृति भक्तोसौ मृत्योरागमनावधि।
असेविष्ट महाभक्त्या मोहनाङ्घ्रिसरोरुहे ॥३२॥

तबसे लेकर मृत्युकाल पर्यन्त श्रीमहादेव भाई परमभक्तिके साथ श्रीमहात्माजीके ही चरणकमलोंकी सेवा करते रहे ॥ ३२ ॥

छायेव सततं श्रीमान् महादेवो विदांवरः।
सविधे यतिराजस्य यावद्देहं व्यतिष्ठत ॥३३॥

श्रीमहादेव भाई सर्वदा श्रीमहात्माजीके पास छायाके समान तब तक बने रहे जब तक कि देहपात नहीं हुआ ॥ ३३ ॥

निजाचार्यपदाम्भोजभ्रमरो निर्भ्रमोभ्रमत्।
सर्वत्र स्वस्य सौगन्ध्यान्मोहयन्गुणिनां मनः ॥३४॥

अपने आचार्य श्रीमहात्माजीके चरणकमलोंके भ्रमर समान वह, सर्वत्र अपनी सुगन्धिसे गुणियोंके मनको मोहित करते हुए, निर्भ्रमरूपसे भ्रमण करते थे ॥ ३४ ॥

नेत्रवेदग्रहब्रह्ममिते खिस्तीयवत्सरे ।
निगृहीतः स मुम्बय्यामगस्तस्य दिनेष्टमे ॥३५॥

ता० ८-८-१९४२ ई० को वह बम्बईमें पकड़ लिये गये ॥ ३५ ॥

पञ्चदश्यामगस्तस्य क्षीणस्वास्थ्यो बभूव सः ।
अज्ञातान्तिकनिधनो यरोडाबन्दिसद्मनि ॥३६॥

ता० १५-८-४२ को यरोडा जेलमें उनका स्वास्थ्य बिगड़ गया। मृत्यु पासमें ही है, इसे कोई जानता नहीं था ॥ ३६ ॥

प्रातःकाले समुत्थाय क्षौरकर्म समाप्य च ।
स्नातानुलिप्तशोभाढ्यः स्वस्वास्थ्यासौष्ठवं गतः ॥३७॥

वह प्रातः काल उठकर, क्षौर कर्म करके स्नान और तेल आदि बालोंमें लगा करके अस्वस्थ हो गये ॥ ३७ ॥

देवी सरोजिनी पार्श्वे स्थितासीत्तत्सहायिनी ।
महावैद्यां सुशीलां सा वैयग्र्येण द्विराह्वयत् ॥३८॥

श्रीमती सरोजिनी देवी नायडू उनके पास ही थीं। उन्होंने श्रीमती डाक्टर सुशीलाको घबड़ाकर दो बार बुलाया ॥ ३८ ॥

सा समागत्य तन्नाडीं हस्तेकृत्वान्वभूत्तदा ।
पस्पन्दे नाडिका नैव हृदयं नापि तस्य च ॥३९॥

श्री० डाक्टर सुशीला बहिनने आकर उनकी नाड़ी देखी। उन्होंने देखा कि नाड़ी चलती नहीं थी और हृदय भी गतिशून्य था ॥ ३९ ॥

यतिराजोपि तत्रायाद्द्वित्रैरेव क्षणैस्तदा ।
हस्तं हस्तेन पस्पर्श मस्तकं चापि तस्य सः ॥४०॥

दो तीन मिन्टके बाद ही श्री महात्माजी भी उनके पास आ गये। उन्होंने अपने हाथसे उनके हाथ का और मस्तकका स्पर्श किया ॥ ४० ॥

अनिमीलितनेत्रोसौ महादेवस्य चक्षुषी ।
तिष्ठन्ददर्श चक्षुर्भ्यां गतानन्दप्रभाकरः ॥४१॥

श्रीमहात्माजी आँख बन्द किये बिना एक टक श्रीमहादेवभाईकी आँखोंकी ओर देख रहे थे। उनकी प्रसन्नता चली गयी थी ॥ ४१ ॥

यदि पश्येन्महादेवः सकृन्मोद्घाट्य चक्षुषी।
अवश्यमाप्तवीर्यः स उत्थास्यति गुरुप्रियः॥
इत्याशा यतिराजस्य दीनबन्धोः पुनः पुनः।
उत्थायोत्थाय विदधे विह्वलं तं महादृढम्॥४२॥

"यदि महादेव आँख उघाड़कर एकवार मुझे देख ले तो इसे अवश्य शक्ति प्राप्त होगी और उठकर बैठ जायगा"। यतिराज—श्रीमहात्माजीकी यह आशा फिर फिरसे उठ उठ कर यद्यपि वह अत्यन्त दृढ़ थे तो भी, उन्हें विह्वल बनाती थी ॥ ४२ ॥

सर्वेषां कल्पवृक्षस्य फलितो न मनोरथः।
नेत्रयोर्गुरुपादाब्जे संस्थाप्य स शिवोभवत्॥४३॥

सबकेलिये कल्पवृक्ष समान श्रीमहात्माजीकी यह इच्छा पूर्ण नहीं हुई। वह तो अपने गुरुके चरणोंको नेत्रोंमें स्थापित करके शिव हो गये॥४३॥

श्रीसुशीलारुदत्तत्र रुदती बा समागमत्।
अचलः सोविकल्पश्चातिष्ठद्धैर्यधराधरः॥४४॥

डाक्टर श्रीसुशीला बहिन रोती थीं। रोती रोती बा भी वहाँ आ गयीं और पर्वतके समान धैर्य वाले श्रीमहात्माजी अचल और विना किसी संकल्प विकल्पके स्थिर बन गये ॥ ४४ ॥

तदङ्गवस्त्रकोषाच्च गीताग्रन्थं च लेखनीम्।
श्रीसुशीला बहिष्कृत्य बापूहस्ते समार्पिपत्॥४५॥

श्री० सुशीलाजीने उनके अङ्गवस्त्र-कुर्तेके कोष=जेबमेंसे गीताका एक पुस्तक और कलम निकाल कर श्री बापूजीके हाथमें दे दिये ॥ ४५ ॥

यमाहूयात्मनश्चाङ्के महादेवं यतीश्वरः।
स्थातुं न्यमन्त्रयत्सोद्य तमनापृच्छ्य संययौ॥४६॥

श्रीमहात्माजीने जिसे बुलाकर अपनी निर्भय गोदमें बैठनेके लिये निमन्त्रित किया था वही महादेव भाई आज उन्हें पूछे विना चले गये ॥ ४६ ॥

वाचंयमो महायोगी प्रियशिष्यं निजान्तिके ।
निर्वचसं च निस्तब्धं प्रेक्ष्यासावातुरोभवत् ॥४७॥

श्री महात्माजी अपने प्रियशिष्यको अपने पास निस्तब्ध गतिशून्य तथा चुपचाप पड़े देखकर आतुर बन गये ॥ ४७ ॥

अगस्तस्यैव मासस्य पञ्चदश्यां तिथावसौ ।
स आश्लिष्यन्मृतिं धीमान्यतिराजप्रियोत्तमः ॥४८॥

अगस्त मासकी ही १५ वीं तारीखको महात्माजीके सबसे अधिक प्रिय बुद्धिमान श्रीमहादेव भाईने देह छोड़ दिया ॥ ४८ ॥

अड्वाणी केटली यातौ महावैद्यौ ततस्ततः ।
यतीश्वराज्ञया सद्यः श्रीसुशीला व्यतिष्ठत ॥४९॥

डाक्टर श्री० अडवाणी और डाक्टर श्री० केटली श्री बापूजीकी आज्ञासे वहाँसे तब चले गये और डाक्टर श्री सुशीला वहाँ ही रहीं ॥४९॥

ओष्णेन सलिलेनायं यतीशः करुणालयः ।
सुशीला श्रीमती चापि शवस्नानमकारयत् ॥५०॥

श्री दयालु बापूजीने और सुशीला बहिनने महादेव भाईके शवको स्नान कराया ॥ ५० ॥

यतिराजः स्वहस्तेन शिष्यस्याङ्गानि सर्वशः ।
कृपामूर्तिर्महेशोसौ सम्यक् प्राक्षालयत्तदा ॥५१॥

कृपामूर्ति श्रीयतिराजने अपने शिष्यके सर्वाङ्गोंको अपने हाथोंसे अच्छी तरहसे धोकर साफ किया ॥ ५१ ॥

अहो पिता च माताहो अहो गुरुरहो गुरुः ।
अहो शिष्यश्च दासोहो अहो पुत्रः शमालयः ॥५२॥

धन्य पिता, धन्य माता, धन्य गुरु । शिष्य धन्य, दास धन्य और शान्तिसदन पुत्र भी धन्य ॥ ५२ ॥

बापू स्वयं स्वहस्तेन बन्दिवस्त्रमवास्तृणोत् ।
भूमौ तत्र शवं श्रीमान्स श्रीमन्तमशाययत् ॥५३॥

श्रीबापूजीने स्वयं अपने हाथोंसे जेलखानेके कपड़ेको पृथिवीपर बिछा दिया और उसपर उस शवको सुला दिया ॥ ५३ ॥

शरीरं बन्दिवस्त्रेण ऋषिराच्छादयत्तदा ।
बन्द्यासीद्बन्दिना तेन गमनीयमितीच्छया ॥५४॥

श्रीमहात्माजीने शरीरको भी जेलखानेके वस्त्रसे ही ढाँक दिया । उनकी इच्छा थी कि महादेव बन्दी-कैदी था, उसे बन्दीके रूपमें जाना चाहिये ॥ ५४ ॥

सुशीलया प्रदत्तेन मीरया घर्षितेन च ।
चन्दनेन जगत्पूज्यस्तं शवं विलिलेप सः ॥५५॥

श्रीसुशीलाबहिनने मीरा बहिनको चन्दनका एक टुकड़ा दिया था उसे घसकर श्रीमीराबहिन ने लेप तैयार किया था । जगत्पूज्य श्रीबापूजीने उससे शवका लेप किया ॥ ५५ ॥

महादेवस्य कण्ठोरो मीरागुम्फितमालया ।
भूषयामास योगीशः स्वकरेण कृपालुना ॥५६॥

श्रीमीराबहिनने हार तैयार किया था । बापूजीने उसी हारसे श्री महादेवभाईके कण्ठ और वक्षःस्थलको अपने ही कृपालु हाथोंसे सजाया ॥ ५६ ॥

आगाखानप्रसादीय उद्याने यतिराट् स्वयम् ।
महादेवशरीरेऽरे पावकं समचारयत् ॥५७॥

आगाखान-महलके उद्यानमें महात्माजीने स्वयं महादेवभाईके शरीरमें अग्नि प्रवेश कराया ॥ ५७ ॥

मृतः पुत्रो गतं मित्रं निवृत्तः सचिवः परः ।
प्रयातश्च पितेत्येवं महात्मात्मन्यमन्यत ॥५८॥

महात्माजीने तो यही मान लिया कि मेरे पुत्रका अवसान हो गया। मेरा मित्र चला गया। मेरा मन्त्री निवृत्त हो गया। तथा यह भी मान लिया कि मेरे पिताका भी देहान्त हो गया ॥ ५८ ॥

कियती न व्यथा तेन यतिराजमनोभुवि ।
अश्लथा प्रसरं प्राप्ता न स्वप्नेपि विचिन्तिता ॥५९॥

श्रीयतिराजके मनमें जो भारी व्यथा उस समय हो रही थी, उसे तो कहा ही नहीं जा सकता। स्वप्नमें भी किसीने उसका विचार नहीं किया था ॥ ५९ ॥

धन्य एव महादेवो धन्य एव च तत्पिता ।
तज्जननी महाधन्या यतिराजपदाश्रयात् ॥६०॥

महात्माजीके चरणोंका आश्रय लेनेसे महादेवभाई भी धन्य हो गये थे। उनकी माता और उनके पिता भी धन्य थे ॥ ६० ॥

केनास्तु वर्ण्यमिदमुत्तमभाग्यपुञ्जं,
तद्देवदुर्लभतमं हृदयापहारि ।
तस्याद्य यस्य तनुदाहभुवं समेत्य,
पुष्पैः समर्चयति नित्यमसौ महात्मा ॥६१॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते

पारिजातापहारे

एकविंशः सर्गः

आज श्रीमहादेवभाईके उस उत्तमभाग्यपुञ्ज—जो देवोंको भी दुर्लभ है और हृदयको हरनेवाला है—का कौन वर्णन कर सकता है जिसके देहकी दाहभूमिमें जाकर श्रीमहात्माजी स्वयं पुष्पोंसे पूजा करते हैं ॥ ६१ ॥

**इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते पारिजातापहारे स्वोपज्ञराष्ट्रभाषाटीकायां एकविंशः सर्गः**

# द्वाविंशः सर्गः

बन्दिमन्दिरपदं विभूषयन्नेकदालिखदिदं दलं शुभम् ।
लीनलीथगुमहाशयान्तिके सर्ववृत्तमधिगत्य योगिराट् ॥ १ ॥

कारागारमें रहते हुए योगिराज श्री महात्माजीने एक समय श्री० लिन्-लिथगो (वाइसराय) के पास, सर्ववृत्तान्तको जानकर यह शुभ पत्र लिखा ॥१॥

यत्त्वया सपदि राष्ट्रसंसदा संख्यमेव निरधारि तत्त्वतः ।
या च वागिह निवेदिता त्वया सर्वमेव विदितं मया सखे ॥ २ ॥

मित्र, आपने जो राष्ट्रियमहासभाके साथ वास्तविक युद्ध करनेका निर्णय कर लिया है तथा आपने जो भाषण दिया है, वह सब मुझे अवगत है ॥२॥

सद्य एव भवताद्य शक्यते भारतीयवसुधानिवासिनाम् ।
स्वीयपक्षमनुमोदितुं मतिं प्राप्तुमत्र न हि कोपि विस्मयः ॥३॥

शीघ्र ही आप अपने पक्षके अनुमोदनके लिये भारतीयोंकी सम्मति प्राप्त कर सकते हैं। इसमें आश्चर्य नहीं है ॥ ३ ॥

श्वेतचर्मभिरितोद्य गम्यतां मामकीनमिदमस्ति यद्वचः ।
तत्र तेपि दधते हि हेतुतां देशबन्धनविदत्तबुद्धयः ॥ ४ ॥

मेरा जो यह कथन है कि अंग्रेज भारतसे चले जायँ उसमें देशको बन्धनमें रखनेकी इच्छावाले वह भारतीय भी अवश्य ही कारण हैं ॥४॥

पूर्वमेव मयका प्रतिश्रुतं पत्रलेखनमुपह्वरे तव ।
आरभेय यदि युद्धमुद्धुरं केन तत्त्वमभवो ह्यधीरधीः ॥ ५ ॥

मैंने प्रथम ही प्रतिज्ञा की थी कि यदि मैं विशिष्टरूपसे युद्धका आरम्भ करूँगा तो आपके पास पत्र लिखूँगा ॥ ५ ॥

योऽन्यधाय्यखिलराष्ट्रसंसदा निर्णयः स उचितोऽस्ति वा न वा।
इत्यवेक्षणविधौ मया भवान्प्रार्थनीय इति मे मनीषितम् ॥ ६ ॥

अखिल भारतवर्षीय राष्ट्रमहासभाने जो निर्णय किया है उसके सम्बन्धमें मैं आपसे भी प्रार्थना करनेवाला था कि विचार करें कि वह निर्णय उचित है या नहीं ? ॥ ६ ॥

यापि कापि यदि संसदो दृशि न्यूनता भवति वीक्षिता क्वचित्
तां सदेयमपनीय वर्धते तन्नयोयमिति सार्वकालिकः ॥ ७ ॥

महासभाकी दृष्टिमें कहीं भी कुछ भी न्यूनता प्रतीत होती हो तो वह उसे दूर करके ही सदा आगे बढ़ती है। यह उसकी सदाकी नीति है ॥ ७ ॥

अर्पितो हि यदि मे भवत्त्वया कोपि काल इह तन्मया सखे।
दुःखदापि विघटय्य सौख्यदं वर्त्म किञ्चिदपि शोधितं भवेत् ॥८॥

यदि आप मुझे थोड़ासा भी समय दिये होते तो हे मित्र, मैं इस दुःखद मार्गको हटाकर कोई सुखद मार्ग ढूँढ़ निकालता ॥ ८ ॥

प्रार्थितं परिषदाद्य वस्तु यत्तथ्यमस्ति किमतथ्यमेव तत्।
त्वं तथैव जनतापि वित्थ इत्येष मे भवति निश्चयो दृढः ॥ ९ ॥

मेरा दृढ़ निश्चय है कि महासभाने जिस वस्तुकी प्रार्थना की है उसे आप और जनता दोनों ही जानते हैं ॥ ९ ॥

यन्मया प्रवचनं कृतं सखे मुम्बयीनगर आधिकारिकम्।
श्रोतुमस्य विवृतिं न हि त्वया धैर्यमाधृतिमिति स्खलस्तव ॥१०॥

बम्बईमें मैंने जो अधिकारपूर्ण भाषण किया था उसके विवरणको सुननेके लिये आपने धैर्य नहीं रखा, यह आपकी भूल हुई ॥ १० ॥

नायमस्ति कथमप्युपक्रमः संयुगस्य मम सर्वथेति वाक्।
न श्रुतात इह निर्जने वने भ्रान्त एव विकलो भवस्त्यये ॥११॥

मैंने कहा था कि मेरे युद्धका यह आरम्भ नहीं है। आपने मेरी

इस बातको नहीं माना अत एव निर्जनवनमें व्याकुल होकर भटक रहे हैं ॥ ११ ॥

बुद्धिमत्त्वमुपयोक्ष्यतेतरां राष्ट्रसंसदमुदारमानसाम् ।
आशया निगडितोऽहमित्यदो नो दधाति वचनं तवौचितीम् ॥१२॥

"उदार मनवाली राष्ट्रियमहासभाको कभी बुद्धिमत्ता प्राप्त होगी इसी आशामें मैं फँसा रहा" आपका यह कथन भी उचित नहीं है ॥ १२ ॥

तथ्यवस्तुपरिहाण एव चेद्बुद्धिमत्वमवगम्यते त्वया ।
हन्त हन्त मतिमंस्तदैति तन्नाशवर्त्म कुटिलं क्षणेन हि ॥१३॥

यदि सत्य वस्तुके त्यागमें ही आप बुद्धिमत्ता समझते हैं तब तो खेदकी बात है कि हे बुद्धिशालिन्, बुद्धिमत्ता कुटिल नाशके मार्गमें क्षणभरमें चली जायगी ॥ १३ ॥

भारतीयजनता स्वतन्त्रतारत्नमत्र नचिरेण धास्यति ।
यत्त्वयापि नितरां प्रतिश्रुतं तस्य हानमभिकाम्यतेद्य किम् ॥१४॥

भारतीय जनता शीघ्र ही स्वतन्त्रतारूप रत्नको धारण करेगी, यही तो आपने भी कितनी बार प्रतिज्ञा की है। अब उसका भङ्ग क्यों करना चाहते हैं ? ॥ १४ ॥

प्रार्थितं परिषदात्र तत्र किं दृश्यते मतिमतां बहिष्कृतम् ।
येन शीघ्रमिह नो न्यवेशयो बन्दिसद्म तव धीविचित्रता ॥१५॥

महासभाने जो कुछ मांगा है उसमें ऐसी क्या वस्तु है जिसे बुद्धिमान् लोग स्वीकार न करें ? और उसमें ऐसी क्या वस्तु है जिसके लिये हम लोगोंको एकदम जेलमें बन्द कर दिया गया है ? यह आपकी बुद्धिकी विचित्रता है ॥ १५ ॥

राष्ट्रसंसदनुबोधितं वचः पालितं यदि भवेत्तदा ननु ।
दुर्जनाधिगतमेत्य वर्त्म तत्सज्जनाः स्युरवमानिता इति ॥ १६ ॥

आपने यह जो कहा है कि राष्ट्रियमहासभाकी बात यदि मानी जाय

तब तो अवश्य ही दुर्जनोंका मार्ग स्वीकार करके सज्जनोंका अपमान करना होगा ॥ १६ ॥

शोभते न कथमप्यदो वचस्तत्त्वदीयमुखतो बहिर्गतम् ।
वस्तुतस्तु विपरीतमत्र मे सम्मतौ कृतमिदं त्वया सखे ॥१७॥

आपके मुखसे निकला हुआ आपका यह वचन किसी प्रकारसे शोभा नहीं देता है। मेरी सम्मतिमें तो आपने वस्तुतः उलटा ही किया है ॥ १७ ॥

हिंसनाभिमुखमेव धावते राष्ट्रसंसदिति ते वचो मृषा ।
मित्रराज्यमनुसर्तुमातुरा सा न हिंसनपथे क्वचिद्व्रजेत् ॥१८॥

आपने जो यह कहा कि राष्ट्रियमहासभा हिंसाकी ओर दौड़ रही है, वह भी मिथ्या है। जो महासभा मित्रराज्योंका अनुसरण करना चाहती है वह हिंसाके मार्गमें कैसे जा सकती है ॥ १८ ॥

तत्प्रवर्तनविधौ रता भृशं संसदो निखिलनायका इति ।
त्वद्वचः स्पृशति नैव तथ्यतामौषधं भवति न भ्रमाय हि ॥१९॥

उस हिंसापथके संचालनमें उसके सब नेता लगे हुए हैं। अतः आपका यह कथन भी सत्यको स्पर्श नहीं करता है। सत्य तो यह है कि भ्रमकी कोई दवा ही नहीं है ॥ १९ ॥

भारतेऽत्र विततानि साधनान्यागतेरपि गतेरपीह सा ।
नाशयिष्यति समूलमित्यसौ भीरुदेति तव निर्बले हृदि ॥२०॥

भारतमें फैले हुए आनेजानेके साधनों-रेलगाड़ियोंको महासभा समूल नष्ट कर देगी, आपके दुर्बल मनमें यह भय पैदा हो गया है ॥ २० ॥

वस्त्रयन्त्रसदनानि भारते यानि सन्ति ननु तानि सा सभा ।
रोधयेदथ निरोधयेदपीत्येवमप्यतिभयं तवाधुना ॥२१॥

कपड़ेकी जितनी भारतमें मिलें हैं अवश्य ही उन सबको महासभा

या तो बिल्कुल समाप्त कर देगी या उसे रोक देगी, यह बड़ा भारी भय आपको लगता है ॥ २१ ॥

आपणानि बहुलानि रोधयेदन्ययन्त्रसदनानि चापि सा ।
इत्यवेक्ष्य मनसा निरन्तरं त्वं बिभेषि सितराज्यशासक ॥२२॥

महासभा बाजार बन्द करा देगी, अन्य मिलोंको भी बन्द करा देगी, वह सब मनसे विचारकर हे वाइसराय ! आप डर रहे हैं ॥ २२ ॥

किंकरेषु नृपवृत्तिभोक्तृषूद्बोधितश्च भविता घृणानलः ।
भूभृतं प्रति तयेति ते मनः शङ्कते प्रतिदिनं भयातुरम् ॥२३॥

सर्कारसे जो पेन्शन लेनेवाले नौकर हैं उनके हृदयमें महासभा राजाके प्रति घृणाका प्रचार करेगी, आपका भयभीत मन ऐसी शङ्का करता है ॥ २३ ॥

सर्वमेतदधिमुम्बयीपुरेस्पष्टयं सविवृति श्रमात्परम् ।
मानसात्तव न याति साध्वसं कोभ्युपाय इह संभवेत्तदा ॥२४॥

यह सब कुछ मैंने विवरणके साथ बम्बईमें श्रमपूर्वक स्पष्टकर दिया है । परन्तु आपके मनमेंसे भय नहीं निकलता है, इसका क्या उपाय किया जाय ॥ २४ ॥

दासतां यदि विहातुमत्र सा भारतीयजनतां समादिशेत् ।
संसदीषदपि नेक्ष्यते तदा राजभक्तिविनिपातनं मया ॥२५॥

यदि वह सभा भारतीयोंको दासतासे मुक्त होनेका उपदेश करे तो मैं समझता हूँ कि जरा भी राजभक्तिको ठेस नहीं लगती है ॥ २५ ॥

त्वामहं यदि मनुष्यपीडनाद्बोधयामि भवितुं पृथक्कदा ।
कां हि रीतिमनुसृत्य गद्यते तत्त्वया वसुमतीश्वरारिता ॥२६॥

यदि मैं आपको कहूँ कि आप मनुष्योंको दुःख पहुँचानेसे अलग हो जायँ तो इसे आप किस प्रकार कह सकते हैं कि यह कथन राजद्रोह है ॥ २६ ॥

तन्महासमितिकार्यवाहकाः सर्व एव सहसा निरागसः।
बन्दिसद्म विनिवेशितास्त्वया प्राणितुं न बहिरत्र ते क्षमाः ॥२७॥

अतः महासमितिके जितने भी कार्यकर्ता हैं, उन सब निरपराधोंको आपने जेलमें रख दिया है। वह बाहर श्वास नहीं ले सकते हैं ॥ २७ ॥

द्रष्टुमात्मजनतां क्षमा न ते श्रोतुमात्मजनताविपत्कथाम्।
वक्तुमेकमपि चाक्षरं बहिः शक्नुवन्ति नहि ते कथंचन ॥२८॥

वह अपनी जनताको देख नहीं सकते हैं, अपनी जनताके दुःखकी बात नहीं सुन सकते हैं और बाहर एक अक्षर भी नहीं बोल सकते हैं ॥ २८ ॥

ईदृशं परवतो विधाय तान्दोषदानमिह तेषु संगतम्।
स्यात्कथं तदवगन्तुमुत्त्वराः शक्नुमो न वयमत्र सर्वथा ॥२९॥

इस प्रकारसे उन्हें परतन्त्र बनाकर उनपर दोषारोपण करना किस प्रकारसे उचित है इसे जाननेकी हमें उत्कण्ठा है परन्तु कुछ भी नहीं जान सकते ॥ २९ ॥

सर्वमेतदविधाय मे सखे न्यायमन्दिर उदारचेतसाम्।
दोषबोधनमिहास्ति सात्त्विकं योग्यकार्यमखिलप्रजाश्रियै ॥३०॥

मेरे मित्र, यह सब छोड़कर न्यायालयमें उन नेताओंका अपराध बताना ही सात्त्विक और योग्य कार्य है। इससे समस्त प्रजाका कल्याण होगा ॥ ३० ॥

निष्प्रमाणकमघं त्वया परं न्यस्तमेषु महदेव दूषणम्।
त्वय्यबाधितमिहावतिष्ठते नात्मनीनमपि तत्त्वया कृतम् ॥३१॥

इन नेताओंपर बिना किसी प्रमाणके दोषारोपण आपने किया है। इससे आपके ऊपर ही अबाधित महान् दोष उपस्थित है। हमारे लिये तो नहीं ही परन्तु अपने लिये भी आपने अच्छा नहीं किया है ॥ ३१ ॥

सर्वमेव परिहातुमुत्सुका भारतीयजनताः स्वतन्त्रताम् ।
लब्धुमुद्यततमा विलोक्य सा मार्गमेतमभिगत्य संस्थिता ॥३२॥

भारतीय जनताको स्वतन्त्रता प्राप्त करनेके लिये सब कुछ छोड़नेको तैयार देखकर महासभाने इस मार्गको ग्रहण किया है ॥ ३२ ॥

राष्ट्रसंसदनुयायिसत्प्रजाशौर्यवीर्यपरिबोधनं परम् ।
कामितं भरतराष्ट्रसंसदा सिद्ध एव स च तन्मनोरथः ॥३३॥

राष्ट्रियमहासभाके अनुयायी प्रतिष्ठित प्रजाजनोंमें शूरता और बलका ज्ञान कराना ही महासभाको इष्ट था। उसका वह मनोरथ सिद्ध हो गया ॥ ३३ ॥

हिंसया विरहितं जनिष्यते जन्यमेतदिति चारु जानता ।
तद्विनाशयतनं विचिन्वता दर्शितं न मतिमत्त्वमात्मनः ॥३४॥

आप जानते ही थे कि यह युद्ध अहिंसक रीतिसे होगा, तो भी आपने महासभाके नाशका यत्न करके अपनी बुद्धिमत्ता नहीं दिखायी है ॥ ३४ ॥

नास्ति राष्ट्रियमहासभाखिलैर्भारतैरभिमतेति वाक्तव ।
व्यर्थतामनुभवत्यनारतं शक्यते न कुत एव साधितुम् ॥३५॥

महासभा सम्पूर्ण भारतीयोंको इष्ट नहीं यह आपका कथन निरन्तर व्यर्थ है। इसको आप किसी प्रकारसे सिद्ध नहीं कर सकते ॥ ३५ ॥

भारतस्य निजतन्त्रताप्तये केवलं समितिरस्ति विघ्नकृत् ।
इत्यपि प्रवचनं सखे च ते सर्वथैव सततं निरर्थकम् ॥३६॥

भारतकी स्वतन्त्रता प्राप्तिके लिये यह महासभा ही विघ्न करनेवाली है यह भी आपका प्रवचन सर्वथा और सदा निरर्थक है ॥ ३६ ॥

भारते नहि पुरा यदाभवत्क्वापि संसदभिधापि संसदः ।
सर्वधर्मिमिलितैः प्रजाजनैः स्थापितेयमभवत्प्रजाश्रियै ॥३७॥

भारतमें जब कोई भी सभा नहीं थी, सभाका नाम भी नहीं था उस

समय सर्वधर्मोंके प्रजाजनोंने संमिलित होकर महासभाकी स्थापना की थी ॥ ३७ ॥

सर्वमानितपदं समाश्रिता येन केन विधिनापमानिता ।
सा भवेदथ विनिन्दितेति ते सर्वथोहितमिवात्र भाति मे ॥३८॥

महासभा सबका आदरपात्र है । वह किसी प्रकारसे अपमानित और निन्दित बने इसी विचारसे, यह आपकी कल्पना ही मुझे प्रतीत होती है ॥ ३८ ॥

सर्वमेव यतनं स्वतन्त्रताप्राप्तये कृतमहो सिताङ्गजैः ।
नाशितं प्रयतनेन सर्वदा नास्ति कस्यचिदपीह निह्नुतम् ॥३९॥

स्वतन्त्रता प्राप्तिके लिये जितने भी यत्न किये गये, अंग्रेजोंने उन्हें प्रयत्नके साथ सदा नष्ट किये हैं, यह बात किसीसे छिपी नहीं है ॥३९॥

निन्दितां च कुटिलां च पद्धतिं धारयद्भिरखिलाङ्ग्लकैर्जनैः ।
यत्न आहित इह प्रणष्टये भारतीयजनतन्त्रजन्मनः ॥४०॥

सभी अंग्रेजोंने निन्दित और कुटिल पद्धतिको स्वीकारकर भारतीय स्वतन्त्रताकी स्थापनाका नाश करनेके लिये प्रयत्न किया है ॥ ४० ॥

तद्धि शासनमथापि ते सिता ब्रूयुरेवमिति नाद्भुतं महत् ।
स्वार्थसाधननिरन्तरारताः सर्वमेव वदितुं क्षमाः सदा ॥४१॥

वही शासन और वह अंग्रेज यदि ऐसा कहें तो कोई बड़े आश्चर्यकी बात नहीं है । स्वार्थसिद्धिमें निरन्तर लगे हुए लोग सब कुछ कह सकते हैं ॥ ४१ ॥

राष्ट्रसंसदिह साब्रवीत्पुनर्मुस्लिमेषु भरतक्ष्माभरम् ।
न्यस्य यान्तु सितदेहका इतो नो तदप्यनुमतं तवैव तु ॥४२॥

राष्ट्रिय महासभाने तो यह भी कहा था कि मुसलमानोंके ऊपर भारतका भार छोड़कर अंग्रेज यहाँसे चले जायँ, यह भी आपको ही तो ठीक नहीं लगा ॥ ४२ ॥

वर्तमानसमरे समापिते भारतं किमपि राष्ट्रशासनम् ।
प्राप्स्यतीति वचनं हि केवलं बालमोहनमिवैव वस्तुतः ॥४३॥

वर्तमान युद्धके समाप्त किये जानेपर भारत कुछ स्वराज्य प्राप्त करेगा, यह वचन तो केवल बालसंमोहन ही है ॥ ४३ ॥

सर्वपक्षजनतानुकूलतां वीक्ष्य कामपि च शासनीं गतिम् ।
भारतं स्वयमुपाश्रयिष्यते तत्त्वशून्यमिदमस्ति ते वचः ॥४४॥

सर्वपक्षीय लोगोंकी अनुकूलताका विचार करके भारत स्वयं शासनकी पद्धतिका आश्रय लेगा, यह भी आपका कथन तत्त्व-शून्य है ॥ ४४ ॥

आप्नुमो न यदि वाञ्छितैकतामद्य तत्कथमसाववाप्यते ।
सम्परायविगमेपि मे सखे संविदं स्पृशति ते वचो नहि ॥४५॥

जिस इष्ट एकताको हम आज नहीं पा रहे हैं वह युद्धकी समाप्तिमें भी कैसे मिलेगी ? हे मित्र, आपकी बात मेरी बुद्धिमें नहीं आती है ॥४५॥

नूतनैरपि जनिर्ग्रहीष्यते पक्षिभिस्त्वदनुगैश्च भारते ।
कर्तुमेव यदि किञ्चिदिष्यते पक्षिभिः कथय किं करिष्यते ॥४६॥

भारतमें आपके अनुकूल दूसरे भी नये पक्ष पैदा होंगे ही । आप यदि कुछ करना चाहें तो यह पक्षी-विभिन्न विचारवाले लोग क्या करेंगे ॥ ४६ ॥

प्रातिनिध्यमिह नास्ति संमतं भारतीयजनतासु तेपि तु ।
पक्षिणोद्य भवतानुमोदिता धिङ्निजार्थपरतन्त्रतां हताम् ॥४७॥

जिनके प्रतिनिधित्वको जनता नहीं चाहती है उनलोगोंको भी तो आपने ही स्वीकृत किया है । हतभागिनी स्वार्थपरायणताको धिक्कार है ॥ ४७ ॥

एवमेव यदि ते क्रमो भवेत्स्वीकरिष्यसि नवान्परानपि ।
सर्व एव मिलिता निरर्थका राष्ट्रसंसदमतीयुरेव ते ॥४८॥

यदि आपका यही क्रम चलता रहे तब तो दूसरे नवोंको भी आप स्वीकार करेंगे। तब यह सब निरर्थक पक्ष मिलकर महासभाका अतिक्रमण करेंगे ॥ ४८ ॥

**भारतीयजनतास्वतन्त्रतानाममात्रमिह जिह्वया सखे।**
**ते रटन्ति हृदयेन न क्वचित्कामयन्त उपकर्तुमादरात् ॥४९॥**

हे मित्र, वह लोग भारतकी स्वतन्त्रताका नाममात्र रटते हैं परन्तु हृदयसे, आदरसे उपकार करनेकी इच्छा नहीं रखते ॥ ४९ ॥

**एवमादिभिरदःकुटुम्बिभिर्भारतं न यदि हास्यसि प्रियम्।**
**श्रेयसा विरहितो भवन्महद्दुःखमेव समवाप्स्यसि प्रिय ॥५०॥**

हे प्रिय, यदि ऐसे कुटुम्बियोंके कारण आप प्रिय भारतको नहीं छोड़ेंगे तो सुखशान्तिसे अलग रहकर आप भारी दुःख पावेंगे ॥ ५० ॥

**यावदत्र सितशासनस्थितिस्तावदेव भरतक्ष्मया नहि।**
**द्रक्ष्यतेत्र निजतन्त्रशासनं न त्वयापि परिरप्स्यते सुखम् ॥५१॥**

जबतक यहाँ अंग्रेजी राज्य रहेगा तबतक भारत स्वतन्त्रताका दर्शन नहीं करेगा तथा आप भी सुखी नहीं रहेंगे ॥ ५१ ॥

**श्वेतवर्ष्महितकाम्यया मया गन्तुमात्मजनिमेदिनीमितः।**
**त्वं हितेन कथितोसि तेन मां बन्दिसद्मनिहितं व्यधापयत् ॥५२॥**

अंग्रेजोंके हितकी दृष्टिसे ही मेरे जैसे हितैषीने आपको अपनी जन्मभूमिमें यहाँसे चले जानेको कहा तो आपने मुझे जेलखानेमें बन्द करा दिया ॥ ५२ ॥

**बन्दितामुपनयन्सखेद्य मां किंचनापि त्वमसाधयो न शम्।**
**हन्त भाग्यविपरीततां दधत्कः शिवाय कुरुतेत्र सत्क्रियाम् ॥५३॥**

मुझे बन्दी बनाकर आपने कुछ भी अच्छा काम नहीं किया। जिसका भाग्य उलट जाता है वह कभी भी कल्याणके लिये सत्कर्म नहीं करता है ॥ ५३ ॥

न त्वदुक्तिरिह वस्तुतां स्पृशत्येतदेव मम चित्तखेदकम् ।
सत्यमेव वचनं हि संसदः शक्यते निगदितुं मया बलात् ॥५४॥

मुझे तो यही दुःख है कि आपका कथन सत्यताका स्पर्श नहीं कर रहा है। मैं बलपूर्वक कह सकता हूँ कि महासभाका कथन सत्य ही है ॥ ५४ ॥

यानि यानि वचनान्युदाहरन्मानरूपकतया सभा स्थितेः ।
व्यञ्जनाय सकलानि तानि भोः संमनुष्व न हि वा निजेच्छया ॥५५॥

सभाने स्थितिको व्यक्त करनेके लिये जिन-जिन वचनोंको उदाहरण-रूपमें रखा है, उनको आप मानें या न मानें, यह इच्छाकी बात है ॥५५॥

मित्रदर्शितपथे न गम्यते राजशक्तिमदिरोपपीडितैः ।
राष्ट्रसंसदिह सर्वमानवश्रेय इच्छति तथा वदत्यतः ॥५६॥

राजशक्तिरूप मदिरासे पीड़ित लोग मित्रके बताये मार्गपर नहीं चलते हैं। राष्ट्रियसभा सर्वमानवोंका हित चाहती है अतः वह वैसा कहती है ॥ ५६ ॥

राज्यवादमभिनाश्य सर्वथा भारतस्य धवलक्षितेस्तथा ।
सर्वथैव जगतोपि सा सभा श्रेय इच्छति सदा मनस्विनी ॥५७॥

उत्तम विचारवाली महासभा साम्राज्यवादका नाश करके भारत, यूरोप, तथा जगत्का भी सर्वथा ही कल्याण चाहती है ॥ ५७ ॥

विद्यते न कथमप्यसत्यता राष्ट्रसंसदुदिते सुभाषिते ।
अन्यदीयवचनं महासभाद्वेषहेतुकमवेहि जल्पितम् ॥५८॥

महासभाने जो सुन्दर वचन कहे हैं उसमें किसी प्रकारसे असत्यता नहीं है। दूसरोंकी बातको तो महासभाके द्वेषसे कही गयी हुई समझें ॥ ५८ ॥

धर्म एव निजदेशरक्षणं युद्धशक्तिनिधिपालनं तथा ।
मामकीन इह भाति सर्वथा धर्म एव समयानुपालनम् ॥५९॥

स्वदेशकी रक्षा तथा युद्धशक्ति और कोषरक्षण यह सब धर्म ही है। मेरा तो प्रतिज्ञाका पालन करना ही सर्वथा धर्म है ॥ ५९ ॥

साध्वसानि निखिलानि सर्वथा पक्षपातमपि संविधूय च।
साम्यरक्षणमनुत्तमोत्तमं कृत्यमर्घ्यमवशिष्यते मम ॥६०॥

सब भयोंको तथा पक्षपातको दूर करके समभावका रक्षण करना ही मेरा सर्वोत्तम तथा पूज्य कार्य बच जाता है ॥ ६० ॥

यत्त्वया प्रवचनं कृतं सखे तत्तु ते समहरच्छिवेतरत्।
पौर्वकालिकवचोयशस्वितां गर्वमप्यथ तव प्रकाशते ॥६१॥

आपने जो खराब भाषण दिया है उसने तो आपके पूर्वके वचनोंकी यशस्विताका संहार कर दिया है तथा वह आपके गर्वको भी प्रकट करता है ॥ ६१ ॥

ब्रह्मदेशजनताविसंकटानेहसि व्यवहृतिं विलोक्य ते।
क्रूरनीतिमपि ते वचो वृथेत्येवमस्ति वदतो न मे व्यथा ॥६२॥

ब्रह्मदेशकी जनताके संकटकालमें आपके व्यवहार और क्रूर नीतिको देखकर यह कहते मुझे दुःख नहीं होता है कि आपका वचन व्यर्थ है ॥ ६२ ॥

ये बलादपि सुसज्जितास्त्वया पक्षिणस्तव च तेषु साम्यधीः।
देशरक्षणमहाव्रतस्पृशो नान्तरं तुदति कस्य धीमतः ॥६३॥

जिन पक्षोंको आपने बलात् तैयार किया है उनमें जो आपकी समान बुद्धि है वह देशरक्षाके महाव्रतधारी किस बुद्धिशालीके मनको पीड़ित नहीं करती है? ॥ ६३ ॥

चैनराशियधराधिरक्षणं हेतुमेव यदि मन्यसे युधः।
ऐकमत्यमिह नूनमस्ति मे धर्म एव दलिताधिरक्षणम् ॥६४॥

यदि चीन और एशियाका रक्षण ही युद्धका कारण मानते हैं तो मेरा इसमें ऐकमत्य है। क्योंकि दलितोंका रक्षण करना ही धर्म है ॥६४॥

प्राप्तुमेतमथ ते मनीषितं प्राप्तुमुज्ज्वलजयं च योधने।
भारतस्य सहयोग इष्यते नात्र किञ्चिदपि विस्मयास्पदम् ॥६५॥

यदि इह परोपकाररूप हेतुको और युद्धमें उज्ज्वल विजयको प्राप्त करना है तो भारतका सहयोग अवश्य प्राप्त करना ही चाहिये। इसमें आश्चर्यकी कोई बात नहीं है ॥ ६५ ॥

यावदस्य नहि सिध्यति क्षणान्नैजतन्त्र्यमखिलार्तिहानिकृत्।
तावदाप्यत इह त्वया सखे तस्य कापि न सती सहायता ॥६६॥

शीघ्र ही भारतको जबतक सर्वदुःख दूर करनेवाली स्वतन्त्रता नहीं मिलती है तबतक आप इससे अच्छी सहायता नहीं पा सकते ॥ ६६ ॥

चीनदेशरशियाप्रदेशयोर्नाशमेतमभिवीक्ष्य पण्डितः।
श्रीजवाहर इतोभिताम्यति श्रेयसि प्रहितमानसस्तयोः ॥६७॥

चीन और रशियाके इस नाशको देखकर इन दोनोंके हितमें जिनका मन लगा हुआ है वह पण्डित जवाहिरलाल नेहरू यहाँ बहुत दुःखी हैं ॥ ६७ ॥

एतदर्थमतिदुःखभासनं यावदस्ति हृदयेद्य मेथ ते।
तावतोप्यधिककारणाकुलः संतपत्ययमहीनमानसे ॥६८॥

इसके लिये आपके और मेरे हृदयमें जितना दुःख भास रहा है उससे भी अधिक दुःखसे व्याकुल होकर वह अपने उदार मनमें संतप्त हो रहे हैं ॥ ६८ ॥

एतदर्तिविनिवृत्तये कलिं प्रत्नमेव नियतं परास्यति।
आधिराज्यगतमूर्जितं बलाद्भूतमेष निखिलं हि विस्मरन् ॥६९॥

यह श्री जवाहिरलालजी इसी दुःखको दूर करनेके लिये भूतकालकी सब बातोंको भुलाकर साम्राज्यमें बलात्कारसे पैदा किये गये नये झगड़ेको नियतरूपसे दूरकर रहे हैं ॥ ६९ ॥

फ़ासिवादत उदीतमुद्धुरं नाज़िवादत उतोत्थितं भयम्।
सेवते स नितरां तुदन्मनाः सर्वथाधिकतरं मदप्यथ ॥७०॥

फ़ासीवाद और नाज़ीवादसे उन्हें मुझसे भी अधिक भय लग रहा है। इससे उनका मन सर्वथा दुःखित है ॥ ७० ॥

**देशयोरथ तयोर्द्वयोरसौ शं न पश्यति विना स्वतन्त्रताम् ।**
**भारतस्य तत आधिराज्यतः सन्यवर्तत युधो विचारवान् ॥७१॥**

भारतकी स्वतन्त्रताके बिना वह इन दोनों देशोंका कल्याण नहीं देख रहे हैं। इसीलिये विचारशील वह साम्राज्यके साथ लड़ाई करनेसे निवृत्त हो गये ॥ ७१ ॥

**मित्रमीदृशमनिन्द्यमानसं त्वं विहाय समवेत्य निन्दितम् ।**
**धीरवीरजनशक्तिमातुदन्पापमेव चितवान्सखे महत् ॥७२॥**

ऐसे विशुद्ध मनवाले मित्रका त्याग करके और निन्दित मित्रको प्राप्त करके धीर-वीर-जनोंकी शक्तिको दबाते हुए, हे मित्र, आपने बहुत बड़ा पाप किया है ॥ ७२ ॥

**वर्तते च तव नीतिरत्र या लोकतापजननी दुरन्तिका ।**
**मादृशस्य सुहृदो वचोभरैस्तां विधूनय सखे शमान्वितः ॥७३॥**

आपकी जो लोगोंको पीड़ित करनेवाली और दुष्ट परिणामवाली नीति है उसे मेरे जैसे मित्रके कहनेसे, शान्त होकर, हे मित्र छोड़ दें ॥ ७३ ॥

**पत्त्रं यतीशस्य सितक्षितीशसंमानितो लिन्लिथगोरवाप्य ।**
**आमोदरत्नाकरमग्नचेताः संप्रैषिषच्चोत्तरमाशु तस्मै ॥७४॥**

अंग्रेज राजाके संमानपात्र श्री लिन्लिथगोने श्री महात्माजीके पत्रको पाकर आनन्दमें डूबते हुए शीघ्र ही उन्हें उत्तर भेजा ॥ ७४ ॥

**शुभेच्छया संभृतमेतदाप्तं पत्त्रं त्वया प्रेरितमुत्तमौजः ।**
**निश्चीय मूल्यं गुरुतामिहास्य समाद्रियेहं हृदयेन चैनत् ॥७५॥**

शुभेच्छासे पूर्ण उत्तम शक्तिवाला आपका पत्र प्राप्त हुआ। इसके मूल्य और गौरवका निश्चय करके मैं हृदयसे इसका आदर करता हूँ ॥ ७५ ॥

विचार्य यो मे सभया विनिर्णयः कृतस्तमुद्दिश्य तवाक्षिपद्वचः ।
मुहुर्मुहुस्तद्धितभावभास्वरं व्यचारयं शान्तमनाः सुचेतसा ॥७६॥

मेरी सभाने विचार करके जो निर्णय किया है उस पर आपने जो आक्षेप किया है उसपर मैंने शान्त मनवाला होकर मनसे विचार किया है ॥ ७६ ॥

न निर्णयेस्मिन्परिवर्तनं क्षमं न राजनीतेः परिशोधनं वरम् ।
अतो विधातुं प्रतिकूलमाहितान्न निर्णयाच्छक्यमिहास्ति साम्प्रतम् ॥७७॥

न तो इस मेरी सभाके निर्णयमें ही परिवर्तन शक्य है और न राजनीतिका परिशोधन ही उत्तम है । अतः जो निर्णय हो चुका है उसके प्रतिकूल करनेके लिये इस समय योग्य नहीं है ॥ ७७ ॥

इति लिनलिथगोपत्त्रमाप्यैवत
न्मुनिवरमुखमुद्रा गभीराभवत् ।
दुरितपथनिषण्णा गतायुर्नरा,
हृदि न हि दधते सत्यवाचां वचः ॥ ७८ ॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
द्वाविंशः सर्गः

लिन्लिथगोके इस पत्रको पाकर ही श्री महात्माजीकी मुखमुद्रा गंभीर बन गयी । सत्य है पापके मार्गमें पड़े हुए गतायु लोग सत्यवादियोंके वचनको हृदयमें स्थान नहीं देते ॥ ७८ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
द्वाविंशः सर्गः



# त्रयोविंशः सर्गः

एकमासात्परं भूयः पत्रं लिन्‌लिथगों प्रति ।
प्राहिणोच्छ्रीमहात्मासौ कारायां बन्दितां भजन् ॥१॥

श्रीमहात्माजीने कैदीकी दशामें ही रहते हुए एक मासके पश्चात् पुनः श्री लिन्‌लिथगोके पास एक पत्र भेजा ॥ १ ॥

राष्ट्रगोष्ठीं समुद्दिश्य नीतिर्व्यवहृतेस्तव ।
निन्द्यैव त्वत्सभासभ्यैरन्यैश्चापि समर्थिता ॥२॥

महासभाके प्रति आपके व्यवहारकी नीतिका आपकी सभाके सभ्योंने तथा अन्योंने जो समर्थन किया है वह निन्दनीय ही है ॥ २ ॥

पत्रं लेखिष्यमाणं मे प्रतीक्ष्येत त्वया यदि ।
नासौ देशो भजेताद्य दावानलनिवेशनम् ॥३॥

जो पत्र मैं आपको लिखनेवाला था उसकी यदि आपने प्रतीक्षाकी होती तो देशमें आज यह दावानल न सुलगता ॥ ३ ॥

संनद्धाः सन्ति बहुधा विरुद्धा बहवो नराः ।
महासभाप्रतिष्ठाया नाशायेति प्रवेद्म्यहम् ॥४॥

महासभाकी प्रतिष्ठाको बिगाड़नेकेलिये बहुतसे लोग तैयार हैं, यह मैं अच्छी तरहसे जानता हूँ ॥ ४ ॥

महासभा तथाप्यस्ति नैव हिंसानुगामिनी ।
अद्याप्यहमिमां वाणीं कल्याणीं वक्तुमुत्सहे ॥५॥

आज भी मैं यह कह सकता हूँ कि महासभा हिंसाका पक्षपात करनेवाली नहीं है ॥ ५ ॥

सर्वेषां देशनेतॄणां त्वत्कृतैर्ग्रहणादिभिः ।
लोकाः शोकाकुलाः सर्वे क्रोधबोधमवापिताः ॥६॥

देशके सभी नेताओंको आपने पकड़ लिया इसीसे शोकाकुल होकर प्रजा क्रोधसे भर गयी है ॥ ६ ॥

निराधारस्य देशस्य भारतस्याद्य या क्षतिः।
दुःखदा समभूत्तत्र हेतुर्नीतिस्तवाकुला ॥७॥

आज निराधार भारतवर्षकी दुःखद क्षति हुई है उसमें आपकी डाँवाडोल नीति ही कारण है ॥ ७ ॥

राष्ट्रसंसद्विनाशेऽस्मिन्नापराध्यति कर्हिचित्।
तवैव सकलो नूनमपराध इति स्फुटम् ॥८॥

इस विनाशमें महासभाका कोई भी दोष नहीं है। इसमें सब अपराध केवल आपका है ॥ ८ ॥

अद्याप्यधिषणं वर्त्म जिहाससि सखे यदि।
कृत्स्नान्महासभायास्त्वं नेतॄन्बन्धाद्विमोचय ॥९॥

आज भी यदि आप मूर्खतापूर्ण मार्गको छोड़ देना चाहें तो महासभाके सब नेताओंको जेलमेंसे मुक्त कर दें ॥ ९ ॥

दुर्दम्यां दुष्टनीतिं ते सर्वथैवोपसंहर।
मनो निधेहि नियतं शान्तिशान्ताङ्घ्रिपूजने ॥१०॥

अपनी अदम्य दुष्टनीतिका त्याग करें और शान्तिस्थापनमें मन लगावें ॥ १० ॥

हिंसामाश्रित्य यत्किञ्चिदनुतिष्ठेत्प्रजाजनः।
सम्पन्नः साधनैः सर्वैस्तन्निवारयितुं क्षमः ॥११॥

यदि प्रजा हिंसाका आश्रय लेकर कुछ करे तो सर्वसाधन सम्पन्न आप उसे रोक सकनेमें समर्थ हैं ॥ ११ ॥

सापराधाश्च ये सन्ति ये च सन्ति निरागसः।
सर्वेषां समभावेन दण्डनेऽनीतिरेव ते ॥१२॥

निरपराध और सापराध दोनोंको ही समानरूपसे दण्ड देनेमें अवश्य आपकी अनीति ही है ॥ १२ ॥

यस्या निषेवणे रोगो रोगिणामदयं हि हृत् ।
निष्पिनष्टि न सा ज्ञेया साधुमत्ता महौषधेः ॥१३॥

जिस ओषधिके सेवन करनेसे रोग रोगीके हृदयको निर्दयतापूर्वक तोड़ दे तो वह औषधका अच्छापन नहीं कहा जायगा ॥ १३ ॥

इदानीमेव संवादपत्त्राणामुपलब्धये ।
प्रबन्धो विहितस्तेन समर्थोऽस्मीति लेखितुम् ॥१४॥

अभी ही मुझे समाचारपत्र मिलनेका प्रबन्ध हुआ है अतः लिखनेमें समर्थ हो सका हूँ ॥ १४ ॥

प्रभावः पतितो वृत्तपत्त्राणां वाचनेन यः ।
मयि व्यक्तः स कर्तव्यस्तुभ्यं स्पष्टस्वरूपभाक् ॥१५॥

समाचारपत्रोंके पढ़नेसे मुझपर जो प्रभाव पड़ा है उसे मैं आपको स्पष्ट बता देना चाहता हूँ ॥ १५ ॥

मन्यसे चेन्न लेखाय पत्त्राणामीदृशां मम ।
अधिकारं विचेष्यामि नागः परमतः पुनः ॥१६॥

यदि ऐसे पत्रोंको लिखनेके लिये मुझे अधिकार नहीं है, आप ऐसा मानते हों तो अबसे मैं यह भूल नहीं करूँगा ॥ १६ ॥

भूयो भूयः कृपानाथस्तृतीयं प्रैषिषद्दलम् ।
लिन्लिथगोसमीपेऽसौ क्वथितो दुःखवह्निना ॥१७॥

कृपासागर श्रीमहात्माजीने दुःखरूप अग्निसे उबलकर फिर फिरसे श्री लिन् लिथगोको पत्र लिखा ॥ १७ ॥

वैयक्तिकमिदं पत्त्रं ज्ञायतां साधु साधुना ।
अद्यावधि त्वया साकं कलिरासीदुपेक्षितः ॥१८॥

आप इस मेरे पत्रको व्यक्तिगत पत्र समझें। अभीतक आपके साथ झगड़ा करनेकी मेरी इच्छा नहीं थी ॥ १८ ॥

**शरदेषापि सन्मित्त्र प्रातः श्वः संसरिष्यति।**
**अतो मे हृदयोद्गारस्तवाग्रे संप्रकाश्यते ॥१९॥**

कल्ह प्रातः काल यह वर्ष भी पूरा हो जायगा। अतः मेरे हृदयके उद्गारको मैं आपपर प्रकाशित करना चाहता हूँ ॥ १९ ॥

**आसीदियं मतिस्तात ममासंशयशालिनी।**
**आवां द्वौ निर्विकारौ स्वः सुहृदाविति वस्तुतः ॥२०॥**

प्रथम मुझे निस्सन्देह यह ख्याल था कि मैं और आप दोनों ही निर्विकार मित्र हैं ॥ २० ॥

**अद्यापि रोचते मह्यं मित्रभावस्त्वया सह।**
**कथमङ्गीकृतं त्याज्यं सता विशदबुद्धिना ॥२१॥**

आज भी आपके साथ मित्रता मुझे पसन्द है। एक सज्जन, जिसका अङ्गीकार कर लिया गया हो, उसे कैसे छोड़ सकता है ? ॥ २१ ॥

**मनः सन्देग्धि मे किन्तु निग्रहानन्तरं मम।**
**तिष्ठेत्त्वयि तथा भावो मामुद्दिश्य न वा पुनः ॥२२॥**

मेरे पकड़े जानेके पश्चात् मेरे मनमें सन्देह होता है कि मेरे प्रति आपका वह भाव अब होगा या नहीं ॥ २२ ॥

**यावन्नैकट्यमापन्नः सखे तव सुखाकरम्।**
**तावदन्यस्य कस्यापि त्वत्पदं श्रयतो न च ॥२३॥**

मैं जितना आपके निकट आ सका हूँ उतना किसी भी वाइसरायके निकट नहीं आया था ॥ २३ ॥

**त्वदाज्ञयैव संजातो निग्रहः साग्रहो मम।**
**ततः परं स्वमन्तव्यपत्रस्यापि प्रकाशनम् ॥२४॥**

आपकी आज्ञासे ही मैं पकड़ा गया हूँ। आपकी आज्ञासे ही वह मन्तव्यपत्र प्रकाशित किया गया है ॥ २४ ॥

मम संमेलनं वाञ्छन्राजगोपाल आत्मवान्।
स निराशीकृतो येन तच्च त्वद्दत्तमुत्तरम् ॥२५॥

श्रीराजगोपालाचार्यजी मुझसे मिलनेके लिये आये थे, परन्तु जिस कारणसे वह निराश हुए वह तो आपका दिया हुआ उत्तर था ॥ २५ ॥

सर्वथा यत्त्वया दत्तमुत्तरं तत्सहेतुकम्।
इति साधयितुं सम्यगुपन्यस्ताश्च हेतवः ॥२६॥

आपने जो उन्हें उत्तर दिया था वह सहेतुक था, इसे सिद्ध करनेके लिये आपने कारणोंका वर्णन किया था ॥ २६ ॥

एमरिणा विचारेण विनैकाक्षेपराशयः।
कारां निषेवमाणाय मह्यं ते ते समर्पिताः ॥२७॥

जब कि मैं जेलमें हूँ ऐसे समयमें एमरीने बिना विचारे ही मुझपर आरोप लगाये हैं ॥ २७ ॥

एतत्सर्वं तथा भूयः परं तत्तुल्यमेव वा।
दृष्ट्वा विशङ्कते चित्तं पूर्वविश्वासभूमिकाम् ॥२८॥

इन सबको, तथा ऐसी ही अन्य वस्तुओंको देखकर शङ्का होती है कि मुझपर आपका पूर्ववत् विश्वास है या नहीं ? ॥ २८ ॥

अपरेषां महासंसत्सदस्यानां च विद्यते।
तत्र नामग्रहोऽसौ तु कस्मा अपि गुणाय नो ॥२९॥

महासभाके दूसरे सदस्योंके नाम भी उस मन्तव्यपत्रमें लिये गये हैं परन्तु उससे तो कोई लाभ नहीं है ॥ २९ ॥

बहूनामपराधानां गणेनैव ललाटकम्।
त्वया तिलकितं शुभ्रं सभाया निर्विकिल्बिषम् ॥३०॥

आपने महासभाके सिरपर अनेक अपराध लगाये हैं ॥ ३० ॥

सर्वापराधसंसिद्धिसाधनानां प्रवर्तकः।
त्वया निर्धारितस्तत्राऽहमित्येवं प्रतीयते ॥३१॥

सब अपराधोंका मुख्यकारण आपने मुझे ही समझा है, ऐसा मुझे मालूम होता है ॥ ३१ ॥

न चेदस्तमितन्तेऽद्य मित्रभावो मयि स्थितः।
भारतीयप्रजापीडारम्भणात्प्राक्स्मृतो न किम् ॥३२॥

यदि मेरे साथका आपका मित्र भाव अस्त नहीं हुआ है तो आपने प्रजाको पीड़ित करनेके पहले मुझे क्यों नहीं याद किया ? ॥ ३२ ॥

क्रूरं क्रूरतरं तात प्रजा दमयता त्वया।
आहूतो न कुतो दिल्ल्यां शङ्काशङ्कुविकृष्टये ॥३३॥

क्रूरातिक्रूररीतिसे प्रजाका दमन करते समय आपने अपनी शङ्काकी निवृत्तिकेलिये मुझे दिल्लीमें क्यों नहीं बुलाया ? ॥ ३३ ॥

आधारीकृत्य यं वृत्तराशिं प्रकृतिधर्षणम्।
त्वया प्रारम्भि तेषां किं सत्यत्वं न परीक्षितम् ॥३४॥

जिन समाचारोंके आधारपर आपने प्रजाका दमन शुरू किया उसकी सत्यताकी आपने जाँच क्यों नहीं की ? ॥ ३४ ॥

राजकर्मकृतां नृणां वार्ता मद्विषयान्विताम्।
सत्याद्दूरतराद्दूरे स्थितां मन्ये निरङ्कुशाम् ॥३५॥

मेरे विषयमें राजकर्मचारियोंने जो बात की है वह सत्यसे बहुत दूर है, ऐसा मैं मानता हूँ ॥ ३५ ॥

तेषां कुकल्पनाकल्पकल्पितोऽस्मि निरन्तरम्।
परापराधवृक्षाणां बीजभूतः सनातनः ॥३६॥

जिस किसीने भी जो अपराध किये हैं उनका बीज मैं ही माना गया हूँ ॥ ३६ ॥

उरोदारसमर्थां तां चिमुरस्यातिनिर्घृणाम् ।
भणसाली निजान्प्राणान्कथां श्रुत्वा जिहासति ॥३७॥

छातीको फाड़ डाले ऐसी चिमुरगाँवकी निर्दयकथाको सुनकर प्रोफेसर भणसाली मरनेको तैयार हो गये हैं ॥ ३७ ॥

पञ्चसत्रप्रयोगेण साधुवादेन चाधुना ।
अभिनन्द्यो मया नासौ कारागाराधिवासिना ॥३८॥

मैं जेलमें बन्द हूँ अतः पत्रके द्वारा भी उन्हें मैं धन्यवाद और अभिनन्दन नहीं भेज सकता हूँ ॥ ३८ ॥

त्वत्प्रपञ्चमहामञ्चस्थितच्छुरिकयाऽनया ।
छिन्नगात्राणि वृत्तान्तपत्राणि नितरां लभे ॥३९॥

मुझे जो समाचारपत्र मिलते हैं, उनपर आपकी छुरी तो फिरी हुई होती ही है । पूरे समाचार मिलते ही नहीं हैं ॥ ३९ ॥

सामग्री न समग्रा मे सम्मुखस्था विराजते ।
देशे केन च किं कुत्र क्रियते वेद्मि तच्च न ॥४०॥

मेरे सामने पूरी सामग्री है नहीं । अतः देशमें कौन कहाँ क्या कर रहा है, मैं नहीं जानता हूँ ॥ ४० ॥

यैः कैरपि कृता हिंसा येन केनापि हेतुना ।
महासभाशिरस्येव निर्विचारं निपात्यते ॥४१॥

जिस किसीने भी जिस किसी भी उद्देश्यसे कोई हिंसाकी हो तो उसे आप महासभाके ही सिरपर लादते हैं ॥ ४१ ॥

एषा प्रवर्तिता हिंसा यैः कैरपि जनैरिह ।
मया तत्त्वानभिज्ञेन दूष्येत्याशास्यते त्वया ॥४२॥

इस प्रकारसे किसीने कोई हिंसाकी हो तो मैं उस विषयमें कुछ भी नहीं जानता होऊँ तो भी उसकी निन्दा करूँ, यह आप मुझसे चाहते हैं ॥ ४२ ॥

इतो बहुतरं शक्यं लेखितुं न तु लिख्यते।
मदन्तर्दुःखसंवेगकथाग्रन्थेन किं तव ॥४३॥

मुझे तो इससे बहुत अधिक लिखना है; परन्तु नहीं लिखता हूँ। मेरे दुःखकी बातसे आपको क्या ? ॥ ४३ ॥

पर्याप्तमाप्तमेवात्र लेखितव्यमलिख्यत।
पूरणीया त्वया तात विवृतिश्चेदपेक्षिता ॥४४॥

जितना मुझे तथ्य लिखना था, वह लिख दिया है। बाकी रहा हो तो उसे आप पूरा कर लेंगे ॥ ४४ ॥

हलाहलविषाभिख्ये हिंसाऽसत्ये असत्पथम्।
अदृश्येतां नयन्ती नृन्प्रत्येककृतिसन्तते ॥४५॥

हलाहल विष समान प्रत्येक कार्यमें व्याप्त असत्य और अहिंसा मनुष्योंको असत्पथमें लेती जा रही दीख पड़ रही है ॥ ४५ ॥

ते धिक्कृत्ये इमे पापे पृथक्कृत्य मनुष्यतः।
सत्याहिंसादिवानाथप्रकाशैर्भातु भारतम् ॥४६॥

धिक्कारने योग्य इन दोनों पापोंको मनुष्यसे अलग करके सत्य और हिंसारूप सूर्यके प्रकाशसे भारत प्रकाशित बने, यह मेरी इच्छा है ॥ ४६ ॥

अभिलाषविलासोऽयं जीवनोज्जीवनो मम।
षट्त्रिंशच्छरदात्पूर्वं मयि साधु व्यवस्थितः ॥४७॥

मेरे जीवनका भी जीवन यह अभिलाष ३६ वर्षोंसे भी पूर्व मुझमें स्थित है ॥ ४७ ॥

अष्टाविंशतिवर्षात्प्रागाफ्रिकातो न्यवर्तिषि।
सहैवैतेन कार्येणावार्येणात्र प्रियंवद ॥४८॥

२८ वर्ष पूर्व जब मैं अफ्रिकासे लौटा तो सत्य और अहिंसाके प्रचारके भावके साथ ही लौटा था ॥ ४८ ॥

सत्याग्रहं विजानाति न कदाचित्पराजयम् ।
विजिष्णोः प्रभविष्णोश्च कोऽस्तु शक्तः पराभवे ॥४९॥

सत्याग्रह कभी पराजयको जानता ही नहीं है। जो सदा विजयशील और प्रतापी है उसको कौन हरा सकता है ? ॥ ४९ ॥

एतयोः सम्प्रसाराय साधनानि पुरो मम ।
सन्त्यनेकानि तेष्वेकः कारावासोऽपि विद्यते ॥५०॥

इन दोनों धर्मोंके प्रचारकेलिये मेरे पास अनेक साधन हैं। उनमेंसे जेलवास भी एक है ॥ ५० ॥

यद्यप्यसावहिंसायाः सत्यस्य च समृद्धये ।
साधनं निश्चितं किन्तु मर्यादा तस्य विद्यते ॥५१॥

यद्यपि कारागार अहिंसा और सत्यकी वृद्धिके लिये निश्चित साधन है परन्तु उसकी मर्यादा है ॥ ५१ ॥

अहं निगृह्य बलवच्छक्तिना सहसा त्वया ।
अस्मिन्नस्मि विनिक्षिप्तः प्रासादे सम्प्रसादने ॥५२॥

आपके पास पूर्ण शक्ति है। अतः आपने मुझे पकड़कर इस उत्तम महलमें रख दिया है ॥ ५२ ॥

सर्वसाधनसम्पन्ने प्रासादेऽस्मिन्वसन्नहम् ।
प्राप्तानि साधनान्यत्र समुपायुञ्जि कार्यतः ॥५३॥

इस महलमें सब साधन उपस्थित हैं। इनमेंसे मुझे जिनका प्रयोजन है उन्हींका उपयोग करता हूँ ॥ ५३ ॥

कर्तव्यमिति निश्चित्य निरविक्षं महालयम् ।
एनं भोगधिया नैव सर्वभोगविवाजतः ॥५४॥

इस महलमें मैं भोगकी इच्छासे नहीं आया हूँ उसका तो मैंने त्याग किया है। केवल कर्तव्य समझ के आया हूँ ॥ ५४ ॥

कदापि स्यात्प्रविदिता मम निर्दोषता सती।
तवेत्याशां पुरस्कृत्य प्रासादोऽयमसेव्यत ॥५५॥

कभी भी तो आपको मेरी निर्दोषताका भान होगा, इसी आशासे इस महलमें पड़ा हुआ हूँ ॥ ५५ ॥

एतादृशे महादेहे गेहे वासाय कल्पितः।
षण्मासा अवधिस्तात कयाप्यनुमया मया ॥५६॥

इस विशाल प्रासादमें अधिकसे अधिक ६ मासका निवास मैंने निश्चित किया है ॥ ५६ ॥

एष सत्याग्रहो धर्मो मयाऽबोधि विचारतः।
उपाया बहवः सन्ति तस्य धर्मस्य पालने ॥५७॥

मैंने विचार करनेपर इस सत्याग्रहको धर्म समझा है। उस धर्मके पालनकेलिये बहुतसे मार्ग हैं ॥ ५७ ॥

सर्वाहारपरित्यागपूर्वकः समुपोषणैः।
देहस्य दमनं मुख्य उपायः परिकल्पितः ॥५८॥

सब प्रकारके आहारको त्यागकरके उपवास द्वारा देहदमन करना इस धर्मके पालनके लिये मुख्य उपाय है ॥ ५८ ॥

उपाया अपरे सम्यग्यावन्नैव परीक्षिताः।
ग्राह्या नेति सदा स्पष्टं निषेधति सदाग्रहः ॥५९॥

दूसरे भी उपाय हैं। परन्तु जब तक उनकी भली प्रकारसे परीक्षा न की गयी हो तब तक वह ग्राह्य नहीं हैं, ऐसा सत्याग्रह निषेध करता है ॥ ५९ ॥

यावदुत्सारणं शक्यमस्य तावज्जिघृक्षितः।
न कदापि भवेदेष एष मेऽस्ति विनिश्चयः ॥६०॥

जब तक यह उपवास टाला जा सके तब तक इसका ग्रहण नहीं करना चाहिये, यह मेरा निश्चय है ॥ ६० ॥

कनीयस्यपि काचिन्मे यदि सम्पादिता त्रुटिः ।
प्रत्यक्षिता भवेद्भ्रातः प्रायश्चित्तं करिष्यते ॥६१॥

यदि कोई छोटी सी भूल हो जाय और उसे मैं जान जाऊँ तो उसके लिये प्रायश्चित करूँगा ॥ ६१ ॥

एक एवायमद्यास्ति पन्थाः पूर्णः प्रकाशितः ।
उपवासाभिधोपायसंग्रहप्रतिसारणे ॥६२॥

इस उपवासको ग्रहण करना अथवा हटाना, इसकेलिये केवल एक ही मार्ग दीख रहा है ॥ ६२ ॥

एतत्सर्वं समाहर्तुं मामाह्वय तवान्तिके ।
सम्प्रेषय जनं कञ्चिद्विज्ञं वा सन्निधौ मम ॥६३॥

इन सबका निर्णय करनेकेलिये या तो आप मुझे अपने पास बुलावें अथवा किसी समझदार को मेरे पास भेजें ॥ ६३ ॥

शुभाशंसा त्वयि स्याच्चेन्मार्गाणां स्यादनूनता ।
नूतनं वर्षमेतन्नो योजयेन्नवसम्पदा ॥६४॥

आप की यदि शुभेच्छा होगी तो मार्ग की कमी नहीं है। यह नूतन वर्ष अपने को नवीन संपत्ति दे ॥ ६४ ॥

आशासे मेऽस्य पत्रस्य सत्वरं च त्वयोत्तरम् ।
योग्यं प्रहेष्यते येन सर्वेषां संभवेच्छिवम् ॥६५॥

मैं आशा करता हूँ कि आप मेरे इस पत्रका शीघ्र ही उत्तर देंगे जिससे सबका हित हो ॥ ६५ ॥

इति पत्रं यमीशस्य लिन्लिथगोमहाशयः ।
अधिगत्य प्रसन्नात्मा पत्रमेतद्व्यसर्जयत् ॥६६॥

श्रीमहात्माजी के इस पत्र को पाकर लिन्लिथगो महाशय ने प्रसन्न होकर यह पत्र भेजा ॥ ६६ ॥

हार्दसत्सूत्रसद्ग्रन्थिग्रथितं दलमद्य ते।
वैयक्तिकं परं स्पष्टमिदानीमाप्नवं सखे ॥६७॥

मित्र, हृदयके सच्चे सूत्रसे सच्ची गाँठवाला आपका व्यक्तिगत पत्र, जो बहुत स्पष्ट है, मुझे आज मिला है ॥ ६७ ॥

अस्मिन्पत्रे यदाभाति हृदयव्यक्तिरञ्जसा।
विदग्धं वस्तुवैशद्ये मह्यमेतदरोचत ॥६८॥

किसी वस्तुको विशद बनानेकेलिये इस पत्रमें जितना स्पष्टरूपसे हृदय खोलागया है, वह मुझे पसन्द आया है ॥ ६८ ॥

वैयक्तिकं भवेदेव पत्रस्यैतस्य चोत्तरम्।
मामकीनं तथा स्पष्टं रोचेत तव चेतसे ॥६९॥

इस पत्र का उत्तर भी वैयक्तिक ही होगा शायद वह आप को पसन्द पड़े ॥ ६९ ॥

त्वदीयं पत्रमासाद्य सम्प्रसादाभिसम्पदम्।
अन्वभूवं परां तात हृदयं शान्तिमन्वभूत् ॥७०॥

खूब स्पष्टभाववाला आप का पत्र पाकर मेरे हृदय में खूब प्रसन्नता और अपूर्व शान्ति हुई है ॥ ७० ॥

सम्बन्ध आवयोर्योऽस्ति सम्बद्धः प्रेमतन्तुभिः।
तं पुरस्कृत्य विस्पष्टं विवृणोमि मदान्तरम् ॥७१॥

हम दोनोंका जो प्रेमतन्तुसे जुड़ा हुआ सम्बन्ध है उसीको सामने रखकर मैं अपने हृदयके भावको स्पष्ट करता हूँ ॥ ७१ ॥

अगस्ते स्वीकृता नीतिः सर्वथा राष्ट्रसंसदा।
अद्यापि नितरां तात क्वथते हृदयं मम ॥७२॥

हे तात, अगस्त मासमें महासभाने जिस नीतिका स्वीकार किया है उससे आज भी मेरा हृदय उबल रहा है ॥ ७२ ॥

निखिले भारते प्राणहिंसनं कृपणं तया।
नीत्यैव हेतुना देशे प्रसृतं हृदयव्यथम् ॥७३॥

इसी नीति के कारण समस्त भारत में मारकाट फैली हुई है ॥७३॥

रेलतारगृहादीनां त्रोटनस्फोटनादयः ।
दुन्वन्ति हृदयं केषां नापराधा विसर्पिणः ॥७४॥

स्टेशनों और तारघरों को तोड़ने फोड़ने आदिके फैलते हुए अपराध किसके मन को दुःखित नहीं कर रहे हैं ? ॥ ७४ ॥

अपराधांस्तिरस्कर्तुं धिक्कर्तुमपराधिनः ।
न त्वया नापि सभया शब्द एकोऽपि शब्दितः ॥७५॥

अपराधों और अपराधियों को धिक्कारनेकेलिये न तो आपने ही एक शब्द कहा है और न महासभाने ही ॥ ७५ ॥

त्वत्स्नेहसलिलस्निग्धेऽभिन्ने च हृदये मम।
इदमाचरणं ते नो कियतीं सृजति व्यथाम् ॥७६॥

मेरे हृदयमें आपके लिये अत्यन्त प्रेम है। मेरा हृदय आपके हृदयसे अभिन्न होनेसे आपका यह व्यवहार मेरे हृदयमें कितनी व्यथा पैदा करता होगा ? ॥ ७६ ॥

अवाप्यत न वृत्तान्तपत्रमेकमपि त्वया।
बन्दीभूतेन तातेन वसता पुण्यपत्तने ॥७७॥

आपको पूनामें कैदी होनेके कारण कोई समाचारपत्र नहीं मिलता था ॥ ७७ ॥

अनभिज्ञोऽसि सर्वेषां पापानां भूयसामिह।
प्रत्यहं जायमानानामित्यमन्ये तदा दृढम् ॥७८॥

यहाँ जो रात दिन बड़े बड़े अपराध हो रहे हैं इससे आप अनभिज्ञ हैं; यह मैं समझता था ॥ ७८ ॥

यानि यानि च वृत्तान्तपत्राण्यैप्सस्त्वमादरात् ।
तानि त्वयीह वसति सम्प्रेष्यन्ते निरन्तरम् ॥७९॥

जिन जिन पत्रोंकी आपने इच्छा प्रकट की है उन्हें आदरके साथ आपके पास निरन्तर हम भेज रहे हैं ॥ ७९ ॥

कार्यकर्तृसमित्या ये सदस्या राष्ट्रसंसदः ।
तेषां पार्श्वेपि तान्येव सम्प्रेष्यन्ते मदाज्ञया ॥८०॥

महासभाके कार्यकारिणीसमितिके जो सदस्य हैं उनके पास भी यही सब पत्र मेरी आज्ञासे भेजे जा रहे हैं ॥ ८० ॥

भारतीयैः कृतैः कृत्यैस्तैस्तैः क्रोधवशं गतैः ।
विक्षुब्धं हृदयं ते स्यादस्माकमिव कोमलम् ॥८१॥

भारतवासियोंने क्रोधमें आकर जो जो कार्य किये हैं, उनसे हमारे समान ही आप का कोमल हृदय भी क्षुब्ध बनेगा ॥ ८१ ॥

दुःखसन्तापसन्तप्तहृदयस्त्वं प्रजाः समाः ।
निषेधेः कर्मणो नूनमस्मादिति मतं मम ॥८२॥

मेरा मत है कि आप दुःखित हृदय से समस्त प्रजाको इस कार्य से रोकें ॥ ८२ ॥

अवश्यं व्याकुलीभूय निन्दिष्यसि कृतीरिमाः ।
इत्याशालतया नष्टं वीक्ष्य मौनावलम्बनम् ॥८३॥

मुझे आशा थी कि आप व्याकुल होकर इन कार्योंकी निन्दा करेंगे । परन्तु आपका मौन देखकर मेरी आशा टूट गयी ॥ ८३ ॥

राजकीयमनुष्याणां निदयं प्राणपीडनम् ।
जीवतां दहनं तेषां व्यथयत्येव मे मनः ॥८४॥

सरकारी आदमियोंको निर्दयताके साथ मार डालना, जीते जला देना यह सब मेरे मनको पीड़ित कर रहे हैं ॥ ८४ ॥

राजकीयगृहध्वंसो धूमयानादिभञ्जनम् ।
यूनां विद्यार्थिनां मार्गे प्रतिकूले विधावनम् ॥८५॥

सर्कारी मकानों को नष्ट करना, रेलगाड़ी आदि का तोड़ना, प्रतिकूल मार्ग में जवान विद्यार्थियों का दौड़ना ॥ ८५ ॥

एताभिर्घटनाभिर्या मानक्षतिरसृज्यत ।
साम्राज्यस्य सभायाश्च तां स्मरन्विकलोऽस्म्यहम् ॥८६॥

इन सब घटनाओंसे साम्राज्य और सभा दोनोंकी जो मानहानि हुई है उसकी याद करके मैं व्याकुल हो गया हूँ ॥ ८६ ॥

वृत्तपत्रेषु वृत्तान्तजातं यद्यत्प्रकाशितम् ।
सर्वं तत्सत्यमित्येव प्रत्ययाय ब्रवीमि ते ॥८७॥

समाचारपत्रोंमें जो जो समाचार प्रकाशित हुए हैं वह सब सत्य ही हैं, इसपर विश्वास करनेको मैं आपसे कहता हूँ ॥ ८७ ॥

सभासंचालिते युद्धे सभातदनुगामिषु ।
नापरोक्षः प्रभावस्ते मम स्वल्पोपि कर्हिचित् ॥८८॥

महासभा द्वारा संचालित इस युद्धपर, महासभापर और उसके अनुयायियोंपर आप का जो प्रभाव है वह मुझसे जरा भी छिपा हुआ नहीं है ॥ ८८ ॥

अस्मिन्नुपद्रवेऽभद्रे यस्तिष्ठति भरस्त्वयि ।
न कथञ्चित्त्वया स्वात्मा रक्षणीयस्ततोऽधुना ॥८९॥

इस उपद्रवके होनेपर आपके ऊपर जो भार है उससे आप अपनेको किसी तरह भी बचा नहीं सकेंगे ॥ ८९ ॥

सर्व एव भरस्तिष्ठेदुपक्रमविधातृषु ।
परिणामस्तु सकलैरुपक्रान्तस्य भुज्यते ॥९०॥

आरम्भ करनेवालोंपर ही सब भार होता है। जब आरम्भ हो जाता है तो उसका परिणाम सब को भोगना पड़ता है॥ ९० ॥

गृहीताद्वर्त्मनः क्लिष्टात्त्वं च प्रत्याविवृत्ससे।
इत्येवं मे विचारेण त्वत्पत्रार्थः प्रतीयते ॥९१॥

आप अपने लिये हुए मार्ग से अब लौटना चाहते हैं, मेरे विचार से आपके पत्रका यही अर्थ मालूम होता है ॥ ९१ ॥

अगस्ते सभया तात नीत्या निर्णीतया सह।
विचिच्छित्ससि सम्बन्धमिति स्पष्टं विभाति मे ॥९२॥

अगस्त मासमें निर्णीत महासभाकी नीतिसे आप अपना सम्बन्ध तोड़ना चाहते हैं ऐसा मुझे स्पष्ट प्रतीत हो रहा है ॥ ९२ ॥

एवमेवास्तु पत्रार्थो परिज्ञातो मया यदि।
पत्रद्वारा विबोध्योऽहं त्वया केवलमोमिति ॥९३॥

जो मैंने समझा है, यदि यही आपके पत्रका अर्थ हो तो आप पत्र-द्वारा उसकी सूचना केवल "हाँ" से दें ॥ ९३ ॥

अविलम्बं मया कार्या पुनरत्र विचारणा।
अस्मिन्नावश्यके कार्ये नात्र सन्देहभूमिका ॥९४॥

तब इस आवश्यक कार्यमें मैं फिरसे विचार करूँगा, इसमें सन्देह-को स्थान नहीं है ॥ ९४ ॥

मया निर्धारिते तात त्वत्पत्रार्थे यदि भ्रमः।
सन्तिष्ठते तदाशु त्वं कुत्र कश्चेति निर्दिशेः ॥९५॥

आपके पत्रका जो अर्थ मैंने समझा है उसमें यदि भ्रम है तो आप मुझे बतावें कि वह भ्रम क्या और कहाँ है ? ॥ ९५ ॥

मया कारयितुं यत्त्वमाकाङ्क्षसि वदाद्य तत्।
अतिस्पष्टे मयि स्पष्टं वक्तुं किञ्चिन्न संकुचेः ॥९६॥

आप मुझसे क्या कराना चाहते हैं, उसे आप कहें। मैं बहुत स्पष्ट आदमी हूँ अतः मुझे कहनेमें आप तनिक भी संकोच न करें ॥ ९६ ॥

अनेहस्सु व्यतीतेषु पर्यचैषीस्त्वमद्य माम् ।
परमार्थेन गृह्णीष्व वचः सर्वं मयोदितम् ॥९७॥

बहुत दिनोंके बाद आपने मुझे पहचाना है। मेरे कथनको आप सत्य ही समझें ॥ ९७ ॥

त्वं सन्देक्ष्यसि यत्किञ्चित्सध्यानं श्रोष्यते हि तत् ।
गुरुतापि यथायोग्यं मता तस्य भविष्यति ॥९८॥

आप जो कुछ मुझे कहेंगे, मैं उसे ध्यानसे सुनूँगा । तथा यथा-योग्य उसका गौरव भी मैं मानूँगा ॥ ९८ ॥

सन्निहिता अभिप्रायास्तत्र स्युर्नावमानिताः ।
तान्प्रयत्नेन विज्ञातुं प्रयतिष्ये यथामति ॥९९॥

उस आपके कथनमें जो अभिप्राय भरे होंगे उसका मैं अपमान नहीं करूँगा । प्रत्युत प्रयत्नके साथ उनको समझनेका मैं प्रयत्न करूँगा ॥९९॥

निसर्गशुद्धो मनसा मनोहरं सतां समेषां सुधियां सुधीवरः।
विवेकयुक्तं दलमीदृशं यतिर्लिलेख राजप्रतिनिध्यरंगमे॥१००॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
त्रयोविंशः सर्गः

मनसे स्वभावतः विशुद्ध, विद्वानोंमें श्रेष्ठ श्रीमहात्माजीने सभी सज्जनोंको प्रिय लगे ऐसा विवेक युक्त पत्र वाइसरायको लिखा ॥१००॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञराष्ट्रभाषाटीकायां
त्रयोविंशः सर्गः



# चतुर्विंशः सर्गः

मदीयपत्रोत्तरमद्य यावल्लब्ध्वा न बन्धो व्यजहां प्रतीक्षाम् ।
आसाद्य ते पत्रमिहाद्य शान्तं विश्वस्त एवास्मि तवेति तुष्टः ॥ १ ॥

मित्र, मेरे पत्रका अभीतक उत्तर न पाकर मैंने आशा छोड़ दी थी। आज यहाँ आपका पत्र पाकर और यह जानकर कि आप अभी भी मुझपर विश्वास रखते हैं, सन्तुष्ट हुआ ॥ १ ॥

अद्यापि मां त्वं स्खलितानुयुक्तं जानासि तेनैव ममाधुनापि ।
कारानिवासं मनुषेनुरूपमित्यादि विज्ञाय मनोतिखिन्नम् ॥ २ ॥

आप अभी तक मुझे अपराधी मानते हैं और इसलिए अभी मेरे कारावासको योग्य समझते हैं, यह सब जानकर मन बहुत खिन्न हुआ ॥ २ ॥

पश्चात्तपामि स्वकृतेन चित्ते कृत्येन चेत्यस्ति तवानुमानम् ।
मिथ्यैव तद्विद्धि न बिन्दुमात्रं तथ्यत्वमत्रास्ति मतिभ्रमार्त ॥ ३ ॥

आपका यह अनुमान, हे मतिभ्रमसे पीड़ित मित्र ! मिथ्या ही है कि मैं अपने किए हुएपर आज पश्चात्ताप करता हूँ ॥ ३ ॥

यस्यास्ति पत्रस्य ममैतदद्य प्रत्युत्तरं ते समुपागमत्तत् ।
ध्यानेन मानेन पुनः पठित्वा मन्येनुमानं तव हीनमानम् ॥ ४ ॥

मेरे जिस पत्रका आपने प्रत्युत्तर दिया है इस प्रत्युत्तरको फिरसे मान और ध्यानके साथ पढ़ने के पश्चात् मैं मानता हूँ कि आपका अनुमान प्रमाणहीन है–असत्य है ॥ ४ ॥

कर्तव्यमात्मीयमवेक्ष्य सम्यग्ग्राह्यो मयात्रैव महोपवासः ।
इत्येव मत्पत्रगतार्थसारो नैव त्वया तर्कितमस्ति तत्त्वम् ॥ ५ ॥

मुझे मेरा कर्तव्य विचारकर यहाँ ही उपवास ग्रहण करना चाहिये,

इतना ही मेरे पत्र का सारांश है। आपने जो अनुमान किया है वह सत्य नहीं है ॥ ५ ॥

**एतानि पत्राणि विधाय तात द्वारं प्रजाराधनमेव कुर्वः।**
**नैष्फल्यमाप्तं बत चेद्भवेन्मे स्यात्सेवनीयोत्र मयोपवासः॥ ६॥**

हे तात, इन पत्रोंको साधन बनाकर हम दोनों ही प्रजाकी सेवा कर रहे हैं। यदि मुझे निष्फलता मिलेगी तो मैं यहाँ उपवास करूँगा ॥६॥

**धान्यस्य राशीञ्जनयन्ति नित्यमेताः प्रजा भारतभूनिवासाः।**
**एतेषु सत्स्वप्यथ ता म्रियन्ते कूपं पतन्त्येतदतीव दुःखम्॥ ७॥**

भारतीय प्रजा ढेरका ढेर अनाज पैदा करती है। उस अनाजके ढेरके रहते हुए भी लोग मर रहे हैं, कूवोंमें पड़ते हैं, यह बड़े दुःखकी बात है ॥ ७ ॥

**मज्जन्ति नार्य्यः सरितां जलेषु रत्नाकरस्यापि च नित्यमेव।**
**द्रव्येण हीना वसनैर्विहीना राशौ पटानामपि विद्यमाने॥ ८॥**

स्त्रियाँ, द्रव्यके अभावमें वस्त्रोंके रहते हुए भी वस्त्र न मिलनेसे प्रतिदिन नदियों और समुद्रों में डूब रही हैं ॥ ८ ॥

**दुर्दैवलीला निखिला भवन्तीर्द्रष्टुं न शक्तोस्मि कथंचिदेताः।**
**साक्षी कथं स्यामवशः स्थितोत्र तस्मान्मयाश्रेय इहोपवासः॥ ९॥**

दुर्दैवकी इन सब लीलाओंको देखनेकेलिए मैं किसी प्रकार समर्थ नहीं हूँ। लाचार होकर यहाँ बैठकर मैं साक्षी कैसे बन सकता हूँ? अतएव मुझे यहाँ उपवासका आश्रय लेना है ॥ ९ ॥

**निर्धारितार्थस्तव सभ्रमोस्ति स्वीकारयोग्योस्ति न तेन किन्तु।**
**मत्तः कमप्यर्थमपेक्षसे चेत्सभ्यैः सभायाः मम संगमोस्तु॥१०॥**

आपने जो निश्चय किया है वह तो भ्रमयुक्त है। अतः स्वीकार करने योग्य नहीं है। परन्तु यदि आप मुझसे किसी वस्तुकी आशा रखते हों तो महासभाके सदस्योंसे मेरी भेंट होनी चाहिए ॥ १० ॥

ज्ञायेत चेदेकतमोपि दोषः स्वल्पो मया मेद्य सखे त्वयेव।
निर्णयमेकेन भवेन्मयैव शोचेयमात्मोर्जितपापकृत्यम् ॥११॥

जैसे आपको मेरा दोष अवगत है वैसे ही यदि मुझे भी मेरी भूल ज्ञात हो तब तो मैं अकेला ही कोई निर्णय कर सकूँ और अपने किये हुए पापके लिए सन्ताप भी करूँ॥ ११ ॥

यत्ने कृतेप्यद्य मया त्रुटिर्मे नालोक्यते कापि मया कृतेषु।
अमात्यमुख्ये त्वयि चापि यन्मे प्रोक्तं तदद्यापि तथात्वमेव ॥१२॥

परन्तु यत्न करनेपर भी मेरे कार्योंमें मुझे त्रुटि नहीं दीख पड़ रही है। सर्कारके प्रधान अमात्य और आपके पास जो कुछ मैंने कहा है, वह अभी वैसा ही है, मेरे मत में फेरफार नहीं हुआ है॥ १२ ॥

आगस्टमासे नवमीतिथौ यज्जातं समस्ते बत भारते तत्।
श्रुत्वा महादुःखभरेण तात वैयग्र्यमारोहदधीरधीर्मे ॥१३॥

नवमी अगस्तको भारतमें जो कुछ हुआ है उसे सुनकर हे तात, दुःखके भारसे मेरी बुद्धि अधीर होकर व्यग्र बन गयी है॥ १३ ॥

सर्वोत्र दोषोयमुरुक्रमोस्ति नीत्यास्तवाज्ञानविडम्बितायाः।
उक्तं मया तच्छतकृत्व एव नाकर्णितं कर्णवतापि किं तत् ॥१४॥

आपकी अज्ञानपूर्णनीतिका ही यह बड़ा भारी दोष है। अर्थात् यह दोष आपकी नीतिका है। यह बात तो मैंने सैकड़ों बार कही है। क्या आपने नहीं सुनी है?॥ १४ ॥

कृत्यान्ययोग्यानि कृतानि कैश्चिन्नानिन्दमित्यस्ति मनोऽव्यथा मे।
अज्ञाततत्त्वे कथमुत्सहेहं कर्तुं तथेत्येव विचारमूढः ॥१५॥

किन्होंने अयोग्य कृत्य किये हैं, मैंने उनकी निन्दा नहीं की, इसके लिये मेरे मनमें दुःख है। परन्तु जिस कार्यके विषयमें मैं वास्तविकरूपसे कुछ नहीं जानता हूँ उसकी निन्दा कैसे करूँ? इसी विचारसे मैं मूढ़ जैसा रहा हूँ॥ १५ ॥

शक्नोषि मन्तुं वशवर्तिनां ते प्रोक्तान्यनर्थान्यपि सत्यभाञ्जि ।
नाहं तदादतुमबुद्धकृत्यं शक्तोस्मि केनापि हि कारणेन ॥१६॥

आप अपने नौकरों चाकरोंकी कही हुई व्यर्थ बातोंको भी सत्य मान सकते हैं। मैं किसी कारणसे भी अज्ञानियोंके कार्यकी परवा नहीं करता ॥ १६ ॥

एतादृशं तात पुरापि वृत्तं जातं श्रुतं तद्बहुकृत्व एव ।
पश्चात्तदेवास्ति परीक्षणान्ते मिथ्यैव सिद्धं सकलप्रसिद्धम् ॥१७॥

हे तात, ऐसा ही वृत्तान्त पहले भी बहुत बार हुआ था, उसे मैंने सुना था। परन्तु परीक्षा करनेके बाद वह सब मिथ्या सिद्ध हुए, उसे सब लोग जानते हैं ॥ १७ ॥

यावत्प्रतीतिर्वचनेषु तेषु प्रख्यापितेषु त्वयका न मे स्यात् ।
कं कामथो केन च भर्त्सयेयमित्येव मे बुद्धिरवाकुलाद्य ॥१८॥

आपने जो कुछ कहा है उसमें जबतक मुझे विश्वास न हो तबतक मैं किस पुरुषको और किस स्त्रीको उलाहना दूँ? यहाँ ही मेरी बुद्धि व्याकुल बनी है ॥ १८ ॥

श्रद्धा मदीयास्ति निराकुव हिंसाविरोधेत्विति लैमामकीना ।
तारस्वरेणागदिता गिरा या निर्वाणमापन्न हि साधुनापि ॥१९॥

मैंने जो उच्च स्वरसे इस वचनका उच्चारण किया था कि हिंसाके विरोधमें अर्थात् अहिंसामें मेरी श्रद्धा अभी भी अचल है, वह वचन अभी शान्त नहीं हुआ है— स्थिर है ॥ १९ ॥

ये राष्ट्रसंसत्सभिकाः कदाचिद्धिंसापराः क्रोधवशादभूवन् ।
तान्सर्वदानिन्दिषमेव तत्त्वं वेत्सीह नो वेति न वेद्मि तात ॥२०॥

महासभाके जो सदस्य कभी क्रोधवश होकर हिंसापरायण बने थे, मैंने उनकी निन्दा की थी, इसे आप जानते हैं या नहीं, हे तात! इसे मैं नहीं जानता हूँ ॥ २० ॥

कर्तव्य आसीदुपवास एव प्रासङ्गिकोद्यापि मया परन्तु।
कारानिबद्धः परवानवित्तो वृत्तस्य नैवाकरवं तमस्मात् ॥२१॥

इस प्रसङ्गके लिए मुझे उपवास करना चाहिये था परन्तु मैं तो जेलमें हूँ। परतन्त्र हूँ। वृत्तान्त जानता नहीं हूँ। इसलिए मैंने उपवास नहीं किया ॥ २१ ॥

नो निग्रहश्चेन्नरनायकानामापादितः स्याद्यदि संगमो नौ।
नैतादृशी स्यात्स्थितिरत्र दीना पश्चात्तप त्वं निजकारिकायाम् ॥२२॥

यदि नेताओंको पकड़ न लिया गया होता और मेरी और आपकी मुलाकात हुई होती तो ऐसी दीन स्थिति आती ही नहीं। अपने कर्तव्य पर आप पश्चात्ताप करें ॥ २२ ॥

यड्डायरः पञ्चनदेष्वकार्षीद्यत्कानपूरे यवनैः सहापि।
आचारयद्राज्यमुदारमौढ्यमासञ्जना शोकभृतो हि तेन ॥२३॥

पञ्जाबमें डायरने जो कुछ किया था और कानपूरमें यवनोंके साथ राज्यने जो कुछ कराया था उसके कारण प्रजामें शोक छाया हुआ था ॥ २३ ॥

बङ्गक्षितिच्छेददुरूहकाले लोकाः समस्तास्तमसा परीताः।
श्वेतेन राज्ञा निजदोषमङ्गीकृत्यैव लोकाः शममापितास्ते ॥२४॥

वङ्गविच्छेदके समय भी लोक क्रोधी बन गये थे। इन सब प्रसंगोंमें सर्कारने अपना दोष स्वीकार करके ही लोगोंको शान्त किया था ॥ २४ ॥

स्याच्चेदनुष्ठेयमिह त्वयापि ज्ञात्रा तदेवेति शुभं हि भूयात्।
गोपायितं किञ्चन नो मयात्र स्यान्मे त्रुटिश्चेदहमस्मि बोध्यः ॥२५॥

आप यह सब जानकर स्वयं भी वैसा ही करें अर्थात् अपनी भूल स्वीकृत करें तो सब अच्छा ही होगा। मैंने इस पत्रमें कुछ छिपाया नहीं है। भूल हो तो मुझे सूचित करेंगे २५ ॥

अस्पष्टभावो यदि कुत्रचित्स्यात्पत्रे ममास्मिन्भवता स लेख्यः ।
विस्पष्टयिष्यामि पुनस्तमेव येन त्वदीयं मन एतु तोषम् ॥२६॥

यदि इस पत्रमें कहींपर मेरा भाव अस्पष्ट हो तो उसे आप लिखेंगे तो मैं उसे पुनः स्पष्ट करूँगा जिससे आपको सन्तोष हो ॥ २६ ॥

मुम्बापुरीभोगपतिं विधाय द्वारं दलानां गमनागमौ चेत् ।
कालव्ययः स्यात्स च मेस्त्यसह्यस्तस्मात्कुरुष्वान्यमिह प्रबन्धम्॥२७॥

यदि बम्बई के गवर्नरद्वारा हमारा पत्रव्यवहार चलेगा तो पत्रोंके आने जानेमें बहुत विलम्ब होगा । वह विलम्ब मेरे लिये असह्य है । इसलिये यहाँ कोई अन्य प्रबन्ध करें ॥ २७ ॥

कारागारपतिं त्वमादिश सखे सर्वाणि पत्राणि मे,
त्वत्पार्श्वे प्रहिणोतु स स्वयमिति स्यादेव रोध्यस्ततः ।
कालानां विगमो महानिति ततो लाभोपि सिध्येन्महान् ,
निर्णेयं भविता ततः किमपि यच्छं साधयेत्सर्वतः ॥२८॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
चतुर्विंशः सर्गः

हे मित्र, आप जेलरको आज्ञा दें कि वह मेरे पत्रोंको स्वयं आपके पास भेज दिया करें, इससे कालव्यय रोका जा सकेगा । उससे लाभ भी बहुत होगा । सबका कल्याण हो ऐसी किसी भी वस्तुका हम निर्णय कर सकेंगे ॥ २८ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञराष्ट्रभाषाटीकायां
चतुर्विंशः सर्गः



# पञ्चविंशः सर्गः

श्रीमन्महात्मप्रवरस्य पत्रं प्राप्यैव कल्याणपरम्परं तत् ।
लिन्लीथगोरुत्तरमाशु तस्मिन्मुदा व्यलेखीदिदमर्घ्यपादे ॥ १ ॥

श्रीमहात्माजीके कल्याणकारी उस पत्रको पाकर श्रीलिन्लिथगोने शीघ्र ही प्रसन्नतासे महात्माजीको यह पत्र लिखा ॥ १ ॥

ध्यानेन पत्रं तव वाचयित्वा मनो महामोदनिधौ मदीयम् ।
न्यमज्जदद्येममनुग्रहं ते धत्तोपकारं हृदयेन मन्ये ॥ २ ॥

आपके पत्रको ध्यानसे पढ़कर मन अत्यन्त प्रसन्न हुआ । इस कृपाको मैं उपकारक मानता हूँ ॥ २ ॥

देशेऽत्र या या घटनाः सदैव घटन्त आहोस्विदपि व्यतीताः ।
तासां समासां त्वयि चापि राष्ट्रसंसद्ययं तिष्ठति तात भारः ॥ ३ ॥

इस देशमें जो जो घटनाएँ रोज घट रही हैं अथवा घट चुकी हैं उन सबका भार आप और महासभाके ऊपर है ॥ ३ ॥

हिंसापरीता बहवोपराधा जाता इहैषां त्वयि भार एव ।
तथा महासंसदि चापि नातो मुक्तिर्भवेद्वां कथमप्युदार ॥ ४ ॥

यहाँ बहुतसे हिंसक अपराध हुए हैं उनका भार आप और महासभाके ही ऊपर है । इससे दोनोंको छुटकारा किसी प्रकार नहीं है ॥ ४ ॥

पत्रात्त्वदीयाद्धननादिकार्येष्वारोषमाज्ञाय यथायथं ते ।
जातः परो मे हृदयेद्य हर्षो महोपकारः स तवेति मन्ये ॥ ५ ॥

आपके पत्रसे हिंसादिकार्योंमें यथायोग्य दोष जानकर मेरे हृदयमें बहुत हर्ष हुआ है । इसे मैं आपका महान् उपकार मानता हूँ ॥ ५ ॥

भूतेषु कालेष्वपि हिंसनादौ द्वेषस्तवादृश्यत कार्यजाते ।
परन्तु मासेषु गतेषु षट्सु कृत्यानि हिंसाजनिकान्यभूवन् ॥ ६ ॥

भूतकालमें भी हिंसककार्योंके प्रति आपका द्वेष देखा गया है। परन्तु गत ६ महीनोंमें यहाँ हिंसककृत्य हुए हैं ॥ ६ ॥

**ये त्वां समन्तादनुयान्ति लोकास्तेषामपीहास्तिकरावलम्बः।**
**महासभा स्वैरनुयायिभिस्तद्धिंसाप्रवृत्तिं सगतिं करोति ॥ ७ ॥**

जो आपके सच्चे अनुयायी हैं उनका भी इसमें हाथ है। अतः महासभा अपने अनुयायियों द्वारा हिंसाप्रवृत्तिको गतिशील करती है ॥ ७ ॥

**हिंसाप्रवाहेषु निपत्य ये ये गतासवः क्रोधवशाद्धठाद्वा।**
**सम्बधिनां दीनदशास्पृशां स्यात्तेषां पुरः किं प्रतिवाक्यमुक्तम् ॥ ८ ॥**

हिंसाके प्रवाहमें क्रोधसे या हठसे पड़कर जो जो मर गये हैं उनके दुःखी सम्बन्धियोंके आगे क्या उत्तर दिया जाय ? ॥ ८ ॥

**येषां विनष्टा निखिलैव सम्पद्धताश्च ये हन्त विवेकहीनाः।**
**आघातिता ये पुरतोस्ति तेषां तवोत्तरं किं वद दीनबन्धो ॥ ९ ॥**

जिनकी सम्पूर्ण सम्पत्ति नष्ट हो गयी है, जो अविवेकी मारे गये हैं। जो घायल हुए हैं उनके आगे आपका क्या उत्तर है, उसे कहिये ॥ ९ ॥

**न मामकीना मम वाचि सम्यक् स्थितं रहस्यं मनुजा विदन्ति।**
**इत्येव चेत्त्वं विवृणोषि तन्नो मनः समाधावुपयुक्तमस्ति ॥१०॥**

यदि आप इतना ही कहना चाहते हों कि मेरे आदमी मेरे वचनमें रहे हुए रहस्यको ठीक ठीक नहीं जानते हैं तो यह मनके समाधानकेलिये उपयुक्त नहीं है ॥ १० ॥

**अथापराधान्सकलान्नृपे त्वं निरीक्षसे तन्न भजेत्कथंचित्।**
**औचित्यमस्मात्सदसा त्वया वा विचारणीयं समयोतियाति ॥११॥**

आप सब अपराध राजाका ही मानते हैं यह किसी प्रकार भी उचित नहीं हो सकता है। अतः आप और महासभा' विचार करें। समय बीतता जा रहा है ॥ ११ ॥

अगस्तमासस्य तिथौ नवम्यां महासमज्या निरदीधरद्यत्।
सम्बन्धमर्वाक्सह तेन नैजं छेत्तुं त्वमिच्छस्यथवा न हीति ॥१२॥

अगस्त मासकी नवमी तारीखको महासभाने जो निश्चय किया है उससे आप शीघ्र ही अपना सम्बन्ध तोड़ना चाहते हैं या नहीं ? ॥ १२॥

चिच्छित्ससे चेत्सह निर्णयेन तेन स्वकीयं निखिलं हि संगम्।
श्रद्धां न तस्मिन्निदधासि चेत्त्वं सखे तदेदं विवृतं कुरुष्व ॥१३॥

यदि उस निर्णयके साथ अवश्य ही आप अपना सब संपर्क तोड़ डालना चाहते हैं और यदि आप उसमें श्रद्धा नहीं रखते हैं तो आप इसे स्पष्ट करें॥ १३ ॥

भविष्यति स्यादपि ते न संगः साकं च तेनेत्यपि संगिरस्व।
मुम्बापुरीप्रान्तपतौ ततस्ते सौकर्यमाधातुमहं लिखामि ॥१४॥

भविष्यमें भी इसके साथ आपका सम्बन्ध नहीं होगा यह भी प्रतिज्ञा करें। तब मैं बम्बईप्रान्तके गवर्नरको आपकी सुविधाकेलिये लिखूँगा ॥१४॥

स प्रेषयेत्पत्रमिह त्वदीयं पार्श्वे मम स्यान्न महान्विलम्बः।
पत्रार्थमेतं निखिलं विचार्य तदुत्तरं दत्तमिदं यतीन्द्रैः ॥१५॥

वह आपका पत्र मेरे पास भेजेंगे। अधिक विलम्ब नहीं होगा। इस पत्रके अर्थको विचारकरके श्रीमहात्माजीने यह उत्तर दिया ॥ १५ ॥

विना बिलम्बेन दलं मदीयं त्वयोत्तरीतुं परमा कृपा या।
कृता मयीहेति तदर्थमादौ नियोजये त्वां बहुसाधुवादैः ॥१६॥

विना विलम्बके आपने मेरे पत्रके उत्तर देनेमें जो कृपाकी है उसके- लिये मैं पहले आपको अनेक धन्यवाद देता हूँ ॥ १६ ॥

त्वया गृहीतेषु विशिष्टनेतृवर्येषु किं स्यात्कलहादिकार्य्यैः।
प्रजाकृते राष्ट्रियसंसदोद्य सम्बन्ध इत्येव न वेद्मि तात ॥१७॥

जब कि आपने बड़े बड़े नेताओंको पकड़ लिया है तब प्रजाद्वारा किये गये उपद्रवोंके साथ महासभाका क्या सम्बन्ध है, यही समझमें नहीं आता है ॥ १७ ॥

नीत्या तवैवातिकठोरयात्र प्रासावि दुष्टं फलमेतदद्य ।
ततस्तु दुःखान्तमिमं तवाभिप्रायं कदाचिन्न सखेनुमोदे ॥१८॥

यह आपकी ही अति कठोर नीतिका यह दुष्ट फल है । अतः आपके इस दुःखान्त अभिप्रायका मैं कभी अनुमोदन नहीं करता हूँ ॥ १८ ॥

अगस्तमासे, निरणेष्ट संसद्यत्तत्र कः कुत्र च दोषलेशः ।
प्रतीयते तद्वदितं त्वया नो नोदेति तस्मात्प्रतिवादधीर्मे ॥१९॥

अगस्तमासमें महासभाने जो निर्णय किया था उसमें क्या और कहाँ दोषका गन्ध भी प्रतीत होता है, इसे तो आपने कहा ही नहीं । इसीलिये उसके प्रतिवादकरनेकी इच्छा नहीं है ॥ १९ ॥

तन्निर्णयेनापि न संसदोस्या नीतौ कदाचित्परिवर्त एति ।
हिंसा मता तद्दृशि दोषराशेः सदैव पोषाय शिवाय नासौ॥२०॥

उस निर्णयसे भी महासभाकी नीतिमें कोई परिवर्तन नहीं आता है। उसकी दृष्टिमें हिंसा सदैव दोषकी वृद्धिकेलिये ही है, शान्तिकेलिये नहीं ॥२०॥

सा विश्वसित्येव न फासिवादे सहायतादानमभीप्सितं नो।
जन्ये च तस्या नहि यावदन्तं गच्छेत्स्वदेशस्य च पारतन्त्र्यम्॥२१॥

वह न तो फासीवादमें विश्वास रखती है और न जब तक भारतको स्वतन्त्रता मिले तब तक युद्धमें कोई सहायता देना चाहती है ॥ २१ ॥

तन्निर्णये या भवति श्रुतासौ सनत्यवज्ञा नृपशासनस्य ।
न सास्ति दोषाय हि दृश्यतेसौ गांधीर्विनोः सन्धिषु यत्र तत्र॥२२॥

महासभाके उस निर्णयमें जो राजाकी आज्ञाका सविनय तिरस्कार श्रुत हो रहा है उससे कोई हानि नहीं है । क्योंकि वह तो गांधी-इर्विन् समझौतेमें जहाँ तहाँ उपस्थित ही है ॥ २२ ॥

एतत्समीकावसरे प्रशिष्टिभङ्गो भवेन्नैव कृतो मयाद्य।
त्वां बोधयित्वा परिणाममस्य प्रारभ्यमित्येव ममास्ति हृद्यम्।२३।

इस युद्धके अवसरपर आज शासनभङ्ग नहीं किया जायगा। इस युद्धका परिणाम आपको समझाकर ही इसका आरम्भ किया जाय यह मेरा हार्दिक भाव है ॥ २३ ॥

अतः सभायां मयि वापि पापं प्रकल्पितं भारतमन्त्रिणा चेत्।
अबोधरम्यं प्रतिभाति सर्वं विवेकिनां बुद्धिमतां विनिन्द्यम्।।२४।।

अतः यदि भारतमन्त्रीने महासभापर या मुझपर कलङ्क लगाया है तो वह जब तक अज्ञान है तभी तक अच्छा लगेगा। विवेकी और बुद्धिमान् तो उसकी निन्दा ही करेंगे ॥ २४ ॥

त्वयोद्यते तत्सकलं प्रमाणमित्याग्रहं तात विहाय साध्यम्।
त्वयाखिलस्यैतदनुष्ठितस्य न्याय्यत्वमर्हत्वमिह त्वयापि ।।२५।।

हे तात, आप जो कहते हैं वह प्रमाण है। इस आग्रहको छोड़कर आपने यह सब जो कुछ किया है वह उचित और योग्य है, इसे आप भी सिद्ध कर बतावें ॥ २५ ॥

सभ्या न ये सन्ति महासभायास्तैस्तैः कृताया अपि हिंसनायाः।
भारस्त्वयारोप्यत एव मूर्ध्नि महासभाया इति मे विषादः ।।२६।।

जो महासभाके सभ्य नहीं हैं उन लोगोंने भी जो हिंसाकी है उसका भी भार आप महासभाके ही सिरपर रखते हैं, इसका मुझे दुःख है ॥२६॥

हिंसा जनानामधुना त्वयेव मयापि सर्वत्र निरीक्ष्यतेलम्।
परन्तु मन्ये तव हेयनीतिर्हेतुत्वमत्राभजते प्रकामम् ।।२७।।

आज तो मैं भी आपके समान ही सर्वत्र खूब हिंसा देख रहा हूँ। परन्तु मैं मानता हूँ कि आपकी हेय नीति ही इसमें बड़ा कारण है ॥२७॥

निर्दोषतायाश्च सदोषताया विना विचारेण जनानुबन्धम्।
कृतं त्वया वीक्ष्य जनाः समस्ताः क्रोधाग्निदग्धा अभवन्निदानीम्॥

निर्दोषता और सदोषताका विचार किये विना ही आपने जो सबको पकड़ लिया, इसे देखकर सभी लोग क्रोधाग्निसे जलने लग गये ॥ २८ ॥

यन्निर्दयत्वं सितशासनेन प्रदर्शितं दीनजनेषु गर्ह्यम् ।
तत्कोपयेत्सर्वजनाननिन्द्यानपीति चित्राय न किञ्चिदत्र ॥२९॥

अंग्रेजी सर्कारने दीनोंपर जो निर्दयता दिखायी है वह सभी अच्छे लोगोंको कुपित कर सकती है । इसमें कुछ भी आश्चर्य नहीं है ॥२९॥

अहिंसकानां शिरसोवनामो धत्तेत्र शोभां परमां परन्तु ।
हन्ता निकामं निखिलप्रजानां धिक्कार्य एवेति न चित्रमत्र ॥३०॥

अहिंसकोंका सिर झुकाना ही अधिक शोभा देता है । परन्तु जो प्रजाका वध करते हैं उन्हें धिक्कारनेमें कोई आश्चर्य नहीं है ॥ ३० ॥

यां क्रूरतां शासनमद्य निन्द्यां प्रादर्शयत्सास्ति धिगर्थिकैव ।
निरस्त्रशस्त्रेषु जनेषु शस्त्रवर्षा भवेदेव निपातहेतुः ॥३१॥

शासनने—सर्कारने जो निन्दित क्रूरता आज दिखायी है उसका अर्थ ही धिक्कार है । निरस्त्र और निःशस्त्र प्रजापर शस्त्र वर्षा पतनका ही कारण है ॥ ३१ ॥

धारासभायां यदि सत्प्रजाभिः संप्रेषिताः स्युः सभिका न तर्हि ।
इत्थं प्रजानां परिपीडनं स्याद्दारिद्र्यदौर्भिक्ष्यगतिश्च न स्यात् ॥

यदि धारासभामें सत्प्रजाके भेजे हुए सभ्य हों तो न तो प्रजाकी इस प्रकार दुर्दशा ही हो और न दरिद्रता तथा अकाल ही आ सकें ॥ ३२ ॥

कृत्येन तेनेन भवत्यजस्रं प्राणान्तिकं दुःखमनूनमद्य ।
शोकस्य रोगस्य भवेत्समृद्धिः सर्वं त्वयैवास्ति सखे निवार्यम् ॥

आपके इस कृत्यसे बड़ा भारी प्राणान्तिक दुःख होता है । शोक और रोगकी भी इससे वृद्धि होती है । मित्र, यह सब आपको ही दूर करना है ॥ ३३ ॥

वैवश्यमासाद्य भवेदुपास्यः सत्याग्रहो नाम मयोपवासः ।
तेनैव सन्तापवितापितं मे शान्तं करिष्यामि मनोतिखिन्नम् ॥३४॥

लाचार होकर मैं उपवासरूप सत्याग्रह करूँगा । सन्तापसे तपे हुए और अत्यन्त खिन्न मनको उसीसे शान्त करूँगा ॥ ३४ ॥

फ़ेब्रूवरीमासि तिथौ नवम्यां प्रारप्स्यते सोत्र च वासराणि ।
एकाधिकां विंशतिमेव यावन्निपीय फालं रसमेव किञ्चित् ॥३५॥

फर्वरीकी नवमी तारीखको वह उपवास २१ दिनकेलिये फल-रस पीकर शुरू करूँगा ॥ ३५ ॥

प्राणव्ययो नास्ति मयाधुनेष्टो रसादिकं तद्व्यवहार्यमेव ।
नो वार्धकेस्मिंल्लवणोदकेन पुरेव धार्यं सुखिजीवनं मे ॥३६॥

अभी मुझे मृत्यु इष्ट नहीं है, अतः रस आदिका व्यवहार करना ही होगा । इस वृद्धावस्थामें पहिलेके समान नमकके जलसे सुखी जीवन नहीं धारण किया जा सकता ॥ ३६ ॥

करिष्यसे चेन्मम बन्धमुक्तिं तदावधेः पूर्वमवश्यमीयात् ।
अन्तं व्रतं पुण्यतमं सदर्थं दृढं प्रशान्तो निरचैषमेतत् ॥३७॥

यदि मुझे बन्धनसे मुक्त करेंगे तो अवधिसे अर्थात् २१ दिनसे पूर्व भी मेरा यह पवित्र और उत्तम प्रयोजनवाला व्रत समाप्त हो जायगा । ऐसा मैंने शान्त भावसे दृढ़ निश्चय किया है ॥ ३७ ॥

लिन्लीथगोसविध ईरितपत्त्रवर्णै-
रेवं निवेद्य मनसो विमलां मनीषाम् ।
सर्वस्वधर्मधरणीधर एष ईशो,
भव्यर्थमुत्सुकतयैव प्रतीक्षते स्म ॥३८॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
पञ्चविंशः सर्गः

लिन्लिथगोके पास भेजे हुए पत्रके इन अक्षरोंसे अपने मनकी इच्छाको इस प्रकार विदित करके महान् धर्मरक्षक समर्थ श्रीमहात्माजी उत्सुकताके साथ भावी वस्तुकी प्रतीक्षा करने लगे ॥ ३८ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञराष्ट्रभाषाटीकायां
पञ्चविंशः सर्गः ।



# षड्विंशः सर्गः

अवाप्य पत्त्रं तदथो महात्मनः स लीनलिथ्गो त्वरसा तदुत्तरम् ।
अदादिति प्राप्तमिदं दलं तव मयावधानेन मुदा समामनम् ॥१॥

श्रीमहात्माजीके उस पत्रको पाकर लिन्‌लिथगोने शीघ्र ही उत्तर दिया कि; आपका पत्र मुझे मिला। प्रसन्नतासे सावधान होकर मैंने उसका मनन किया ॥ १ ॥

मनोवबोद्धुं तव तात निर्मलं प्रदर्शितं तर्कगणं त्वया पुनः ।
अवाचयं तत्सहसोत्कमानसस्ततः परं पत्रमिदं विलिख्यते ॥२॥

हे तात, आपने जो तर्क उपस्थित किये हैं उनको आपके विचार जाननेके लिए मैंने उत्कण्ठित मनसे पढ़ा है। पश्चात् पत्र यह लिखता हूँ ॥ २ ॥

गतेषु मासेषु चतुर्षु मित्त्र या अरुन्तुदा दुर्घटना इहाभवन् ।
भरस्स तासां त्वयि संसदीति वा न संशयोस्तीति मतं स्थिरं मम ॥३॥

इन विगत चार महीनोंमें यहाँ जो दुर्घटनाएँ हुई हैं उनका भार आपके ऊपर तथा महासभाके ऊपर है, इसमें सन्देह नहीं, यह मेरा स्थिर मत है ॥ ३ ॥

इदं दलं चाप्यपराणि ते सखे मुहुः पठित्वापि ममैष निर्णयः ।
उदन्तविज्ञानपुरस्सरं मया न दृश्यते दूषणमत्र किंचन ॥४॥

मित्र, आपके इस पत्रको और दूसरे पत्रोंको भी पुनः पुनः पढ़नेके बाद भी मैंने यही उपर्युक्त निर्णय किया है। जितने समाचार मिले हैं सबको जाननेके बाद यह निर्णय हुआ है। अतः इसमें मुझे कोई दोष नहीं दीख पड़ता है ॥ ४ ॥

इदं मतं मे सबलं प्रमाणितं विधातुमारान्निपुणं यतिष्यते ।
यथा भवेत्त्वद्धृदये वचस्यलं मम प्रतीतिः करणीयमस्ति तत् ॥५॥

मैं अपने इस मतको सबल और प्रमाणित करनेके लिये सर्वथा प्रयत्न करूँगा । जिससे कि आपके हृदयमें मेरे कथनपर सम्पूर्ण विश्वास हो, वह मुझे करना है ॥ ५ ॥

अवापि पत्रेषु न ते मया मनागुदारता तेन न यत्न आहृतः ।
प्रमाणराशेरुपसंग्रहे यतो भवेत्स कृत्स्नो मम सर्वथाफलः ॥६॥

आपके पत्रमें मुझे तनिक भी उदारता नहीं दीख पड़ी इसलिए मैंने यत्न नहीं किया । क्योंकि प्रमाणोंके संग्रह करनेमें मुझे जो यत्न करना पड़ता वह सब व्यर्थ ही होता ॥ ६ ॥

उदन्तजातेषु च तेषु सर्वशः प्रमाणमस्ति श्रुतवृत्तपत्रिकाः ।
परं न ता विश्वसिषि त्वमाग्रहात्प्रयासकृच्छासनमेव निन्दितुम् ॥७॥

उन समाचारोंमें प्रसिद्ध समाचारपत्र ही प्रमाण हैं । परन्तु आप तो उनपर विश्वास करते नहीं हैं और आग्रहवश होकर सर्कारकी निन्दामें ही प्रयास कर रहे हैं ॥ ७ ॥

महानुपायैर्विचितेषु येषु मे प्रवर्तते प्रत्यय उत्कटः सखे ।
न तानि वृत्तानि तवान्तरं क्वचित्स्पृशन्ति तस्मादहमस्मि सज्वरः ॥८॥

उपायों द्वारा संग्रह किए हुए समाचारोंमें मेरा महान् उत्कट विश्वास है, वह आपके हृदयको तो स्पर्श भी नहीं करते हैं, इसलिये मुझे बहुत दुःख है ॥ ८ ॥

अगस्तमासस्य तदष्टमीतिथौ तवैव नेतृत्वपदे सभागृहे ।
अजूघुषद्राष्ट्रसभावदारणं नृपेण साकं बत सामुदायिकम् ॥९॥

आठवीं अगस्तको आपके ही नेतृत्वमें महासभाके मण्डपमें उसने—महासभाने राजाके साथ सामुदायिक युद्धकी घोषणाकी थी ॥ ९ ॥

**यदा भवेयुर्निखिला नियामकाः सिताङ्गकारागृहबन्दिनस्तदा ।**
**निजेच्छया वर्तितुमेव सा प्रजा उपादिशत्किं मम वागियं मृषा ॥१०॥**

जब सब नियामक—नेता पकड़कर सर्कारकी जेलमें कैदी बना दिये जायँ तब अपनी इच्छाके अनुसार व्यवहार करनेके लिये उसने प्रजाको उपदेश दिया था, क्या यह मेरा कथन असत्य है ? ॥ १० ॥

**ततो निबर्हो नृपवस्तुभञ्जनं यथातथा चापि जनप्रवर्तनम् ।**
**प्रवृत्तिमापन्निखिलासु दिक्षु तत्कथं न भारस्त्वयि तत्सदस्यपि ॥११॥**

उसके पश्चात् हिंसा, सर्कारी वस्तुओंका तोड़ना-फोड़ना, मन में आवे वैसा व्यवहार करना, यह सब चारों ओर होने लगे । तो क्यों नहीं यह भार आपपर और महासभा पर हो ? ॥ ११ ॥

**समस्तदेशे तव चानुयायिभिः प्रवर्तितोज्जासनभावना भृशम् ।**
**उपेक्ष्यते चेद्भवता तदद्भुतं प्रतीयते किं विदधाम्यहं तदा ॥१२॥**

आपके अनुयायियोंने सारे देश ( भारत ) में हिंसाकी भावना फैला रखी है । आप यदि उपेक्षा करते हैं, यह अद्भुत प्रतीत होता है । तब मैं क्या करूँ ? ॥ १२ ॥

**तदाभवन्या घटना इह क्षितौ फलं तदासीन्नियतं निरङ्कुशम् ।**
**प्रकल्पिताया अधिराष्ट्रसंपदा स्वयोजनायाः परिणाशसंस्पृशः ॥१३॥**

उस समय जो घटनाएँ यहाँ हो गयी हैं अवश्य ही वह नाश करनेवाली महासभाकी बनायी हुई योजनाका फल है ॥ १३ ॥

**महासभादोषनिरूपणाय यत्कृतं महाभाषणमेकमद्वयम् ।**
**सितम्बरे श्रीगृहमन्त्रिणात्र तत्प्रहीयते ते सविधेद्य कृत्स्नशः ॥१४॥**

महासभाकी भूलोंको बतानेकेलिये भारतगृहमन्त्रीने सितम्बर मासमें जो एक बहुत बड़ा और बहुत सुन्दर भाषण दिया था उसे सम्पूर्ण आपके पास भेज रहा हूँ ॥ १४ ॥

**अनेन सर्वं विदितं भविष्यति कृतं च किं किं सभयानुमोदितम् ।**
**जनैर्विचारेण विनात्र दुष्कृतं मनः सतां क्षुभ्यति येन संततम् ॥१५॥**

इस भाषणसे आपको ज्ञात होगा कि महासभाने जैसा अनुमोदन किया है ऐसा क्या क्या दुष्कर्म लोगोंने किया है; जिससे कि अच्छे आदमियों का मन सदा क्षुब्ध होता है ॥ १५ ॥

**जनासुनाशाय सुगूढमस्तितां भजन्निहैकः समजो निरन्तरम् ।**
**महासभासभ्यजनस्य भार्यया प्रवर्त्यते कस्यचिदप्यवैम्यहम् ॥१६॥**

लोगोंका वध करनेके लिये यहाँ एक गुप्त समाज है। मुझे पता लगा है कि उसका संचालन महासभाके किसी सभ्य की पत्नी कर रही हैं ॥ १६ ॥

**परं समीक्ष्यावसरस्य सूक्ष्मतां सहामहे सर्वमनिष्टवर्तनम् ।**
**इदं तु सत्यं सभयैव कर्हिचिद्भविष्यतीहोत्तरणीयमन्ततः ॥१७॥**

परन्तु मैं समय की सूक्ष्मता देखकर सब अनिष्ट व्यवहारोंको सहन कर रहा हूँ। परन्तु इतना तो सत्य ही है कि अन्तमें कभी भी इसका उत्तर महासभाको ही देना होगा ॥ १७ ॥

**त्वया सहैवात्मजनैः कदाचन जगत्समक्षं स्खलितातिहीनता ।**
**भविष्यति स्वात्मबलेन हेतुभिः प्रयासतः साधयितुं मम प्रिय ॥१८॥**

जगत्के समक्ष अपने अनुयायियोंके साथ आपको अपने बलसे, हेतुओंसे, प्रयास करके अपनी निर्दोषता सिद्ध करनी होगी ॥ १८ ॥

**न सन्धिपत्रे समकेति यत्त्वया मयापि सूक्ष्मेक्षिकयापि लोकिते ।**
**कचित्ततस्ते विषमाक्षराणि मां न्यपातयन्मोहमहातमोनिधौ ॥१९॥**

जिस अहिंसक सत्याग्रहका आपने गांधी-इर्विन् सन्धिपत्रमें होनेका संकेत किया है मैंने उसे बहुत ही सूक्ष्म दृष्टिसे देखा है परन्तु मुझे वह कहीं नहीं मिला। इससे आपने मुझे महान् मोहरूप अन्धकारके सागरमें डुबा दिया है ॥ १९ ॥

**प्रदर्शितं वर्त्म यदि त्वया भवेन्मया मतं तर्हि भवेदुपद्रुतः ।**
**समस्तदेशो जनताप्युपद्रुता वधश्च वर्धेत नृपानुयायिनाम् ॥२०॥**

आपके सुझाये हुए मार्गका यदि मैं स्वीकार करता तो सम्पूर्ण देशमें उपद्रव फैल जाता, जनतामें भी उपद्रव बढ़ता और सर्कारी मनुष्योंका वध बढ़ जाता ॥ २० ॥

**कथं मया सह्यमिदं भवेत्सखे शमाधिरक्षानियते न संततम् ।**
**क्षतिर्न कस्यापि भवेत्तथा मया सदैव कर्तव्यमिति स्थितिर्मम ॥२१॥**

मैं तो यहाँ शान्तिरक्षाके लिये ही नियत हूँ, मैं यह सब कैसे सहन करूँ? किसीकी हानि न हो, ऐसा मुझे सदा ही करना चाहिये ; यह मेरी स्थिति है ॥ २१ ॥

**महासभामुख्यजनप्रतिक्रिया निरोधनं तेपि मयाविलम्बकम् ।**
**समर्थरीत्या यदि साधिता भवेन्न हीदृशं दुर्दिनमापतेन्ननु ॥२२॥**

यदि मैंने समर्थ रीतिसे शीघ्र ही महासभाके मुख्य-मुख्य लोगोंकी प्रतिक्रिया की होती तथा आपको भी रोका होता तो यह सत्य है कि आज यह खराब दिन आया हुआ न होता ॥ २२ ॥

**मया तथा नाचरितं तदा ततो जनैः समस्तैरहमस्मि निन्दितः ।**
**अवाच्यवाक्यैरपि मर्मभेदिभिः छितोस्मि नित्यं हृदये प्रजाजनैः ॥२३॥**

उस समय मैंने यह सब नहीं किया अतः सब लोग मेरी आज निन्दा करते हैं। तथा न बोलने योग्य मर्मभेदी वाक्योंसे प्रजाजनोंने मेरे हृदयको छेद डाला है ॥ २३ ॥

**कदाचनास्माद्विरतः पथो भवेरिति प्रतीक्षा दुरिताय मेभवत् ।**
**निपात्यतां देह उतेह साध्यतां मनीषितं चेत्युपदेशना तव ॥२४॥**

आप कभी तो इस मार्गसे अलग होंगे, यह प्रतीक्षा ही मेरे दुःखका कारण बन गयी। आपने लोगोंको उपदेश दिया कि या तो मर जावो या इष्टसिद्धि करो ॥ २४ ॥

**निवेदनानीह बहूनि सन्ति ते प्रजासु संविप्लवहेतुरर्थतः ।**
**महासभाया वरधीयनिर्णयः समर्थहेतुर्विपदां समुद्भवे ।।२५।।**

आपके तो बहुतसे निवेदन हैं जिनका प्रजामें विप्लव पैदा होना यही अर्थ है । महासभाका वर्धाका निर्णय विपत्ति पैदा करनेमें बहुत बड़ा कारण है ॥ २५ ॥

**न सन्धिवार्तावसरोपि लभ्यते मया प्रजाशासनकारिणा सह ।**
**निवेदनं चैतदपीह तेभवन्महापदां तात पदं निरङ्कुशम् ।।२६।।**

आपका यह निवेदन भी, कि "मुझे वाइसरायके साथ सन्धिवार्ता करनेका अवसर नहीं मिलता है," महती विपत्तिका कारण बन गया ।।२६।।

**क्षितीशविद्रोहमुपादिशद्भवानजूघुषत्सर्वजनेषु तं तथा ।**
**विपन्महावारिधये निमन्त्रणं तदप्यलं भारतभूतलेभवत् ।।२७।।**

आपने राजविद्रोहका उपदेश दिया । प्रजामें उसकी घोषणा की । यह भी भारतमें विपत्तिसागरके लिये पर्याप्त निमन्त्रण था ।। २७ ।।

**करिष्यमाणं कृतिनिर्णयं महासभागृहे मोहमयीमहापुरे ।**
**प्रतीक्षमाणः कथमप्यहं सखे दिनान्यनैषं शमितेन चेतसा ।।२८।।**

बम्बईमें महासभाके मण्डपमें किये जानेवाले कार्यनिर्णयकी प्रतीक्षा करते हुए मैंने शान्त चित्तसे कितने ही दिन व्यतीत किये ।। २८ ।।

**यदा मयाज्ञायि महासभा पुनः पथा पुराणेन यियासति ध्रुवम् ।**
**तदा परित्यज्य चिराय धीरतां यथोचितं कार्यमिह व्यधीयत ।।२९।।**

जब मैंने समझा कि महासभा फिरसे पुराने मार्गसे ही जाना चाहती है तो मैंने धैर्य छोड़कर, जैसा योग्य था वैसा कार्य किया ।। २९ ।।

**न वार्धकेस्मिन्नुपवासयोग्यता तवाद्य देहे कथमप्यवेक्ष्यते ।**
**महोपवासेभ्य उदस्य तन्मनो विचारसद्मेषु निषीद कर्मसु ।।३०।।**

इस वृद्धावस्थामें आपके शरीरमें उपवासकी शक्ति नहीं दीख पड़

रही है। अतः बड़े-बड़े उपवासोंसे मनको अलग करके विचारपूर्ण कार्योंमें ही स्थिर हो जायँ ॥ ३० ॥

गमिष्यसि स्वाभिमतेन चेत्पथा तदाखिलो भार इहावतिष्ठते।
त्वयीति सम्यङ्मनसा धियाहिते पथि प्रतिष्ठस्व सदा सुखी भव ॥३१॥

यदि आप अपने ही सम्मत मार्गसे जायँगे तो उपवासके सम्बन्धमें सब भार आपपर ही होगा। इस वस्तुको मनसे अच्छे प्रकार विचार-कर बुद्धि कहे उस मार्गपर चलें और सदा सुखी रहें ॥ ३१ ॥

विजानतासूनतिसंकटानले त्वयाद्य निक्षिप्य किमत्र लप्स्यते।
तव स्वभावं च वयोबलादिकं विचार्य दुःखैर्मम वेपते मनः ॥३२॥

जान बूझकर आज अपनेको संकटरूप अग्निमें फेंककर आप क्या लाभ प्राप्त करेंगे? आपके स्वभाव, बल, अवस्थाका विचार करके मेरा मन काँपता है ॥ ३२ ॥

राजनीतिपरिणद्धकर्मणां साधनाय समभीप्सितो भवेत्।
नोपवास इति मेस्ति शेमुषी वर्ततेत्र भवतोपि संमतिः ॥३३॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
षड्विंशः सर्गः

जो कार्य राजनीतिसे जुड़े हुए हों उनको सिद्ध करनेके लिये उपवास इष्ट नहीं होना चाहिये यह मेरा मत है, आपकी भी इसमें संमति है ॥३३॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञराष्ट्रभाषाटीकायां
षड्विंशः सर्गः



# सप्तविंशः सर्गः

प्रतिनिधेर्नृपतेरिदमुत्तरं समधिगत्य विचार्य च चारुदृक्।
लिखितवानिदमुत्तरमाशु स प्रकटयन्हृदयव्यथनं महत् ॥१॥

राजा के प्रतिनिधि-वाइसरायके इस पत्रको पाकर और विचार-कर महाज्ञानी श्रीमहात्माजी ने हृदयकी व्यथाको प्रकट करते हुए शीघ्र ही यह उत्तर लिखा ॥ १ ॥

मतिमतस्तव पत्रमिदं भवेन्ननु निमन्त्रणमद्य निरङ्कुशम्।
मम विशुद्धसमिद्धतपोनलं व्रजितुमेव च शासनशोधकम् ॥२॥

बुद्धिमान् आप का यह पत्र निश्चय ही सरकारको शुद्ध करनेवाले परमशुद्ध और प्रदीप्त तपोरूप अग्नि में प्रवेश करनेकेलिये मुझे निरं-कुश निमन्त्रण ही है ॥ २ ॥

नियतमेव भरो मयि गृह्यते व्रतगणस्य फलस्य च तस्य मे।
प्रतिवचस्तव दारुणमीदृशं भृशमवातनुतेद्य मनोरुजम् ॥३॥

मेरे उपवासों और उसके फलका भार अवश्य ही मैं मेरे ऊपर लेता हूँ। आपका इतना दारुण उत्तर मेरे मानसिक रोगको अत्यन्त बढ़ा रहा है ॥ ३ ॥

न हि भवेदुपवासमिषेण मे त्वदवतर्कितपापगणान्मयि।
कथमपीह पलायनमीप्सितं वच इदं वितथं तव कीर्तितम् ॥४॥

आप मुझमें जिन अपराधोंकी तर्कणा करते हैं मैं उनसे उपवासके बहानेसे किसी रीतिसे भागना नहीं चाहता हूँ। आपका यह कथन असत्य है ॥ ४ ॥

व्रतमिदं न मनागपि मामकं मलिनतां भजते दुरितान्तिकाम्।
परमनीचवचोव्यसनं परं तव मनःस्थितिमुद्घटयत्यलम् ॥५॥

मेरे इस व्रत में दुष्परिणाम लानेवाली मलिनता जरा भी नहीं है। आपका यह अत्यन्त नीच वचन कहना आपकी मानसिक स्थिति को स्पष्ट करता है ॥ ५ ॥

**व्रतमिदं शठकृत्यमुदीरयन्न हृदये क्षणिकामपि ते त्रपाम्।**
**कथमयेन्वभवस्त्वमुदीरणात्प्रथममीदृगवाच्यगिरां सखे ॥६॥**

मित्र, मेरे इस व्रतको शठकृत्य कहते हुए आपने अपने हृदयमें क्षणभरकेलिये भी इस वचनको बोलनेसे पहले लज्जाका अनुभव क्यों नहीं किया ? ॥ ६ ॥

**मम च सम्मतिमत्र विवृण्वता परमविस्मयमूमिमिह त्वया।**
**बलवता बलतोहमवापितस्तत उदेति मनस्यतिवेदना ॥७॥**

मेरी भी इसमें संमति है, ऐसा कहते हुए आपने मुझे बलात्कार से आश्चर्यित कर दिया है। इससे मेरे मन में दुःख होता है ॥ ७ ॥

**बहुविधं समये समयेलिखं यमिह लेखगणं सुविचारितम्।**
**दृढतया मम भक्तिरनूनतां स्पृशति तत्र कुरुष्व विचारणाम् ॥८॥**

समय समय पर मैंने बिचारपूर्ण जो लेख लिखे हैं मेरी भक्ति उनपर आज भी दृढ़ है। आप इसका विचार करें ॥ ८ ॥

**अथ कृतानि भवेयुरुपोषणान्यवशतामुपकुस्य मया यदि।**
**भवति हेतुरवश्यमुपस्कृतः स इह लेखगणो लिखितोखिलः ॥९॥**

पूर्वमें जितने भी उपवास लाचार होकर मैंने किये होंगे उनमें भी वह सब मेरे लिखे गये हुए लेख ही अवश्य कारण होंगे ॥ ९ ॥

**अथ मया विषये समुपस्थिते लिखितमेव पुनः पुनरेव तत्।**
**पठितमस्ति न वेति समं त्वया कथमपीदमलं नहि बोधितुम् ॥१०॥**

प्रस्तुत विषयमें मैंने बार बार लिखा है। उन सबको आपने पढ़ा है या नहीं, यह मैं किसी प्रकार नहीं जान सकता ॥ १० ॥

भवतु तत्र मम त्रुटिरीक्षिता यदि च कापि निदर्शय तामिति ।
त्वयि निवेदयता न मया मनो मम कथंचन गोपितमण्वपि ॥११॥

यदि उसमें आपने कोई त्रुटि देखी हो तो उसे बताइये, यह बात मैंने आप से कही है। मैंने कुछ छिपाया नहीं है ॥ ११ ॥

विकृतवृत्तनिवेदनपत्रिका न हि यदि प्रमितिं जनयन्ति मे ।
भवति नैव कदाप्यनुदारता मम कथंचन कैरपि साधिता ॥१२॥

यदि विकृत समाचारोंके कहनेवाले पत्र मुझे सत्य ज्ञान नहीं करा सकते तो इससे कोई मेरी अनुदारता सिद्ध नहीं कर सकता ॥ १२ ॥

मयि तथैव परेषु सुनेतृषु श्रयसि यानगुणान्निखिलान्न तान् ।
भवसि संप्रतिपालयितुं क्षमो विगुणहेतुभिरत्र निदर्शितैः ॥१३॥

आप मुझमें और दूसरे महान् नेताओंमें जो दोष देख रहे हैं उन सबको आप दिखाये हुए दुष्ट हेतुओं से सिद्ध नहीं कर सकते हैं ॥ १३ ॥

त्वमनुकम्पितुमालयमन्त्रिणः प्रवचनं मयि यत्प्रहिणोषि तत् ।
न हि किमप्यभिसाधयितुं भवेत्प्रमितिसाधकमत्र न किंचन ॥१४॥

आप मुझे अनुगृहीत करनेके लिये गृहमन्त्रीका जो प्रवचन भेज रहे हैं वह कुछ भी सिद्ध नहीं करेगा। उसमें यथार्थ वस्तुको सिद्ध करनेकेलिये कुछ नहीं है ॥ १४ ॥

कुपितमानवकृत्यकथानकं कथयता भवता नहि साधकम् ।
किमपि सन्निहितं नहि तद्भवेत्सुनिपुणं तव पक्षसमर्थनम् ॥१५॥

क्रोधसे भरे हुए लोगोंकी कथा कहते हुए आपने उसमें कुछ प्रमाण तो बताया ही नहीं है। अतः उससे आपके पक्ष का अच्छे प्रकार से समर्थन नहीं होता है ॥ १५ ॥

नहि कृतं स्खलितस्य परीक्षणं श्रुतमथो न तदीरितमुत्तरम् ।
बत तथाप्यभवन्परिदण्डिता बहव एव महापुरुषाः स्त्रियः ॥१६॥

अपराध की परीक्षा आपनेकी नहीं। उनका जवाब आपने सुना नहीं। खेद है कि तोभी कितने ही महापुरुषों और स्त्रियोंको दण्ड दिया गया ॥ १६ ॥

**यदि मयैव भवान्परिपृच्छ्यते नरपतेरधिकारभुवं भजन्।**
**किमिति सा जनता भवतार्दिता न हि भवेदपराध उपार्जितः॥१७॥**

यदि मैं ही राजाके प्रतिनिधि आपसे पूछूँ कि आपने जनताको क्यों हैरान किया तो मुझे कोई अपराध नहीं लगेगा ॥ १७ ॥

**न सुधियां प्रतिपत्तुमवेक्ष्यते तव दले किमपीति विचित्रता।**
**किमपि गद्यमिति प्रणिगद्यते भवति न प्रमितं किमपीह ते॥१८॥**

आश्चर्य है कि बुद्धिमान स्वीकार कर सकें, ऐसी कोई भी वस्तु आपके पत्रमें नहीं दीख पड़ती है। कुछ भी कहना चाहिये, इसीलिये आप बोलते हैं। नहीं तो आपके इस पत्रमें प्रमाणित वस्तु कुछ नहीं है ॥१८॥

**यदि महासमितेः सदसः स्त्रियां त्वमपराधमवेक्षस एव तत्।**
**नयपथेन परीक्ष्य गुणागुणं किमिति सा भवतात्र न दण्ड्यते ॥**

यदि महासमितिके सदस्यकी स्त्रीको आप अपराधिनी समझते हैं तो कायदेके अनुसार दोष-गुणकी परीक्षा करके आप उसे दण्ड क्यों नहीं देते हैं ? ॥ १९ ॥

**यदि तया कृतमेव सुदुष्कृतं भवति कारणमत्र च बन्दिता।**
**भरतभूमिसुतासुतसन्नृणां किमपि वेद्यमिहास्ति न चापरम्॥२०॥**

यदि उस स्त्रीने दुष्कर्म किया ही हो तो उसमें कारण केवल भारतके अनेक नर-नारियों को पकड़कर जेलमें भरना ही है। दूसरा कोई कारण नहीं ॥ २० ॥

**कथयसि त्वमघं यदनारतं नयगृहेषु भवेत्प्रमितं न वा।**
**इदमपि प्रथमेन विचार्यतां निखिलनीतिसमाजविदा त्वया॥२१॥**

जिसको आप रातदिन अपराध कह रहे हैं, वह न्यायालयमें प्रमाणित होगा भी या नहीं, इसे भी आप पहलेसे ही विचार लें। आप तो सर्व नीतिके जाननेवाले हैं ।।२१।।

तदपराधनिवेदकमस्ति यत्प्रमितिसाधकपुञ्जमथ त्वयि ।
सपदि तन्नय लोकपुरो यतो न नियतिर्वश एव च कस्यचित् ।।

अपराध बतानेवाली और सचाईको साबित करनेवाली जो चीज आपके पास है उसे प्रजाके आगे रखें। क्योंकि किसीका भाग्य वशमें नहीं ही है। अर्थात् यदि वह मर गया तो उसे आप झूठे कारणोंसे कलङ्कित ही करते रहेंगे। अतः जीते जी निर्णय हो जाना चाहिये ।।२२।।

सविनयं नृपशासनभञ्जनं स्थितवदेव सुहृत्त्वसमुद्गके ।
सुनिपुणं भवता यदि वीक्ष्यते फलमवश्यमलं परिलभ्यते ।।२३।।

सविनय आज्ञाभङ्ग यह तो सन्धिसम्पुटमें है ही। यदि आप अच्छी तरहसे देखेंगे तो अवश्य फल प्राप्त होगा ।।२३।।

प्रथममेव तदा परिमोचिता निगडिताः सकला हि सदाग्रहाः ।
अभवदेव तदा क्षतिपूरणं निरवशेषसदाग्रहिणां सखे ।।२४।।

जो सत्याग्रही पहले पकड़े गये थे सबके सब छोड़ दिये गये तथा सभी सत्याग्रहियोंकी क्षतिपूर्ति भी की गयी ।।२४।।

इदमभून्निखिलं परिशोधनं तदनुधावति सन्धिवचोन्वयम् ।
न मनुषे तदिति क्षिपतेद्य मां परमदुर्गमविस्मयसागरे ।।२५।।

यह सब जो परिशोधन हुआ वह उसी सन्धिके अनुसार। आप उसे नहीं मानते हैं इससे मुझे महान् आश्चर्य होता है ।।२५।।

विशसनादिकहानपुरस्सरं भवति चेन्नृपशासनभञ्जनम् ।
भवति तत्सितशासनसम्मतं किमिति तत्र तवाक्षिनिमीलनम् ।।२६।।

हिंसा आदिके बिना यदि राजाज्ञाभङ्ग किया जावे तो वह अंग्रेजी राज्यको सम्मत है। आप आँखमिचौनी क्यों कर रहे हैं? ।।२६।।

सततमेव निषेव्यमहिंसनं जनवधोभिमतोस्ति न कर्हिचित् ।
इति मया बहुशः कथितं तदा कथय केन मतं मम हिंसनम् ॥२७॥

मैंने तो अनेक बार कहा है कि सदा अहिंसाका पालन करना चाहिये । किसी मनुष्यका वध कभी अभिमत नहीं है । आप ही कहें कि हिंसा मुझे किस रीति से प्रिय है ? ॥२७॥

प्रहरणं निरघेषु जनेषु नो नृपजनाहतिमप्यनुमोदये ।
भवति यच्चरितं कुपितेन वा मम भवेदभिमान्यपदं न तत् ॥२८॥

मैं निरपराधियोंके वधका और सर्कारी आदमियोंके भी वधका अनुमोदन नहीं करता हूँ । क्रोधमें आकर जो किया गया हो उसे भी मेरा अभिमत न माना जावे ॥२८॥

यदि कथञ्चिदहिंसकमार्गतो विचलितोत्र भवामि तदा तव ।
परिहृतैव भवेत्प्रियमित्रता प्रतिवचोस्त्विवति मे बत ते गिराम् ॥२९॥

यदि मैं किसी प्रकारसे अहिंसक मार्गसे अलग हो जाऊँ तो उस समय मैं आपकी मैत्री भी छोड़ दूँगा । दुःखके साथ मेरा यह उत्तर है आपकी बातोंका ॥२९॥

न हि किमप्यवशिष्यत उत्तमं मम कृते सुखदं तनु वर्त्म तत् ।
अवशतः प्रविशामि निरन्नताप्रबलदावमुखं शमकाम्यया ॥३०॥

मेरे लिये कोई उत्तम, सुखद, छोटा मार्ग रह नहीं गया है अतः लाचार होकर उपवासरूप महादावानलमें शान्तिकेलिये प्रवेश करता हूँ ॥ ३० ॥

तव मतेयमुपोषणमालिकाग्रह इहानमयेत्सुफलं न हि ।
मम मते निखिलाघनिवारणे भवति हेतुरयं परमोत्तमः ॥३१॥

आपके मतमें मेरे उपवासोंकी यह माला कोई सुफल नहीं देगी । मेरे मतमें यह सब दोषोंकी निवृत्तिमें सर्वोत्तम कारण है ॥३१॥

यदिह नोधिगतं तव संनिधौ भवमहाधिपतिर्वितरिष्यति ।
तदिति विश्वसिमि प्रबलं सखे परमहर्षभृतो हितपस्यया ॥३२॥

आपके पाससे जो मुझे नहीं मिला है उसे जगत्का नाथ मुझे देगा ऐसा मुझे प्रबल विश्वास है । अतः मैं तो तपस्यासे परम प्रसन्न हूँ ॥३२॥

यदि शरीरमिदं व्यसुतां व्रजेद् गतवतो मम तद्व्रतवर्त्मना ।
प्रभुपदेषु लभेय महोन्नतां स्थितिमितीदमपीह मनीषितम् ॥३३॥

यदि मैं उपवासमें ही रहूँ और मेरा यह शरीर चला जाय तो भगवान्के चरणोंमें महोन्नत पद मैं प्राप्त करूँगा, यह भी मेरी इच्छा है ॥ ३३ ॥

त्वमसि भूमिपतेः प्रतिहस्तकः परमहं निखिलावनिसेवकः ।
मम भुवो जनता जगतोपि सा दयित वेत्स्यति नौ हि बलाबलम् ।

आप राजके प्रतिनिधि हैं, मैं समस्त जगत्का सेवक हूँ । मेरे देश-की जनता और सारे जगत्की भी जनता मेरे और आपके बलाबलको समझेगी ही ॥३४॥

एवमयं श्रीयतिपतिरात्मन्यास्थितभावं शुचिमुपनीय ।
पत्त्रपुटेस्मिन्भयरतिहीनः प्रैषिषदर्वाग् लिनलिथगों तत् ॥३५॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
सप्तविंशः सर्गः

इस प्रकारसे श्री महात्माजीने अपने हृदयके पवित्र भावको निर्भयताके साथ पत्रमें लिखकर वाइसरायके पास भेज दिया ॥ ३५ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञराष्ट्रभाषाटीकायां
सप्तविंशः सर्गः



# अष्टाविंशः सर्गः

प्राकाश्यमुपयातेषु पत्रेष्वेतेषु सर्वतः ।
हिन्दशासनगेहस्य सचिवो मौनमाच्छिनत् ॥ १ ॥

जब यह पत्र सर्वत्र प्रकाशित हो गया तब भारतसर्कारके गृहसचिवने अपना मौन छोड़ दिया ॥ १ ॥

तेन स्वीयाधिकारेण सर्वपूज्ये महात्मनि ।
प्रेषितं पत्रमेकं तन्निम्ननिर्दिष्टरूपकम् ॥ २ ॥

उसने अपने अधिकारसे पूज्य श्री महात्माजीके पास निम्नलिखित पत्र भेजा ॥ २ ॥

अमुक्यां हि दशायां त्वमेकविंशतिवासरम् ।
उपवासं समाहर्तुं लिन्‌लिथगों व्यजिज्ञपः ॥ ३ ॥

आपने अमुक परिस्थितिमें २१ दिन तक उपवास करनेकी सूचना श्रीलिन्‌लिथगोके पास भेजी है ॥ ३ ॥

तस्मादिमं समाचारं हिन्दशासनमाश्रृणोत् ।
एतस्मिन्विषये तस्य निर्णयः प्रेष्यते मया ॥ ४ ॥

उनके द्वारा इस समाचारको भारतसर्कारने सुना है । इस विषयमें भारतसर्कारका निर्णय आपके पास भेजता हूँ ॥ ४ ॥

उपवासग्रहश्चैष दुर्निवार्यो भवेद्यदि ।
यथाकालमसौ वृत्तपत्रेषु स्थानमेष्यति ॥ ५ ॥

यदि उपवासका करना दुर्निवार्य हो तो समयपर इसे समाचारपत्रोंमें प्रकाशित करूँगा—कराऊँगा ॥ ५ ॥

त्वदीय उपवासोऽसौ रोचते शासनाय नो ।
इत्येतद्भवता बुद्धं स्याद्विज्ञापनयाऽनया ॥ ६ ॥

आपको यह सूचना दी जाती है कि आपका यह उपवास भारत-सर्कारको अच्छा नहीं लगता है ॥ ६ ॥

वक्ष्यमाणमिदं वस्तु त्वां ज्ञापयितुमादिशत् ।
शासनं मां तदायत्तस्तेनेदं ज्ञपयाम्यहम् ॥ ७ ॥

सर्कारने मुझे निम्नलिखित सूचना आपको देनेको कहा है। मैं तो उसका आज्ञाकारी हूँ अतः सूचना देता हूँ ॥ ७ ॥

ओपवासं पृथक्स्थाने कारागाराद्यथेप्सितम् ।
वासाय शक्यते गन्तुं विनिर्मुक्तेन बन्धनात् ॥ ८ ॥

यदि आप उपवासतक जेलसे अलग रहना चाहें तो बंधनमुक्त होकर बाहर जा सकते हैं ॥ ८ ॥

दिवसेषूपवासस्य स्वेच्छया स्थाननिर्णये ।
प्रतिबन्धो न कोऽपि स्यादिति शासनमिच्छति ॥ ९ ॥

सर्कारकी इच्छा है कि उपवासके दिनोंमें स्वतन्त्र स्थाननिर्णय करनेमें आपपर कोई प्रतिबन्ध न रखा जाय ॥ ९ ॥

आगाखानस्य तत्सौधं परित्यज्य यथेच्छया ।
कर्तुं वासस्य शक्नोषि व्यवस्थां त्वं यथारुचि ॥ १० ॥

आगाखानके महलको छोड़कर आप स्वेछासे इच्छानुकूल निवासस्थानकी व्यवस्था कर सकते हैं ॥ १० ॥

आनकूल्यमिदं दत्तं शासनेन त्वया न चेत् ।
उपभुक्तं भवेत्तेन मार्मिकः खेद उद्भवेत् ॥ ११ ॥

सर्कार द्वारा दी गयी इस अनुकूलताका यदि आप उपयोग नहीं करेंगे तो मार्मिक दुःख होगा ॥ ११ ॥

शासनेन ततः स्वस्य निर्णयस्य प्रकाशनम् ।
न्यौन्याधिक्यादि सम्पाद्य वृत्तपत्रेषु वाञ्छ्यते ॥ १२ ॥

इसलिये सर्कार अपने निर्णयको थोड़ा न्यूनाधिक करके समाचारपत्रोंमें छपाना चाहती है ॥ १२ ॥

हिन्दशासनसूत्रस्य चिन्ताशे ये स्त उद्गते ।
गाम्भीर्येण पुनर्घोषं तस्य कुर्यामितोहितम् ॥ १३ ॥

भारतसर्कारको जो चिन्ता और आशा पैदा हुई है, गम्भीरताके साथ उसकी पुनः घोषणा करूँ, ऐसी इच्छा है ॥ १३ ॥

पौर्वापर्य्यं विचार्यैव देहेन्द्रियनिरोधने ।
उपवासे प्रवृत्तः स्या इतिशासनकामना ॥ १४ ॥

पूर्वापर विचार करकेही देह और इन्द्रियको रोकनेवाले उपवासमें आप प्रवृत्त हैं, यह सर्कारकी इच्छा है ॥ १४ ॥

उपवासपरा बुद्धिर्निवर्तेत तवाद्य चेत् ।
निर्णयस्य प्रकाशस्य तस्य हेतुर्न विद्यते ॥ १५ ॥

यदि आप उपवासके निर्णयको बदल दें तो पत्रों में निर्णय प्रकाशित करानेका कोई कारण नहीं रह जाता ॥ १५ ॥

एतत्पत्रोदरस्थस्य वृत्तस्य परिशीलनात् ।
अनुतप्तो यतीन्द्रोसा एतदुत्तरमग्रहीत् ॥ १६ ॥

इस पत्रके समाचारका मननकरके श्रीमहात्माजीने दुःखित होकर यह उत्तर भेजा ॥ १६ ॥

आम्रेडनं तवैतस्य पत्रस्याकुर्वि . सर्वशः ।
उपवासनिरोधस्य कारणं किञ्चिदत्र नो ॥ १७ ॥

आपके इस पत्रको मैंने कई बार पढ़ा है । उपवास रोकनेका कोई कारण नहीं है ॥ १७ ॥

कस्मिन्नवसरे तस्य निरोधः सम्भविष्यति ।
इति विस्पष्टमाचक्ष्व भूपप्रतिनिधेर्दले ॥ १८ ॥

यह उपवास किस परिस्थितिमें बन्द हो सकता है इसे मैंने वाइसरायके पत्रमें स्पष्ट लिख दिया है ॥ १८ ॥

यदि सामयिकी मुक्तिरानुकूल्याय मे भवेत् ।
युष्माकं शोभतां सा तु कथञ्चिन्मे न रोचते ॥ १९ ॥

यदि मेरी अनुकूलताकेलिये अमुक समयकेलिये मेरा छुटकारा होता हो तो यह आपको अच्छा लगता होगा, मुझे नहीं ॥ १९ ॥

बन्दीकृतोऽपि कारायां मनस्तोषेण पूर्णतः ।
उपवासं करिष्यामि न हनिष्यामि गौरवम् ॥ २० ॥

कैदी रहकर भी सन्तोषके साथ जेलमें ही मैं उपवास करूँगा। अपने गौरवको नष्ट नहीं करूँगा ॥ २० ॥

आनुकूल्याय स्वस्यैव यदि शासनमिच्छति ।
कारातो मां पृथक्कर्तुं न मे तच्चापि रोचते ॥ २१ ॥

यदि अपनी ही अनुकूलताकेलिये सर्कार मुझे जेलमेंसे छोड़ना चाहती है, तो यह भी मुझे पसन्द नहीं है ॥ २१ ॥

अहं कामयमानोऽपि सदा तदनुकूलताम् ।
अङ्गीकर्तुं न वाञ्छामि तस्याद्य वशवर्तिताम् ॥ २२ ॥

मैं सदा सर्कारकी अनुकूलता चाहता रहता हूँ। परन्तु आज मैं इस वशमें रहनेको स्वीकार नहीं करूँगा ॥ २२ ॥

इदं वक्तुं तु शक्नोमि सप्रतिज्ञं निजेच्छया ।
यावच्छक्यं करिष्यामि नो शासननिपीडनम् ॥ २३ ॥

इतना तो मैं प्रतिज्ञापूर्वक कह सकता हूँ कि अपनी इच्छासे मैं यथाशक्ति सर्कारको दुःखी नहीं करूँगा ॥ २३ ॥

शासनस्याहमेकैकं दुःखहेतुमपोहितुम् ।
यावच्छक्ति चरिष्यामि मनःसंयममन्वहम् ॥ २४ ॥

सर्कारके एक एक दुःखके कारणको मैं अपनी शक्तिके अनुसार दूर करनेको मनपर संयम रखूँगा ॥ २४ ॥

उपवासेन या काचिच्छासनप्रतिकूलता।
अकस्मादुपतिष्ठेत तत्र मे निरुपायता ॥ २५ ॥

मेरे उपवाससे सर्कारको अकस्मात् कोई प्रतिकूलता प्राप्त हो तो उसमें मेरा कोई उपाय नहीं है ॥ २५ ॥

कारागाराद्विनिर्मुक्तो भवेयं यदि नो तदा।
चरणस्योपवासस्य वासना हृदि विद्यते ॥ २६ ॥

यदि मैं जेलमेंसे न छूटूँ तो उपवास करनेकी इच्छा हृदयमें बनी हुई है ॥ २६ ॥

सर्वदेवाऽधुना चापि स्वातन्त्र्येऽपि कदाचन।
उपवासप्रसङ्गः स्यात्स न वर्ज्यो भवेन्मम ॥ २७ ॥

सदाके समान आज भी स्वतन्त्रता मिलनेपर भी—जेलसे बाहर रहनेपर भी यदि उपवासका प्रसंग आवे तो मैं उसे टाल नहीं सकूँगा ॥ २७ ॥

भूपप्रतिनिधौ प्रेष्य पत्त्राणां निचयं मया।
हेतुरुक्तो व्रतस्यास्य मुक्ते मयि निवर्तते ॥ २८ ॥

वाइसरायके पास मैंने पत्रोंके द्वारा इस उपवासका हेतु स्पष्ट कर दिया है। यदि मैं छोड़ दिया जाऊँ तो उपवास भी बन्द हो जायगा ॥ २८ ॥

परिस्थितिविचारेण कर्तव्यस्य विनिर्णयः।
मया भूयोपि कर्तव्यः कारातः प्राप्तमुक्तिना ॥ २९ ॥

यदि मैं जेलसे छूट जाऊँगा तो परिस्थितिका विचार करके पुनः कर्तव्यका निर्णय करूँगा ॥ २९ ॥

मिथ्या यं कमपि व्याजं विरचय्य न बन्धनात्।
अधिगन्तुमितो मुक्तिं कामयेऽहं कदाचन ॥३०॥

कोई झूठा बहाना बनाकर, जेलमेंसे छूट जानेकी मेरी कोई भी इच्छा नहीं है ॥ ३० ॥

विविधैर्विविधाकारैर्मद्विरोधे विरोधिभिः ।
मिथ्यावचनविन्यासैर्जीवनं नीरसं कृतम् ॥ ३१ ॥

विरोधियोंने भिन्न भिन्न प्रकारसे मेरे विरोधमें बातें उड़ा उड़ाकर मेरे जीवनको नीरस बना दिया है ॥ ३१ ॥

सत्याहिंसाव्रतद्रोहो न कदापि भवेन्मया ।
सम्पादित इतीच्छातः प्राणधारणमिष्यते ॥ ३२ ॥

सत्य और अहिंसाव्रतका द्रोह मुझसे कभी भी न होगा इसी इच्छासे मैं जी रहा हूँ ॥ ३२ ॥

निस्तमस्कस्य मे यावद्यावद्बाह्यं तमो मनः ।
आच्छादयति मे श्रद्धां भजे तोषं प्रकाश्य ताम् ॥ ३३ ॥

मैं तमोगुणसे पृथक् हूँ । तो भी जब जब बाह्य तम मेरे मनको और श्रद्धाको ढाँकता है तब तब मैं उसे प्रकाशित करके ही संतोष पाता हूँ ॥ ३३ ॥

एतत्पत्रे विविक्तस्य विषयस्य विनिर्णये ।
शैघ्र्यं कारयितुं नाहं शासनेनेह कामये ॥ ३४ ॥

इस पत्रमें जो विषय है उसके निर्णयमें मैं सर्कारसे जल्दी नहीं कराना चाहता ॥ ३४ ॥

मया ज्ञातमिदं पत्रं तव शैघ्र्येण हेतुना ।
दूरभाषणयन्त्रेण प्रेषितं शासकाज्ञया ॥ ३५ ॥

मैंने यह जान लिया है कि आपने शीघ्रताके कारण इस पत्रको सर्कारकी आज्ञासे रेडियोंके द्वारा भेजा है ॥ ३५ ॥

पर्याप्तोऽवसरो वः स्याल्लब्ध आलोचितुं हि तम् ।
इति स्थगयितुं शक्यं दिनमेकं व्रतं मया ॥ ३६ ॥

आपको इस विषय में विचार करनेकेलिये पूरा समय मिले, इसकेलिये मैं उपवासको एकदिनकेलिये रोक सकता हूँ ॥ ३६ ॥

प्रसेधयितुमिष्टं यच्छासनीयं निवेदनम् ।
विषये तस्य वक्तव्यं विद्यते मे न किञ्चन ॥ ३७ ॥

सर्कार अपने निवेदनको प्रसिद्ध कराना चाहती है, इस विषयमें मुझे कुछ नहीं कहना है ॥ ३७ ॥

स्वमभिप्रायमत्राहं व्यञ्जयितुं क्षमो यदि ।
भवेदेतेन मेऽन्याय इत्येवात्र विवक्षितम् ॥ ३८ ॥

मैं यदि अपना अभिप्राय इस विषयमें व्यक्त करूँ तो इतना ही कह सकता हूँ कि इससे मेरेलिये अन्याय होगा ॥ ३८ ॥

पत्त्राणां प्रतिपत्त्राणां कार्त्स्न्येनैव प्रकाशनम् ।
युक्तं स्यात्तेन सर्वेषां सद्धितं वोऽपि मेऽप्यथ ॥ ३९ ॥

पत्रव्यवहारको यदि पूर्णरूपसे प्रकाशित किया जाय तभी ठीक होगा। उससे सबका, आपका और मेरा भी हित होगा ॥ ३९ ॥

स्वातन्त्र्येण प्रक्लृप्तः स्यात्सर्वैरपि जनैः स्वयम् ।
विषयेऽस्मिन्नभिप्रायः स च तोषकरो भवेत् ॥ ४० ॥

इस विषय में सब्लोग स्वतन्त्ररूपसे अपना अभिप्राय बना सकेंगे और वह संतोषप्रद होग ॥ ४० ॥

जगद्वन्द्यातिवन्द्यस्य पत्त्रमेतदवाप्य सः ।
रिचर्डः प्रैषात्पत्त्रं तदिदं चरमं च तत् ॥ ४१ ॥

जगद्वन्द्य श्रीमहात्मजीके इस पत्रको पाकर रिचर्डने अन्तिम पत्र भेजा ॥ ४१ ॥

अष्टम्यां फेब्रुवर्यास्ते लिखितं पत्त्रमागतम् ।
इति ज्ञपयितुं तुभ्यमाज्ञप्तः शासकैरहम् ॥ ४२ ॥

८ वीं फ़र्वरीका लिखा हुआ आपका पत्र मिला, इतनी सूचना देनेकेलिये सर्कारने मुझे आज्ञा दी है ॥ ४२ ॥

भूपप्रतिनिधेरग्रे समितेस्तस्य चापि तत् ।
त्वदीयमभवत्पत्त्रमक्षरशः प्रवाचितम् ॥ ४३ ॥

वाइसराय और उनकी सभाके सामने आपका पत्र अक्षरशः पढ़ा गया था ॥ ४३ ॥

विनयेनापि विज्ञप्तो निर्णयस्तव वस्तुतः ।
सभ्यानां शासनस्यापि मर्मावित्स प्रकल्पितः ॥ ४४ ॥

यद्यपि आपने अपने निर्णयको विनयसे प्रकाशित किया है तो भी उससे सर्कारकी और वायसरायकी सभाके सभ्योंको भी हार्दिक दुःख हुआ है ॥ ४४ ॥

अद्यापि शासनं वष्टि बन्धनान्मोचनं तव ।
उपवासस्य निर्विघ्नसिद्धये केवलं किल ॥ ४५ ॥

आज भी सर्कार चाहती है कि केवल आपके उपवासकी निर्विघ्न समाप्तिकेलिये सर्कार आपको छोड़ दे ॥ ४५ ॥

नोरीकरोषि चेल्लाभमेनं स्थातुं च वाञ्छसि ।
अधिकारं तदा सर्वस्त्वयि भारो भविष्यति ॥ ४६ ॥

यदि आप इस लाभका स्वीकार नहीं करेंगे और जेलमें ही रहना चाहेंगे तो सब भार आपपर ही रहेगा ॥ ४६ ॥

उपवासस्य कालेषु तव शुश्रूषणादिषु ।
स्वातन्त्र्येण नियोक्तव्याः शरीरपरिचारकाः ॥ ४७ ॥

उपवासके समय सेवा करनेवालोंको आप अपनी इच्छानुसार नियुक्त कर सकेंगे ॥ ४७ ॥

वैद्यानामपि ये तावद्यावन्तः सन्त्वपेक्षिताः ।
स्वाधिकारेण संरक्ष्यास्ते तावन्तोऽपि सर्वथा ॥ ४८ ॥

वैद्योंमेंसे जिन और जितने वैद्यों—डाक्टरोंकी अपेक्षा हो आप उनको और उतनोंको अपने अधिकारसे रख सकते हैं ॥ ४८ ॥

शासनानुज्ञयैव स्यादुपवासदिनेषु ते ।
सर्वेषामेव मित्राणां त्वया सह समागमः ॥४९॥

उपवासके दिनोंमें सर्कारकी आज्ञासे ही आपके मित्रोंके साथ आपका सम्मेलन ( मुलाकात ) होगा ॥ ४९ ॥

अस्यां परिस्थितौ स्वेच्छं शासनं तद्यथोचितम् ।
निवेदनं प्रकाशार्थं वृत्तपत्त्रेषु नोदयेत् ॥५०॥

इस परिस्थितिमें सर्कार स्वेच्छानुसार यथोचित निवेदन समाचार पत्रोंमें भेज सकेगी ॥ ५० ॥

तस्मिन्निवेदनदले समयानुसारि,
स्यादेव वस्तुपरिवर्तनमाहितं तत् ।
न स्याद्भ्रमो भगवते परिबोधनाय,
विज्ञप्तिदानमुचितं प्रतिभासितं मे ॥५१॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
अष्टाविंशः सर्गः

उस निवेदनपत्रमें समयके अनुसार घटनाओंका परिवर्तन किया जायगा । आपको उसके पढ़नेपर भ्रम न हो, अतः इसकी सूचना देना मुझे उचित हुआ है ॥ ५१ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञराष्ट्रभाषाटीकायां
अष्टाविंशः सर्गः

# एकोनत्रिंशः सर्गः

अथ फेब्रुवरीमासे दशम्यां बुधवासरे ।
गुणवेदग्रहब्रह्ममिते यैशववत्सरे ॥१॥
पूनाख्ये नगरे श्रीमानागाखांभवने भजन् ।
बन्दितामुपवासाग्नावात्मानं प्राक्षिपद्यतिः ॥२॥

ता० १०-२-१९४३ ई० बुधवार को श्रीमहात्माजीने पूनामें आगाखान महलमें कैदी रहते हुए उपवासका आरम्भ किया ॥ १ ॥ २ ॥

नैर्मल्यं स्वीयमाख्यातुमुपवासोत्कटानलम् ।
प्रविशामि सुखेनाद्य वीतचिन्तोऽथ निर्भयः ॥३॥

उन्होंने कहा अपनी पवित्रताको प्रकट करनेकेलिये मैं उपवासरूप भयङ्कर अग्निमें निश्चिन्त और निर्भय होकर प्रवेश कर रहा हूँ ॥ ३ ॥

यदि पारं गमिष्यामि महतोऽस्मात्परीक्षणात् ।
श्रेयः स्यादस्य देशस्य मम चापि निरन्तरम् ॥४॥

यदि मैं इस महती परीक्षामेंसे पार हो गया तो इस देशका और मेरा भी हित होगा ॥ ४ ॥

यदि जीवनदीपो मे शान्तिमीयात्तपस्यतः ।
हन्त तर्हि जगन्नाथमुपैष्यामि निरभ्रकः ॥५॥

और यदि उपवास करते करते मेरा जीवन दीपक बुझ गया तो भगवान्को प्राप्त करूँगा ॥ ५ ॥

समायास्यत्सु कालेषु भाविन्यो जगतः प्रजाः ।
शासनस्य प्रतिनिधेः स्थेयाः स्युर्मेऽपि संविदः ॥६॥

भविष्यमें जगत्की भविष्य प्रजा मेरे और वर्तमान सर्कारके विचार-केलिये मध्यस्थ बनेगी ॥ ६ ॥

इत्यादिसूक्तिभिः साधं जगदर्तिहृतीच्छया ।
उपवासानलं घोरं प्राविक्षद्दीनवत्सलः ॥७॥

इन सुन्दर वचनोंके साथ जगत्‌की पीड़ाको दूर करनेकी इच्छासे श्रीमहात्माजीने उपवासरूप अग्निमें प्रवेश किया ॥ ७ ॥

उद्बभौ सहसा लोके महान् कोलाहलस्ततः।
त्रिलोकी च व्यकम्पिष्ट व्यकम्पत वसुन्धरा॥८॥

संसारमें अकस्मात् कोलाहल उत्पन्न हो गया। तीनों लोक हिल गये। पृथिवी कम्पित हो गयी ॥ ८ ॥

ईशप्रार्थनया सर्वे कुशलं श्रीमहात्मनः।
हार्दिकेनैव भावेनावाञ्छन्नधिवसुन्धरम् ॥ ९ ॥

पृथिवीके सभी लोगोंने भगवान्‌की प्रार्थनाके द्वारा श्रीमहात्माजीके कुशलकी हार्दिक भावसे इच्छा प्रकट की ॥ ९ ॥

श्वेताङ्गशासनं क्रूरं तदानीं क्रूरया गिरा।
स्वसंस्कृतिसदाचारमनुधावदवोचत ॥१०॥

उस समय क्रूर अंग्रेजी सर्कारने अपनी संस्कृति और सदाचारके अनुसार कठोर शब्दोंमें कहा ॥ १० ॥

राजनीतिकमुद्देश्यमधिगन्तुमुपोषणम् ।
यतिना मोहनेनाद्य प्रारब्धं तच्च नोचितम् ॥११॥

राजनीतिक उद्देश्यको पूर्ण करनेकेलिये मोहनदास गांधीने उपवासका आरम्भ किया यह अच्छा नहीं किया॥ ११॥

इदानीं सङ्कटापन्ने काले शस्त्रमभूदृशम्।
उपयोक्तुममंस्तासौ कार्यमावश्यकं बत॥१२॥

खेदकी बात है कि ऐसे संकटपूर्णकालमें उन्होंने इस प्रकारके अस्त्रप्रयोग करनेको आवश्यक कार्य समझा ॥ १२ ॥

स्वयं तेन कृतं यच्च यन्महासभयापि च ।
तद्विरोधविरोधाय तस्यास्त्येतदुपोषणम् ॥१३॥

जो कुछ उन्होंने स्वयं किया और जो कुछ महासभाने किया उसका जब सर्कारने विरोध किया तो सर्कारके विरोधका विरोध करनेकेलिये यह उपवास है ॥ १३ ॥

शासनं त्यक्तुमीहेत नीतिं स्वीयां न तेन तत् ।
उपवासं तृणायैतं मन्यते गतहेतुकम् ॥१४॥

सर्कार अपनी नीतिको इस उपवासके कारण छोड़ना नहीं चाहती है । इस निरर्थक उपवासका कोई मूल्य नहीं है ॥ १४ ॥

अवाञ्छीच्छासनं मुक्तं कर्तुं तं वृद्धकायकम् ।
तेषूपवासकालेषु न परं तदमंस्त सः ॥१५॥

उपवासके दिनोंमें उन्हें वृद्ध समझकर सर्कार छोड़ना चाहती थी परन्तु उन्होंने नहीं माना ॥ १५ ॥

अतः कारागृहे वासमुपवासपरायणः ।
वितन्वन्नात्मनो भारं केवलं विषहेत सः ॥१६॥

अतः जेलमें उपवास करते हुए वह अपना भार अपने आप उठावें ॥ १६ ॥

आपतेत्काचिदापत्तिस्तर्कितातर्किताऽथ वा ।
दूष्यं न शासनं तत्र शस्यो दूष्योप्यसाविति ॥१७॥

यदि अकस्मात् ज्ञात अज्ञात कोई आपत्ति आ जाय तो सर्कारको दोष नहीं देना चाहिये । निन्दा या स्तुति उन्होंकी करनी चाहिये ॥ १७ ॥

डाक्टरविधानचन्द्ररायोऽसौ शासनाज्ञया ।
नियुक्तो रक्षणे तस्य तदानीं यतिभूभृतः ॥१८॥

सर्कारकी आज्ञासे डाक्टर श्रीविधानचन्द्रराय श्रीमहात्माजीकी देखरेखमें नियुक्त हुए ॥ १८ ॥

डाक्टरसुशीलया कश्चिदेकोऽन्यो डाक्टरस्तदा ।
प्रार्थितः प्रहितस्तेन श्रीमद्डाक्टर.गिल्डरः ॥ १९ ॥

श्रीमती डाक्टर सुशीलाजीने एक दूसरे डाक्टरकेलिये भी प्रार्थना की । सर्कारने डाक्टर गिल्डरको भेजा ॥ १९ ॥

एषोऽपि च महावैद्यः कारागारे निपातितः ।
बन्दी सन्नेव पूनायां महात्मसविधे गतः ॥२०॥

डाक्टर श्रीगिल्डरको भी सर्कारने कैदी बनाकर ही श्रीमहात्माजीके पास भेजा ॥ २० ॥

वृत्तपत्त्राणि सर्वाणि भारतीयानि शासनम् ।
विमुक्तिं यतिराजस्य प्रार्थयन्तानिशं हठात् ॥२१॥

भारतके सभी समाचारपत्रोंने महात्माजीको जेलसे छोड़ देनेकेलिये सर्कारसे प्रार्थना की ॥ २१ ॥

वैदेशिकानि वृत्तान्तपत्त्राण्यपि सदैव तम् ।
बन्धान्मोचयितुं सद्यः प्रार्थयन्तैव शासनम ॥२२॥

विदेशी समाचारपत्रोंने भी उनको छोड़ देनेकेलिये हमेशा सर्कारसे प्रार्थना की ॥ २२ ॥

जोशी मुंशी बनर्जी च हिन्दसेवकसंसदः ।
सदस्यो राव इत्येतैर्यतिमुक्तिरयाच्यत ॥२३॥

जोशी, श्रीकन्हैयालाल मुंशी, बनर्जी तथा इन्डिया सर्विस लीगके सदस्य श्रीरावने भी महात्माजीको छोड़ देनेकेलिये सर्कारसे प्रार्थना की ॥२३॥

श्यामाप्रसादसन्तोषकुमारौ वङ्गभूमिजौ ।
वङ्गधारासभामध्ये याचेते स्म मुचिं यतेः ॥२४॥

श्यामाप्रसाद मुकर्जी, श्रीसन्तोषकुमार, इन दोनोंने भी बङ्गालधारा-सभामें महात्माजीके छुटकारे की माँग की ॥ २४ ॥

सन्मान्यशमशुद्दीन अहमदोऽप्यन्वमन्यत ।
ताभ्यां संमाननीयाभ्यां सार्धमेव मुचिं मुनेः ॥२५॥

श्रीशमशुद्दीन और श्रीअहमदने भी महात्माजीको छोड़देनेका अनुमोदन किया ॥ २५ ॥

पण्डितहृदयनाथकुञ्जरूवासमन्दिरे ।
केन्द्रधारासभासभ्यैर्विषयोऽयं व्यचार्यत ॥२६॥

केन्द्रीय धारासभाके सभ्योंने पण्डित श्रीहृदयनाथ कुंजरूके निवासस्थानपर इस विषयपर विचार किया ॥ २६ ॥

अष्टादश्यां तिथौ तस्य मासस्य समगंसत ।
शतद्वयाधिका मान्या नेतारो हस्तिनापुरे ॥२७॥

फर्वरीकी १८वीं तारीखको दो सौ से अधिक प्रतिष्ठित नेता दिल्ली गये ॥ २७ ॥

हिन्दवो मुसलमानाः पारसीकाः सिताङ्गकाः ।
सम्मिलिता राजधान्यां शोकजर्जरमानसाः ॥२८॥

हिन्दु, मुसलमान्, पारसी, अंग्रेज, सभी शोकाकुल होकर वहाँ इकट्ठे हुए ॥ २८ ॥

समज्यायां महत्यां च प्रस्तावोऽङ्गीकृतोऽभवत् ।
तत्र श्रीमद्यतीन्द्रस्य मुक्तये द्राग्यशस्विनः ॥२९॥

एक बड़ी भारी सभामें दिल्लीमें यह प्रस्ताव पास किया गया कि श्रीमहात्माजीको शीघ्र छोड़ दिया जाय ॥ २९ ॥

प्रस्तावभाषानिर्मातृसंसचासन्प्रतिष्ठिताः ।
विद्वांसो बहवः प्रष्ठा मुसल्मानाश्च हिन्दवः ॥३०॥

प्रस्तावको बनानेवाले बहुत से हिन्दु और मुसलमान अग्रेसर विद्वान् थे ॥ ३० ॥

नेतृसम्मेलनस्यास्य श्रीमांस्तेजबहादुरः ।
आसीत्सभापतिर्मान्यो बुद्धिविद्याविशारदः ॥३१॥

परमबुद्धिशाली माननीय श्रीतेजबहादुरसप्रू इन नेताओंकी सभाके सभापति थे ॥ ३१ ॥

श्रीमाञ्जयकरस्तत्र प्रस्तावं तं समीहितम् ।
उपस्थापयितुं धीमानुदतिष्ठद्विषण्णहृत् ॥३२॥

इस प्रस्तावको सभामें उपस्थित करनेकेलिये दुःखित हृदयसे श्रीमान् जयकर खड़े हुए ॥ ३२ ॥

वाग्मिनां प्रवरो ह्येष संक्षिप्तं भाषणं तदा ।
कृत्वा तात्पर्यवैशद्यं कृतवाञ्छ्रीमहात्मनः ॥३३॥

अतिविद्वान् श्रीजयकरजीने संक्षेपमें एक भाषण दिया और श्रीमहात्माजीके आशयको वहाँ स्पष्ट समझाया ॥ ३३ ॥

श्यामाप्रसादमुखरः श्रीयुतहाजिकासिमः ।
अन्वमोदन्महाराजसिंहः प्रस्तावमीदृशम् ॥३४॥

श्रीश्यामाप्रसाद मुकर्जी, श्रीकासिम हाजी, श्रीमहाराजसिंहने प्रस्तावका इस प्रकार अनुमोदन किया ॥ ३४ ॥

विलिङ्डनकालेजमहाध्यक्षमहोदयः ।
मैकेञ्जी जनलाभाय यतिमुक्तिमयाचत ॥३५॥

विलिङ्डन कालेजके प्रिन्सिपल श्रीमैकेञ्जीने लोगोंके लाभकेलिये महात्माजीकी मुक्तिकी प्रार्थना की ॥ ३५ ॥

अब्दुलहलीम-सरलादेवी-जोशी-महोदयाः ।
श्रीयुताब्दुलकयूमोऽपि प्रार्थयन्त यतेर्मुचिम् ॥३६॥

श्रीअब्दुलहलीम, श्रीसरलादेवी, जोशी, श्रीअब्दुलकयूम, इन्होंने भी महात्माजीके छुटकारेकी प्रार्थना की ॥ ३६ ॥

अहमदसईदोऽपि कुरानज्ञानवान्महान् ।
एतं प्रस्तावमाहर्षादन्वमोदत सर्वथा ॥३७॥

मौलाना अहमद सईदने भी इस प्रस्तावको सहर्ष अनुमोदन दिया ॥ ३७ ॥

हुमायूं कबिरो विद्वान्कलिकातात आगतः ।
हृदयेनाह्लादपूर्णेन प्रस्तावं सोऽन्वमोदत ॥३८॥

श्रीहुमायूँ कबीर कलकत्तेसे आये थे। उन्होंने प्रसन्नहृदयसे इस प्रस्तावका अनुमोदन किया ॥ ३८ ॥

श्रीमद्गगनविहारीमेहता व्यावसायिकः ।
रणदीवो महाबुद्धिरयाचेतां मुचिं यतेः ॥३९॥

व्यापारी नेता श्रीगगनविहारी मेहता और श्रीरणदीवेने भी महात्माजीके छुटकारेकी प्रार्थना की ॥ ३९ ॥

पण्डितहृदयनाथकुञ्जरूर्बुद्धिमद्वरः ।
मुक्तिमैच्छदतीव द्राङ् मोहनस्य महात्मनः ॥४०॥

बुद्धिमानोंमें श्रेष्ठ पण्डित श्री हृदयनाथकुंजरूने अतिशीघ्र श्रीमहात्माजीकी मुक्तिकी प्रार्थना की ॥ ४० ॥

वाइसरायसविधे प्रस्तावः प्रेषितोऽभवत् ।
स परं नाश्रृणोत्किञ्चनावामन्यत तं पुनः ॥४१॥

वह प्रस्ताव वाइसरायके पास भेजा गया। उन्होंने कुछ नहीं सुना। अपमान कर दिया ॥ ४१ ॥

यथा यथा व्यतीतानि प्रभूतानि दिनान्यथ ।
उपवासस्य तस्यात्र वैयग्र्यं वर्धते स्म च ॥४२॥

ज्यों ज्यों उपवासके दिन बढ़ते जाते थे त्यों त्यों लोगोंमें व्यग्रता बढ़ती जाती थी ॥ ४२ ॥

गुरुद्वारेषु सर्वत्र तथा हैन्दवमन्दिरे ।
शान्तये यतिराजस्य परेशप्रार्थनाऽभवत् ॥४३॥

गुरुद्वारोंमें, हिन्दुओंके मन्दिरोंमें, श्रीमहात्माजीकी शान्तिकेलिये भगवान्की प्रार्थना होने लगी ॥ ४३ ॥

श्रीमन्मदनमोहनमालवीयो यतेर्मुचिम् ।
चर्चिलाय समादिक्षद्ब्रिटिशश्रेष्ठमन्त्रिणे ॥४४॥

श्रीपण्डित मदनमोहन मालवीयजीने ब्रिटिश प्रधानमन्त्री चर्चिलसे श्रीमहात्माजीको छोड़ देने को कहा ॥ ४४ ॥

विद्युता वृत्तवाहिन्या चर्चिलं विन्यवेदयत् ।
यदि मुक्तिर्यतेर्नास्ति भवेदेवापदागमः ॥४५॥

तार द्वारा चर्चिलको सूचना उन्होंने दी कि यदि महात्माजीको नहीं छोड़ा गया तो संकट उपस्थित होगा ॥ ४५ ॥

यदि श्रीमन्महात्मासौ दिवं यास्यत्युपोषणैः ।
हिन्दब्रिटेनयोर्मध्ये मैत्री छिन्ना भविष्यति ॥४६॥

यदि उपवासमें ही श्रीमहात्माजी परलोक सिधार जायँगे तो भारत और ब्रिटेनकी मैत्री समाप्त हो जायगी ॥ ४६ ॥

वाइसूरायेऽपि स श्रेयःसाधने निरतः शमी ।
तादृगेव तडिद्वृत्तं प्रैषयद्ब्राह्मणोत्तमः ॥४७॥

कल्याणसिद्ध करनेमें लगे हुए श्रीमालवीयजीने वाइसरायको भी इसी आशयका तार भेजा ॥ ४७ ॥

नेतृसम्मेलनेनामुं प्रस्तावं स्वीकृतं तदा ।
प्रैषयच्चर्चिलस्यापि संमेलनसभापतिः ॥४८॥

नेताओंके सम्मेलनके सभापति महोदयने उस स्वीकृत प्रस्तावको चर्चिलके पास भेज दिया ॥ ४८ ॥

आर्थरग्रीनवुड्पार्श्वे श्रीपर्सी हैरिसस्य च ।
सविधे प्रेषितः सोऽसौ प्रस्तावो मुक्तये यतेः ॥ ४९ ॥

आर्थरग्रीनवुड, पर्सी हैरिसके पास भी वह प्रस्ताव भेज दिया गया ॥ ४९ ॥

अम्रीकायाः प्रतिनिधिः फिलिप्सो भारतेऽभवत् ।
तदानीं तस्य पार्श्वेऽपि प्रस्तावः प्रहितोभवत् ॥ ५० ॥

उन दिनों अमेरिकाके प्रतिनिधि श्रीफिलिप्स भारतमें ही थे। उनके पास भी वह प्रस्ताव भेजा गया ॥ ५० ॥

नैष्फल्यमेव संजातं प्रयत्नानां महामुनेः ।
प्राणरक्षाकृते सर्वैः कृतानां महतामपि ॥ ५१ ॥

बड़े बड़े लोगोंने श्रीमहात्माजीको छुड़ानेकेलिये बड़े-बड़े प्रयत्न किये परन्तु सब निष्फल हुए ॥ ५१ ॥

अथ विद्यावयोवृद्धो वाइसरायसंसदः ।
अणेमाधवरावोऽसौ बहिर्निरसरत्तदा ॥ ५२ ॥

तब विद्यावयोवृद्ध श्रीमाधवराव अणे वाइसरायकी सभामेंसे अलग हो गये ॥ ५२ ॥

होमीमोदी च नलिनीरञ्जनोऽपि च तद्दिने ।
गांधीमहात्मनो मुक्त्यै तथैवाकुरुतामुभौ ॥ ५३ ॥

श्रीहोमी मोदी, श्रीनलिनीरञ्जन सर्कार भी उसी दिन श्रीमहात्माजीकी मुक्ति करानेकेलिये वाइसरायकी सभासे अलग हुए ॥ ५३ ॥

हिन्दूमहासभाध्यक्षः सावर्करविनायकः ।
उपवासपरित्यागं यतिराजमयाचत ॥ ५४ ॥

हिन्दूमहासभाके सभापति सावरकर विनायकने उपवास छोड़देने के लिये श्रीमहात्माजीसे प्रार्थना की ॥ ५४ ॥

परमर्षेर्यतीशस्य कायशोषो दिने दिने।
वैयग्र्यं वमनं चापि प्रतिक्षणमवर्धत ॥ ५५ ॥

इधर श्रीमहात्माजीका शरीर दिनप्रतिदिन सूखता जा रहा था। व्याकुलता और वमन प्रतिक्षण बढ़ने लगे ॥ ५५ ॥

भारते सर्वलोकानां हृदयानि महाव्यथाम्।
अन्वभूवन्परं जिन्ना सर्वथाऽप्रस्तरायत ॥ ५६ ॥

भारतमें सभी लोगोंके हृदयमें भारी व्यथा उत्पन्न हो गयी थी परन्तु केवल जिन्ना ही पत्थरके समान बने रहे ॥ ५६ ॥

क्रूरो हतदयः पापः भारतद्रोहसंरतः।
सर्वथा मौनमास्तासौ श्वेतकायपदानुगः ॥ ५७ ॥

उस क्रूर, निर्दय, भारतद्रोही और अंग्रेजोंके गुलामने सर्वथा मौन धारण कर रखा था ॥ ५७ ॥

छात्रा अध्यापकाश्चापि महाचार्यगणोऽपि च।
यतीशप्राणरक्षायै प्रार्थयन्त महेश्वरम् ॥ ५८ ॥

छात्र, अध्यापक, प्रोफेसर सभोंने ही श्रीमहात्माजीके प्राणरक्षाके लिये प्रार्थना की ॥ ५८ ॥

कलिकातास्थितो लार्डविशपः प्रत्यहं भवेत्।
मोहनप्राणरक्षायै प्रार्थनेति समादिशत् ॥ ५९ ॥

कलकत्तेसे लार्ड विशपने आज्ञा दी कि महात्माजीकी प्राणरक्षाके लिये प्रतिदिन प्रार्थना की जानी चाहिये ॥ ५९ ॥

कन्यका अबलाश्चापि भारतीयाः कुलोद्भवाः।
यतेर्मुक्तिमयाचन्त लार्ड लिन्लिथगों वृथा ॥ ६० ॥

भारतीय कन्याओंने, कुलीन स्त्रियोंने भी लिन्‌लिथगोसे श्रीमहात्माजी-को छोड़ देनेकी प्रार्थना की ॥ ६० ॥

फेब्रुवर्याः पञ्चदश्यां देहल्यां राजपर्षदि ।
श्रीमत्केलिकरो मुक्तिं यतेरार्थयताऽऽग्रहात् ॥ ६१ ॥

श्रीमान्केलकरने १५ फर्वरीको राजसभामें श्रीमहात्माजीकी मुक्तिके-लिये प्रार्थना की ॥ ६१ ॥

श्रीसप्रूः कुञ्जरूश्चैव श्रीकिशोरमहोदयः ।
श्रीमुहम्मद्धुसेनश्च प्रार्थयन्ते स्म तत्र तत् ॥ ६२ ॥

श्रीसप्रू, श्रीजयकर, श्री किशोर, श्री मुहम्मद हुसेनने भी छुटकारेकी प्रार्थना की ॥ ६२ ॥

श्रीजोशी सन्तसिंहश्च श्रीलक्ष्मीकान्तमैत्रकः ।
बनर्जी कृष्णमाचार्यः प्रार्थयन्ते स्म तत्र तत् ॥ ६३ ॥

श्रीजोषी, श्रीसन्तसिंह, श्रीलक्ष्मीकान्त मैत्र, श्रीबनर्जी, श्रीकृष्णमाचार्य इन सब महानुभावोंने भी महात्माजीके छुटकारेकी प्रार्थना की ॥ ६३ ॥

बुद्धादनन्तरं जातो महात्मा मोहनः परः ।
युगस्रष्टा कथं तस्य सोढव्यो मृत्युरीदृशः ॥ ६४ ॥

भगवान् बुद्धके बाद श्रीमहात्माजी ही युगस्रष्टा उत्पन्न हुए हैं। उनका इस प्रकारका मृत्यु कैसे सह्य हो सकता है ? ॥ ६४ ॥

हिन्दुजातेर्महार्घ्याणामाकाङ्क्षाणां यतीश्वरः ।
प्रतिभाशालिनी मूर्त्तिरुपेक्ष्यः स्यादसौ कथम् ॥ ६५ ॥

हिन्दुजातिकी बहुमूल्य आकाङ्क्षाओंकी साक्षात् प्रतिभाशाली मूर्तिकी इस प्रकार उपेक्षा कैसे की जा सकती है ? ॥ ६५ ॥

भारतेऽस्मिन्पराधीने सिताङ्गानां च शासने ।
ये ये यत्नाः कृता लोकैरभवंस्ते निरर्थकाः ॥ ६६ ॥

अंग्रेजोंके राज्यमें-पराधीन भारतमें लोगोंने जो जो यत्न किये सब निरर्थक हुए ॥ ६६ ॥

कोटयश्चास्रधाराणां प्रवाहा आर्तचेतसाम् ।
नाशकन्नार्द्रतां नेतुं हृदयं शासनस्य तत् ॥ ६७ ॥

दुःखी लोगोंकी आँखोंसे बहती हुई करोड़ों अश्रुधाराएँ अंग्रेजी राज्यके हृदयको आर्द्र नहीं बना सकीं ॥ ६७ ॥

सर्वश्रेष्ठो महापुण्यो महापुरुष आत्मवान् ।
अपराधं विनैवैतां यातनां सहतेऽधुना ॥ ६८ ॥

जगत्का सर्वश्रेष्ठ महापुरुष पवित्रात्मा बिना अपराधके ही इस समय इस यातनाको सह रहे हैं ॥ ६८ ॥

स्वकीय—देशबन्धूनां श्रेयसे यत्न आस्थितः ।
अपराधः स संवृत्तः पामराणां दृशीति धिक् ॥६९॥

अपने देशबन्धुओंके कल्याणकेलिये जो प्रयत्न उन्होंने किया वह पामरोंकी दृष्टिमें, अपराध गिना गया ॥ ६९ ॥

अस्माकं पूर्वजैरेषा पवित्रा भूरुपार्जिता ।
तस्या रक्षापि पापाय कीदृगेतज्जगद्धत ॥७०॥

हमारे ही पूर्वजोंने इस भूमिको प्राप्त किया था, उसकी रक्षा भी पाप है । यह कैसा जगत् है ! ॥ ७० ॥

सच्छास्त्रेषु पुराणेषु वेदेषूपनिषत्स्वपि ।
सर्वशक्तिर्जगद्गोप्ता गीयते परमेश्वरः ॥७१॥

सर्व शास्त्रों में, पुराणोंमे, वेदोंमें, उपनिषदोंमें कहा गया है कि परमेश्वर शक्तिमान् और जगत्का नियन्ता है ॥ ७१ ॥

भारते भारतीयेषु श्वेतकायैः कृतान्बहून् ।
अन्यायान्पश्यतस्तस्य कथं हृन्न विकम्पते ॥७२॥

भारतमें भारतीयोंपर अंग्रेजों द्वारा किये गये अनन्त अन्यायोंको देखते हुए उस ईश्वरका हृदय क्यों नहीं फट जाता ? ॥ ७२ ॥

कीदृशः संभवेदीशो न्यायस्तस्य च कीदृशः ।
कीदृशी समता तस्य बुद्धौ कीदृशि तिष्ठति ॥७३॥

वह ईश्वर कैसा? उसका न्याय कैसा ? और उसकी बुद्धिमें रही हुई समता कैसी ? ॥ ७३ ॥

सर्वेषां चेत्पिता सोऽस्ति मानवानां कथं तदा ।
स पश्यति सदा मूकः सबलैरबलान्हतान् ॥७४॥

यदि वह सभी मनुष्योंका पिता है तो वह चुप हो कर बलवानोंद्वारा निर्बलोंको मार खाते कैसे देखता है ॥ ७४ ॥

सर्वत्रैव विलोक्यन्ते बलवन्तो निरङ्कुशाः ।
कीदृशी सृष्टिरक्षाऽसौ कीदृशो रक्षकश्च सः ॥७५॥

सर्वत्र यही देखनेमें आता है कि निर्बल बलवानोंका मार खाते हैं । यह कैसी सृष्टिकी रक्षा है ? और कैसा वह रक्षक है ! ॥ ७५ ॥

उपास्ते सततं यस्तं मनसा कर्मणा गिरा ।
तस्मिन्दण्डनिपाताय कृतबुद्धिं तमस्तु धिक् ॥७६॥

मन, कर्म और वचनसे जो सदा उसकी उपासना करता है उसीपर दण्डप्रहार करनेके लिये उद्यत उस ईश्वरको धिक्कार है ॥ ७६ ॥

श्रमेणोपार्जयन्त्यन्नं भारतीयाः कृषीवलाः ।
तांस्तत्पुत्रकलत्रादीन्पश्यन्तं धिक् क्षुदर्दितान् ॥७७॥

भारतीय किसान श्रम करके अन्न पैदा करते हैं तो भी भूखसे पीड़ित वह और उनके बाल-बच्चे मरते हैं । और ईश्वर उन्हें इस-प्रकार मरते देखता है । धिक् ॥ ७७ ॥

निष्पापाँस्ताड्यमानान्यः सैनिकै राजपूरुषैः ।
पश्यतोपि दया यस्य नास्ति तं धिङ् महेश्वरम् ॥७८॥

सर्कारके लश्करी सिपाही निरपराधियोंको मारते रहते हैं । ईश्वर इसे देखता रहता है तो भी उसे दया नहीं आती है । धिक् ॥ ७८ ॥

वस्तुतो न जगत्कर्ता रक्षिता नास्ति कश्चन।
मूढैर्मूढतरैर्लोकैर्जगदीशः प्रकल्पितः ॥७९॥

वस्तुतः जगत्का न तो कोई कर्ता है और न रक्षक है। मूर्ख लोगोंने एक जगदीश मान लिया है ॥ ७९ ॥

यमिना मोहनेनायं स्वीकृतो जगदीश्वरः।
वञ्चमूर्खप्रजाक्लृप्तमतिशेते महेश्वरम् ॥८०॥

श्रीमहात्माजी भी ईश्वरको मानते हैं। परन्तु इनका अभिमत ईश्वर मूर्खोंके ईश्वरसे कहीं अधिक श्रेष्ठ है ॥ ८० ॥

अस्मिन्पिशाचराज्येसौ जगद्वन्द्यो यतीश्वरः।
तीव्रे तपसि शान्तात्मा जातो ध्यानधराधरः ॥८१॥

इस राक्षसराज्यमें जगद्वन्दनीय श्रीमहात्माजी तीव्रतपस्यामें ध्यान लगाकर बैठ गये ॥ ८१ ॥

तपसा तस्य भूकम्पः सर्वैरेवान्वभूयत।
ब्रैटिशः सचिवो रुग्णश्चर्चिलः सहसा तदा ॥८२॥

उनकी तपस्यासे पृथिवी काँप उठी, इसका सबने ही अनुभव किया। ब्रिटिश मन्त्री चर्चिल उस समय अकस्मात् बीमार हो गया ॥ ८२ ॥

आम्रीको रुजवेल्टोपि रोगशय्यां गतस्तदा।
अधःपातस्तु सर्वेषामङ्ग्रेजानामजायत ॥८३॥

अमेरिकाके सर्वाध्यक्ष रुजवेल्ट भी रोगी होकर चारपाईमें पड़े। सर्व अंग्रेजोंका अधःपतन होने लगा ॥ ८३ ॥

यतिस्तु सहसा प्रापदुग्रस्य तपसः फलम्।
आत्मशुद्धिं च तादात्म्यं मित्त्रामित्त्रैः सहाखिलैः ॥८४॥

और श्रीमहात्माजीने तो अपनी तपश्चर्याका आत्मशुद्धिरूप फल तथा शत्रु और मित्र सबके साथ समतारूप फल प्राप्त किये ॥ ८४ ॥

विशुद्धोपि महात्मासौ समोप्यर्यनरिष्वथ ।
विशुद्धयै च समत्वाय तपस्यन्केन वार्यताम् ॥८५॥

श्री महात्माजी स्वयं विशुद्ध थे, और अरि और अनरि = शत्रु और मित्रमें समभाववाले भी थे तथापि विशुद्धि और समताके लिये तपस्या करनेसे उन्हें कौन रोके ? ॥ ८५ ॥

शनैः शनैर्व्यतीतास्ते दिवसा एक विंशतिः ।
सुप्रभातं च सम्पन्नं भारतं दृष्टवत्तदा ॥८६॥

धीरे धीरे वह २१ दिन बीत गये । भारतने सुप्रभातका दर्शन किया ॥ ८६ ॥

ज्वलन्महानलज्वालाविलासैः परिषेवितः ।
काञ्चनी प्रतिमेवायं दीप्यते दग्धदूषणा ॥८७॥

सुलगती आगमें जैसे सोना निर्दोष होकर दीप्यमान होता है वैसे ही श्रीमहात्माजी दीप्यमान हो रहे थे ॥ ८७ ॥

दीपितं भारतं तेन तपसा दीपितं जगत् ।
अधिकं मलिनं जातं केवलं शासनं यशः ॥८८॥

उन्होंने भारतको दीप्यमान किया, सारे जगत्को दीप्यमान बनाया, केवल सर्कारकी कीर्ति ही मलिन बनी ॥ ८८ ॥

निर्विघ्नं तत्तपः पूर्णं हृदयानि बहूनि च ।
हर्षोद्गमैः प्रपूर्णानि पूर्णा हर्षैर्दिशो दश ॥८९॥

निर्विघ्न वह तपस्या पूरी हुई । सबके हृदय हर्षसे पूर्ण हुए और दशों दिशाएँ जयजयकार से पूर्ण हो गयीं ॥ ८९ ॥

भारते निखिलेष्वेव ग्रामेषु नगरेषु च ।
प्रतिवीथि प्रतिवर्त्म दीपमालाः प्रभासिताः ॥९०॥

भारतके गाँव गाँवमें, नगर नगरमें, गली गलीमें, रास्ते रास्ते दीपमाला सजायी गयी ॥ ९० ॥

दीनेभ्यो भोजनं तस्मिन्दिने सर्वैर्दीयत ।
सश्रद्धं प्रवहत्प्रेमधारं हर्षसमाकुलैः ॥९१॥

सबके हृदयोंमें प्रेमकी धारा बह रही थी । लोगोंने उस दिन श्रद्धाके साथ गरीबोंको भोजन कराया ॥ ९१ ॥

त्रिलोकीमाऽनुतैवास्य जयघोषो महात्मनः ।
दारयन्हृदयान्येव हीनानां हीनकर्मणाम् ॥९२॥

पापियों और पापकर्मकरनेवालोंके हृदयोंको फाड़ता महात्माजीका जयघोष तीनों लोकोंमें व्याप्त हो गया ॥ ९२ ॥

यतेरेव प्रतापेन कोटीनां सन्नृणां पुनः ।
मनोभावबलेनापि संजातः सत्त्वसंजयः ॥९३॥

करोड़ों मनुष्योंके मनोबलसे तथा महात्माजीके प्रतापसे सत्त्वका—सत्यका विजय हुआ ॥ ९३ ॥

मीरा प्रभावती देवी कुमारी बालिका मनुः ।
दिव्या सरोजिनी देवी सुशीला वैद्यसन्मणिः ॥ ९४ ॥

श्री मीरा बहिन, प्रभावती देवी, कुमारी मनु गांधी, श्रीमती सरोजिनी देवी नायडू, श्रीमती डॉक्टर सुशीला—॥ ९४ ॥

एताः सर्वा महादेव्यः कारायां यतिना सह ।
तपस्विना तपस्यन्ति तपस्विन्योधुनापि च ॥ ९५ ॥

जेलमें तपस्वी श्री महात्माजीके साथ यह सब महादेवियाँ अभी भी तपस्या कर रही हैं ॥ ९५ ॥

प्यारेलालश्च शान्तात्मा तस्य मन्त्रित्वमावहन् ।
अधिकारं समं तेन तच्छायेव वितिष्ठते ॥ ९६ ॥

श्रीयुत प्यारेलालजी भी महात्माजीके मन्त्रिपदको सुशोभित करते

हुए जेलमें उनके साथ ही उनकी छायाके समान विद्यमान हैं ॥ ९६ ॥

पारिजातापहाराख्यं महाकाव्यमनुत्तमम् ।
सत्यवृत्तं भवद्वृत्तं दृष्ट्वा ज्ञात्वा मयारचि ॥ ९७ ॥

जिसका सभी वृत्तान्त सत्य है और जिसका वृत्तान्त अभी चल ही रहा है ऐसे इस पारिजातापहार काव्यको, मैंने आँखों देखकर और कितने ही वृत्तान्तोंको जानकर, रचा है ॥ ९७ ॥

नभोनभोनभोनेत्रमिते वैक्रमवत्सरे ।
पौर्णमास्यां तिथौ पुण्ये मधोर्मासस्य धर्मदम् ॥ ९८ ॥

वसन्नहम्मदाबादे माणिकलालमाश्रितः ।
हरिलालाङ्गजं धन्यं ग्रन्थमेतं समापयम् ॥९९॥

विक्रम् संवत् २००० के चैत्र मासकी पौर्णमासीको श्री० सेठ माणेकलाल हरिलाल शाहके आश्रममें अहमदाबादमें रहते हुए मैंने इस धार्मिक ग्रन्थकी रचनाकी समाप्तिकी थी ॥ ९८ ॥ ९९ ॥

इदानीमपि तत्रैव स्थित एव तथाविधः ।
सर्वथा परिवर्त्यैतं ग्रन्थं मुद्रापयाम्यहम् ॥१००॥

अब भी मैं अहमदाबादमें ही उसी प्रकारसे वहाँ ही रहकर इस ग्रन्थको सर्वथा परिवर्तित करके पुनः छपा रहा हूँ ॥ १०० ॥

पूर्वमेतन्महाकाव्यमनुष्टुब्भिर्विभूषितम् ।
इदानीं विविधैर्वृत्तै विधिवद्भूषयाम्यहम् ॥१०१॥

पहले यह महाकाव्य केवल अनुष्टुप् छन्दोंमें ही था। अब इसे विविध छन्दोंसे विभूषित कर रहा हूँ ॥ १०१ ॥

विक्रमादित्यराजस्य नागखखक्षिवत्सरे ।
वैशाखकृष्णसप्तम्यामेतमावर्तये पुनः ॥१०२॥

विक्रम संवत् २००८, वैशाख कृष्ण सप्तमीको इस ग्रन्थकी मैंने पुनरावृत्ति करायी है ॥ १०२ ॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे
एकोनत्रिंशः सर्गः

श्रीसाकेतपुरी ललामललनालीलैकसत्साधनं,
श्रीमद्रामममनोहरार्यचरणाम्भोजेषु भृङ्गायितः ।
रागद्वेषकुलानलो भगवदाचार्यः सुधीः सद्व्रती,
कृत्वा काव्यमिदं यतिः स्वहृदयं शान्तिं परां प्रापयत् ॥१०३॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातापहारे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
एकोनत्रिंशः सर्गः ।

